# DARSANODAYA

BY

MAHAMAHOPADHYAYA PANDITARATNAM
ASTHANA DHARMADHIKARI
LAKSHMIPURAM SRINIVASACHAR

WITH A FOREWORD IN ENGLISH

BY

SIR S. RADHAKRISHNAN, M.A., D.Litt.
VICE-CHANCELLOR, ANDHRA UNIVERSITY.



PRINTED AT MYSORE
BY THE ASST. SUPDT GOVT. BRANCH PRESS,
1933.

॥ श्रीः ॥

# दर्शनोदयः

## सकलदर्शनमूलसारसंग्रहरूपः

सुगृहीतनामधेयस्य स. राधाकृष्णमहाशयस्य प्रस्तावनासमलङ्कृतः




महामहोपाध्यायस्य, पण्डितरत्नस्य, आस्थान धर्माधिकारिणः
लक्ष्मीपुरं श्रीनिवासाचार्यस्य


कृतिः.




मैसूरु
राजकीय शाखामुद्रालये मुद्रापितः
१९३३.

॥ श्रीरस्तु ॥

# अङ्कितम्



तत्त्वचिन्तोत्साह दैवभक्ति दाक्षिण्यशालिनः ।
कृष्णराजो यशोद्योतः तृतीयः चन्द्रसूर्ययोः ॥

श्रीमद्राजाधिराज महीसुरमहाराज तुरीय श्रीकृष्णराजस्य
सविधे
उपायनीकृतोऽयं प्रबन्धः
## दर्शनोदयः



महीसुरमहीधुर्य तुर्य श्रीकृष्णभूपतेः ।
कीर्तिकेतुः विजयतां प्रबन्धो दर्शनोदयः ॥

तत्सौशील्येनैव शुद्धं तेनैव प्रचयं गतम् ।
किंकुर्वत् जगतां नित्यमेतत् पुस्तुकमस्तु शम् ॥

इति
निवेदयिता
लक्ष्मीपुरं श्रीनिवासाचार्यः



## FOREWORD.

MAHAMAHOPADHYAYA Panditaratnam Lakshmipuram Srinivasachariar has desired me to write a foreword to his excellent work. I have had the great privilege of studying some works on Viśiṣṭādvaita Philosophy with him when I was at Mysore, and from my personal knowledge I can testify to his vast erudition and critical insight. In Mysore, Mr. Srinivasachariar, who is a master of our Scriptures, has established a great and beneficent influence of a kind which has more substance than show, through his many pupils. What strikes me as somewhat out of the way about him is his courtesy to the opponents' views, which he combines with strength of conviction. Generally, a Pandit finds it difficult to shake off a certain inflexibility. His attitude to the other man's view remains somewhat obdurate. But here is a Pandit who can appreciate even the views he does not share and give them a square deal.

This book attempts a reconciliation of the different philosophical theories and offers a justification for them. Such a reconciliation, I need not say, is most opportune at the present moment, when our thought and belief are undergoing transformations, deeper and more disturbing than any in recent times. If there is one feature more than another, which characterises Hindu thought, it is

its hospitality to the different conceptions of reality. Man's attempt to comprehend the truth, which is limitless, is bound to result in different views. To take our stand on one limited view and make it adequate to the vast reality is the mistake which all dogmatists make. The acceptance of a limited view becomes a barrier to the understanding of truths. A seeker should recognise the immensity of reality and the inadequacy of limited views and formulas. Our author has an adequate appreciation of this fundamental fact.

Religion for the Hindu is personal experience or realisation. It is life. Deep faith in and steadfast devotion to the Supreme in any of its forms takes us beyond the imperfect and the painful and leads us to the peace and power, characteristic of the religious soul. Whatever be our religious belief, if our heart and mind participate in the effort to know, and if we worship in spirit and in truth, the goal is easy to reach.

The author is an earnest student of Viśiṣṭādvaita Philosophy. In this book he points out its great antiquity and offers a commentary on the great Classic of this School, *Śrībhāṣya.* I have no doubt that all students of this branch of Hindu Philosophy will find this book invaluable.

Many other interesting problems are discussed in the course of the book. For example, it is contended that *Śunyavāda* and *Sānkhya Darśana* are the two extremes and the other systems represent compromises of these opposite views. The different conceptions of

causality, which are bound up with the different metaphysical doctrines, are elaborated with great care and learning.

I feel that I am justified in saying that the book gives a comprehensive account of the different systems of Indian Philosophy. Throughout, the author takes his stand on the original texts of which he is an accomplished master, though lengthy quotations are avoided. Doctrinal discussions are summarised in a vivid and condensed form. I have no doubt that the book will serve as a valuable guide to the student.

It is a pleasure to know that His Highness the Maharajah of Mysore with his enlightened interest in Indian Philosophy and deep devotion to Hindu religion is making the publication of such works possible. Seekers of truth at home and abroad are greatly indebted to him for his example as well as encouragement.

S. R.

# प्रबन्धविभागः

# उपोद्घातः

---

नास्ति विद्यासमं चक्षुः नास्ति सत्त्वसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥
(महाभा. शा. ३२९)

सम्बन्धः

अथेदानीं दर्शनोदयाभिधानोऽयं प्रबन्धः प्रपञ्चविषये शून्यतावादं सत्यतावादं मध्यस्थतावादं च प्राधान्येन सामुद्दिश्य विचारं प्रवर्तयितुं प्रयतते । तत्र चाद्ययावत् समुपलभ्यमानानां प्रायेण संवत्सराणांसहस्रात्प्राचीनानां प्रामाणिकत्वेन तैस्तैर्वादिभिः परिगृहीतानां प्रचयीकृतानांसह च प्रबन्धानां तात्पर्यं सम्यगवधार्य प्रकाशीक्रियते इति नानादर्शनानामयनानि असन्दिग्धानि परिज्ञातानि भवितुमर्हन्ति जिज्ञासाविशेषशालिनामविदुषामपि किमुत विदुषाम् ॥

प्रयोजनम्

एवंरीत्या क्रियमाणे विचारे गृहीतग्राहितानिबन्धनदुरभिनिवेशस्य निरन्वयविलयात् स्वकीयसम्प्रदायसमागते दर्शनेऽनादरमन्तरेण सात्त्विकी श्रद्धा समुदेति । परकीयेष्वपि दर्शनेषु ईर्ष्यासूयादिकमपसरति । विलसति च विशुद्धा च शान्तिः । एवमनेकविधानां दर्शनानां विभिन्नदृष्ट्या विभिन्नरुच्या च प्रवृत्तानां परिष्कृतानां परिष्क्रिय-

माणानां च परिज्ञाने कालदेशविचारात्मकं चरित्रविज्ञानपदाभिधेयं लोकपर्यायवृत्तान्तपरिज्ञानमपि प्रसिद्ध्यति प्रयोजनम् ॥

एवंविधानां विविधानां दर्शनानां विषये दोषचिन्तां तिरस्कृत्य गुणाचिन्तां पुरस्कृत्य समीक्षायां सत्यां विज्ञानमार्गैः प्रपञ्चस्योपकारं शान्तिलक्षणं कीदृशं कियन्तं चारीरचन् पूर्वाचार्याः प्राचीना इति आश्चर्येण वशीकृता भवन्ति प्रायेण विवेकशालिनः पुरुषाः । तेन च लौकिकसम्पदपेक्षया लोकोत्तरायामस्यां विद्याभिधानायां सम्पदि व्यक्ती भवति विद्यमानोऽतिशयः । ततश्च सर्वलोकयोगक्षेम इत्यत्र नास्ति बहु वक्तव्यमस्माकम् ॥

अधिकारी

अपि च प्रकृतेस्मिन् समये मनुष्याणां लौकिकसुखसम्पदामुपकरणान्यतिचित्राणि प्रत्यहं प्रवर्धमानानि समुपलभामहे । ततश्च प्रायेण सर्वेषां मानवमानसानां विविधविक्षेपपरिपूर्णानामैकाग्र्यनामकं व्यवधानमतिदुर्लभदशामापद्यते । तदनुगुणः ह्रासोऽप्यायुरारोग्यादेः सम्पद्यते । तथापि सङ्कुचिते काले विकसितविषयाणां जिज्ञासाऽपि विशाला विलसति । तस्माद्भिनैव लौकिकव्यापाराणामुपरोधं सारांशविज्ञानाय एतादृशदेशकालदशानुसारेणेदृशानां प्रबन्धानामवतरणमावश्यकमित्यस्माकं युक्तः प्रकरणप्रक्रमः ॥

विषयः

अत्रत्या विषयाः विस्तरेण सूचीपुटे प्रकटीकृताः । संक्षेपतस्सारस्त्वेषः—इह किलाधुना प्रपञ्चे सुखपदवाच्यं किंचिदनुकूलतया वेदनीयं स्वस्वभावनापरपर्यायवासनानुरोधेन अतिविचित्रतयाऽनुभूयमानसमानमेवाभिवाञ्छन्ति प्रायेण सर्वेऽपि प्राणिनः । तत्रापि परां काष्ठामपुनरावृत्तिमतीमिहन्तेऽभिसंप्राप्तुम् । तत्रचोपायमन्वेषमाणाः तेषां तेषा

तत्त्वदर्शिनामनुभवापरपर्यायं संप्रदायं समाद्रियमाणाः कथंचिदनुतिष्ठन्तो दृश्यन्ते । एवंविधैः विविधैः मार्गैः परस्परविरोधिभिरपि प्रतिष्ठमानाः सर्वविधदुःखनिदानभूतं देहेन्द्रियादिविशोषकरं सर्वास्वपि संपत्सु समृद्ध्यमानास्वपि निरतिशयदुःखकरं रागवेगमेवादौ समुन्मूलयितुं प्रयतन्ते सर्वेऽपि परीक्षका इव दार्शनिकाः ॥

चार्वाकसिद्धान्तः

तत्र स्वभाववादापरनामकमाकस्मिकतावादं बुद्धिमन्निदर्शनो बृहस्पत्याचार्यः प्रवर्तयामास । तत्र दैवशिरसीव स्वभावशिरसि सर्वभारसमारोपात् पौरुषो रागः तदनुगुणः प्रयत्नो वा निष्प्रयोजन इति परित्यक्तव्य इत्येव च चार्वाकसिद्धान्तसारांशः । अतएव महाभारते कण्वाश्रमवर्णनप्रकरणे लोकायतशास्त्रप्रवीणाः विद्वांसः तस्मिन्नाश्रमे इतरशास्त्रप्रवीणैस्सह समुषिता इति विज्ञायते "लोकायतिकमुख्यैश्च" इत्यादिभिर्वचनैः । तस्मात्तदपि दर्शनं पुराबृहस्पतिनाम्ना बुद्धिमत्प्रवरेण केनचिद्विदुषा रागत्यागाय प्रवर्तितं प्रचयं गतमासीदित्यवधार्यते ॥

तत्र हि तत्त्वविषये प्रत्यक्षप्रमाणप्रसिद्धं बाह्यं भूतचतुष्टयात्मकं अचेतनमेकमेव तत्त्वम् । तेषां भूतानां संयोगविशेषेण कायाकारपरिणतानां शक्तिविशेषलक्षणं आन्तरपदाभिधेयं ज्ञानादिपदवाच्यमाविर्भवतीत्युच्यते । ज्ञानं नाम किञ्चिद्वस्तु काचिच्छक्तिर्वा सर्वथा सर्वैरप्यङ्गीक्रियत एव । तथाहि विद्यमानः घटादिः कस्यचिदेव व्यवहारयोग्यतामापद्यते न सर्वेषां नापि सर्वदा । तदवश्यं यो यदा येन व्यवहरति तस्य तदा तस्मिन् व्यवहारानुगुणः कश्चिदतिशयस्सञ्जात इति कल्पनीयः । स एव ज्ञानपदवाच्यः । तस्य लक्षणं कारणं विभाग इत्यादिका महती कथा ॥

इदमत्र चार्वाक तत्त्वम्—ज्ञानस्योत्पादिका या सामग्री शरीरार्थेन्द्रियसन्निकर्षालोकादिलक्षणा, तयैव व्यवहारोपपत्तेः ज्ञानपदवाच्यः पदार्थः सामग्र्येव, नातोऽतिरिक्तः कश्चित्पदार्थ इति । अतएव देहगतः पित्तधातुः ज्ञानपदार्थः प्रकाश इति वैद्यशास्त्रमपि सङ्गच्छते इति ॥

तथाच चतुर्विधाचेतनतत्त्वरूपभूतात्मकमेवेदं विश्वमिति चार्वाकनामकबार्हस्पत्यसिद्धान्तः ॥

हिरण्यगर्भसिद्धान्तः.

तस्य चैतस्य सिद्धान्तस्य प्रतिपक्षभूतः चेतनमात्रतत्त्वसिद्धान्तः हिरण्यगर्भसिद्धान्तः । तत्र हि चैतन्यलक्षणं हिरण्यगर्भाख्यं जीवपदवाच्यमेकमेव तत्त्वं विश्वात्मना परिणमते इत्यभ्युपगमः । अतएव पृथिव्यादिविकारक्षीरदध्याद्यात्मकं सर्वं वस्तु अल्पेनैव कालेन पूतरक्रिमिमयमुपलभ्यते । पुत्तिकामृदेव वर्षासमये शलभमयं परिणमते । अतोऽनुद्भूतचैतन्यमचेतनमिति व्यवह्रियते, सर्वं चेतनमयं चेतनमेकमेव तत्त्वमिति हैरण्यगर्भसिद्धान्तः ॥

साङ्ख्यसिद्धान्तः.

ततस्सांख्याः चेतनतत्त्वमचेतनतत्त्वञ्चेति तत्त्वद्वयमङ्गीकृत्य स्वभाववादं बार्हस्पत्यसिद्धान्तमेव परिष्कुर्वन्तः सर्वशून्यवादस्य साक्षात्प्रतिपक्षतया सर्वसत्यवादं समाश्रयन्तः लोकयात्रां निर्वहन्ति । ततस्तृतीयमपि तत्त्वमीश्वराख्यमङ्गीकुर्वन्तः पातञ्जलास्सेश्वरसांख्याभिधानाः सांख्यप्रवचनापराभिधानाः तत्त्वत्रयवादिनो बभूवुः ॥

वेदान्तसिद्धान्तः

ततश्चानेकतत्त्ववादिनः वैशेषिकार्हतप्रभृतयः सिद्धान्ताः प्रक्रान्ताः । तेषामन्योन्यं वैलक्षण्यं प्रायः प्रसिद्धमेव सर्वेषाम् । एवमौपनिष-

दोऽपि कश्चित्सिद्धान्तः अनादिपरंपराप्रसिद्धः विश्वविदित एव ब्रह्मैक-तत्त्ववादः । तदेकमेव ब्रह्माख्यं तत्त्वं सल्लक्षणं बोधलक्षणं चेतिद्व्याकारं, तत्परिणामभूतमिदं विश्वमिति प्राचीनो ब्रह्मवादः । स एव भर्तृप्रपञ्चभास्करादिभिः परिगृहीतः परिष्कृतः प्रचयीकृतश्च ॥

तथा तदेकमेव सन्मात्रलक्षणं ब्रह्म चेतनाचेतनेश्वरात्मकशक्तित्रययुतं विश्वात्मना व्यक्तीभवतीति यादवप्रकाशप्रभृतिभिः परिगृहीत-सल्लक्षणब्रह्मवादः । तत्रैव चेतनाचेतनेश्वरात्मकधातुत्रयसंघातलक्षणमेव ब्रह्मेति रामानुजाचार्यपरिष्कारः ॥

सल्लक्षणमेव ब्रह्माविद्यालक्षणोपाधिवशाच्चेतनाचेतनेश्वररूपेण विवर्तत इति मण्डनमिश्रादयः । स एव संप्रदायः शङ्करादिभिः सद-भिन्नबोधलक्षणमिति परिष्कृत्य प्रकाशितः ॥

पूर्णप्रज्ञादिभिस्तु तत्त्वत्रयवादवदेवानेकतत्त्ववादः परिगृहीतः । तत्र स्वतन्त्रतत्त्वं परतन्त्रतत्वं चेति विभज्य विचारः प्रक्रान्तः ॥

एवंविधैस्संप्रदायैरौपनिषदास्सिद्धान्तः विचित्रस्संवृत्तः । एवं दर्शनलक्षणदृष्टय इव मन्त्रकाण्डेऽपि देवतोपपरीक्षायां विचित्रा दृष्टय-इति पारस्करो यास्कः निरुक्ते वदति—"एवमुच्चावचैरभिप्रायैः ऋषीणां दृष्टयो भवन्ति" (७-१-४) इति ॥ एवं सर्वेऽपि तत्त्व-निर्णयानुसारेण उपायं फलं च निष्कर्षयन्ति ॥

### बौद्धसिद्धान्तः

सौगतसिद्धान्तस्तु निस्स्वभावं निरभिलप्यं दुर्निरूपं तत्त्वमिति । ये त्वितरैर्दार्शनिकैः निरूपिता निरूपयिष्यमाणास्सिद्धान्ताः, यच्च परीक्षकैः प्रतिष्ठापितं प्रमाणं प्रमा प्रमाता प्रमेयमित्यर्थचतुष्टयं, यदपि च

पामरैः इन्द्रियादिभिरुपलब्धमित्युच्यते वस्तुजातं तस्य सर्वस्य सर्वविध-स्यापि प्रतिषेध एव तत्त्वस्य निरूपणं लक्षणमपि ॥

तादृशस्य च तत्त्वस्य शून्यमिति व्यपदेशः। सर्वस्यापि हि लौकिकशब्दजालस्य विकल्पमूलत्वात् अलौकिकं तत्त्वं कीदृशेन शब्देन केन वा प्रमाणेन बोधयितुं बोद्धुं वा शक्येत, भावाभावादिसकलविकल्प-विकलं हि तत्। तस्य च केवलनिषेधवाचकेन तुच्छगगनकुसुमशून्या-भावादिपदैरेवोपचारः शक्यः तैमिरिकपुरुषोपलब्धकेशादिप्रतिषेधवत्। एवमुपचारेणोपदेशे कस्यचिद्विधिः नास्ति नापि कस्याप्यभ्युपगतस्य प्रतिषेधः ॥

तत्राप्येतादृशस्य सकलप्रतिषेधलक्षणस्य शून्यत्वस्य उपदेशः प्रपञ्चोपशम सर्वदृष्टिपरिक्षय सर्वसंकल्पप्रणाश सर्वाभिनिवेशपरित्यागा-दिपदवाच्यसकलविकल्परूपवासनाविरामलाभायेत्यभिप्रायः। तत्रैवंविध-शून्यताभावनाऽपि काचिन्महती वासनेति अभिनिवेशग्राहादिपदवाच्यः प्रपञ्चलक्षणः स्थिरः बन्ध एवेति कथं वासनामयप्रपञ्चोपशमलक्षणो मोक्ष इत्याशङ्क्य तैरेवेत्थं समाधानं निरूपितम्। शङ्का यथा—(बोधिचर्यावतारे)

शून्यता सर्वदृष्टीनां प्रोक्ता निस्सरणं जिनैः।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे ॥

इति। अत्र शून्यतादृष्टिलक्षणाभिनिवेशाविष्टाः न सिद्धाः किंतु बद्धा-ग्रगण्या एवेत्यभिप्रायः। समाधानं तु—

शून्यतावासनाधानाद्धीयते भाववासना।
किंचिन्नास्तीति चाभ्यासात् साऽपि पश्चात्प्रहीयते ॥

अयमभिप्रायः—नैरात्म्यलक्षणनिस्स्वभावतैव सर्ववस्तूनां निजं पारमा-

र्थिकं रूपम् । तत्रापि नाभिनिवेष्टव्यम् । अन्यथा भावाभिनिवेशो वा शून्यत्वाभिनिवेशो वा न कश्चिद्विशेषः, उभयोरपि कल्पनारूपत्वादिति । एतदर्थमेव हि विंशतिविधाश्शून्यता इत्यादिः शून्यतानिरूपणप्रपञ्चः प्रवर्तते । अयमेवार्थः बहुभिः प्रकारैरुपदिश्यते—(३०)

प्रपञ्चविनिवृत्त्येकस्वभावा या च शून्यता ।
तस्यां तु शून्यतादृष्टिरमलायां न शोभते ॥
प्रपञ्चोपशमायैव शून्यता सोपदिश्यते ।
तस्मात्प्रपञ्चोपशमश्शून्यतायां प्रयोजनम् ॥
शून्यत्वं नास्तितारूपं भवांस्तु परिकल्पयन् ।
प्रपञ्चं वर्धयन्नेव नच वेत्ति प्रयोजनम् ॥
सर्वसंकल्पहानाय शून्यताऽमृतदेशना ।
यश्च तस्यामपि ग्राहः त्वयाऽसाववसादितः ॥
अस्तित्वपूर्वकं नास्ति अस्ति नास्तित्वपूर्वकम् ।
अतो नास्ति न गन्तव्यमस्तित्वं नच कल्पयेत् ॥
अनुत्पादश्च तथता भूतकोटिश्च शून्यता ।
रूपस्य नामान्येतानि अभावं न विकल्पयेत् ।
यदा न भावो नाभावो मतेस्सन्तिष्ठते पुरः ।
तदाऽन्यगत्यभावेन निरालम्बा विनश्यति ॥

इत्यादीनि वचनानि माध्यमिकवृत्तिचतुस्तवबोधिचर्यावतारलङ्कावतारादिषु प्रदर्शितान्यत्रग्रन्थे समुदाहृतान्यवगन्तव्यानि अधिकानि च ॥ अस्य च सिद्धान्तस्य प्रत्युत्तरं बादरायणेन वात्स्यायनेन शबरेण तदनुसारिभिरन्यैश्च प्रतिपादितं मुख्यमिदमेव—सुपरिनिश्चितः प्रत्यक्षप्रत्ययः अव्यभिचरितः मुख्यो बाधकः एकः । भ्रान्तिप्रमितिलक्षणबुद्धिभेदानु-

पपत्तिः द्वितीया ॥ यतश्शून्यवादिभिरेवमुच्यते—

इन्द्रियैरुपलब्धं यत्तत्त्वेन भवेद्यदि ।
जातास्तत्त्वविदो बालास्तत्त्वज्ञानेन किं तदा ॥

इति ॥ इममभिप्रायं हृदिनिधायार्यैरेवमुच्यते—"न च शक्यमेवमवगन्तुम्, यथोपलभ्यन्तेऽर्थाः न तथा भवन्तीति । यथा तु खलु नोपलभ्यन्ते तथा भवन्तीति । तथा हि सति शशो नास्ति शशस्य बिषाणमस्तीत्यवगम्येत" (शाबरम्) इति ॥ इयमेव भ्रान्तिप्रमितिलक्षणबुद्धिभेदानुपपत्तिः ॥

उपसंहारः

अत्र सर्वेषामपि दार्शनिकानां साधारण्येनाभ्युपगताः पुनरेते दशार्थाः—अहङ्कारममकारत्यागः । सुखदुःखाभ्युपगमः । अनुभवप्रमाणीकरणम् । स्वभावसमाश्रयणम् । क्वचिदनादित्वाभ्युपगमः । क्वचिद्दुर्निरूपतावादः । स्वस्वसंस्कारानुरोधेन गुणदोषव्यवस्था । तदनुरोधेन सर्वशास्त्रतात्पर्यवर्णनम् । स्वकीयप्राचीनपुरुषवचनप्रामाण्यम् । प्रमाणमूर्धन्यतया कस्यचित्प्रबन्धस्य वेदाद्यात्मकस्य परिग्रहश्चेत्येते दशार्थाः इति शम् ॥

श्रद्धालक्षणभावनामयत्वात्पुरुषाणां निरतिशयकाष्ठागतभावनाया एव यथास्वं सिद्धिरूपत्वाभ्युपगमात् यथाभावनं सिद्धिर्भवतु कोऽत्रान्योन्यमशमस्यावकाशस्सिद्धान्तानामिति सर्वं चतुरश्रम् ॥

शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।
स एव सर्वशास्त्रज्ञः यस्य शान्तं मनस्सदा ॥

इत्यावेदयति,

**प्रबन्धप्रणेता.**

# प्रबन्धप्रधानविषयाः

# विशिष्यविषयावलिः

---

## श्रीभाष्यभूषणे प्रधानविषयाः

---



---

# श्रीभाष्यभूषणविशेषविषयाः

## अनुयोगिप्रतियोगिसंख्यासहिताः

---

# आगमसारविषयाः

---



---

# अत्र प्रसक्तग्रन्थकर्तृनामावलिः

---

## अत्र प्रसक्तप्रबन्धनामावलिः

---

# अत्र प्रसक्तवादावलिः

---

## अत्र द्रष्टव्यपदालिः

---

## अत्र द्रष्टव्यवाक्यावलिः

---

## अत्रोदाहृतपद्यप्रथमचरणावलिः

---

---

## बोधिचर्यावतारपञ्जिकोदाहृता बौद्धसिद्धान्तग्रन्थावलिः.

दर्शनोदयस्यविंशातितमपुटस्यापेक्षिता.

---

॥ श्रीः ॥

# दर्शनोदयः

मीमांसा

---

अभिवन्द्य महोदारामस्मद्गुरुपरंपराम् ।
दर्शनोदयमीमांसामपूर्वामारभामहे ॥

यस्सर्वेष्वपि दर्शनेषु परमं व्याख्यातृभावं गतः
यो वेदान्तविशिष्टतत्त्वनिगमाचार्यत्वमप्याश्रितः ।
यो लक्ष्मीपुरचक्रवर्तितिलकः श्रीकृष्णराजाश्रितः
व्यातानीदिह दर्शनोदयमिमं स श्रीनिवासाह्वयः ॥

ये ह्यासन्निह दर्शनप्रवचनाचार्या दयाशालिनः
तेषामाशयनिर्णयः सुविशदं तद्वाग्विशेषैः कृतः ।
ते तुष्यन्तु तथा तदीयपदवीनिष्ठाश्च धीमद्वराः
तेनैतेन कृतेन हृष्यति पुनः श्रीवासुदेवः स्वयम् ॥

यथा सामान्यतः देशः कालो दशा च त्रिधा विज्ञायते । तथा शास्त्रमपि उपदेश व्याख्यान विचाररूपेण त्रिविधमिति पूर्वाचार्यास्सूचयन्ति । तत्राद्यं—"अथ शब्दानुशासनम्, अथ योगानुशासनम्" इत्यादिकमनुशासनपदघटितप्रारम्भकम् । द्वितीयं—"अथातो दर्शपूर्णमासौ व्याख्यास्यामः, अथातस्सामयाचारिकान् धर्मान् व्याख्यास्यामः" इत्यादिकं व्याख्यापदघटितप्रारम्भकम् । तृतीयं तु—"अथातो धर्म-

जिज्ञासा, अथातो ब्रह्मजिज्ञासा" इत्यादिकं जिज्ञासापदघटित-प्रारम्भकम् ॥

तृतीयमेव न्यायनिबन्धनात्मकं शास्त्रम्, मीमांसाशास्त्रमित्युच्यते। "मीमांसाशास्त्रं च न्यायनिबन्धनरूपम्" इति प्रकरणपञ्चिकायां शास्त्र-मुखे प्रतिपादितम्। तथाचोक्तं न्यायवार्तिकतात्पर्यटीकायाम्—

मीमांसासंज्ञकस्तर्कस्सर्वो वेदसमुद्भवः।
सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवत् ॥

पूजितविचारवचनो हि मीमांसाशब्दः। अयुक्तप्रतिषेधेन युक्ताभ्यनु-ज्ञानं तर्कः। प्रमाणेतिकर्तव्यतात्वेन च प्रमाणाद्भेदादभेद उक्तः सोऽतो वेद इति ॥ (४१ पु.)

तथाच उपदेशकालं व्याख्यानकालं च अनादृत्य विचारकालानु-रोधेन प्राचीनग्रन्थपरामर्शमुखेनैव विचारोऽत्र चिकीर्षितः। यत उच्यते वाक्यपदीये—(२–४९३)

प्रज्ञाविवेकं लभते विभिन्नागमदर्शनैः।
कियद्वा शक्यमुन्नेतुं स्वयत्नमनुधावता ॥

तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना।
अनुपासितवृद्धानां विद्या नातिप्रसीदति ॥ इति ॥

तत्रापि—

एकं यदि भवेच्छास्त्रं ज्ञानं निस्संशयं भवेत्।
बहुत्वादिह शास्त्राणां ज्ञानतत्त्वं सुदुर्लभम् ॥

इति नारायणीये उक्तत्वेऽपि—

यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः।
न स जानाति शास्त्रार्थं दर्वी पाकरसं यथा ॥

इति विदुरनीतिवचनानुरोधेन विचारः कर्तव्यः ॥

तत्राप्यत्र विचारे परीक्षकैः तात्पर्ये परं दृष्टिर्विधेया न तु शब्दार्थे केवले । यतश्च प्रोक्तं कुमारिलेन वार्तिकारम्भे—

**नचात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।**
**दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ इति ॥**

## दर्शनोद्देशः.

सर्वेषां दर्शनानामिदं खलु परममुद्देश्यम्—यद्रागादिदोषवर्जनमिति । तथाहि—(महाभारतम्)

**शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।**
**स एव सर्वशास्त्रज्ञः यस्य शान्तं मनस्सदा ॥**

**यत् श्रुतं न विरागाय न धर्माय न शान्तये ।**
**सुबद्धमपि शब्देन काकवाशितमेव तत् ॥**

इत्यादि ॥

तथा—तन्त्रवार्तिके–(८१ पु.) "विज्ञानमात्र क्षणभङ्ग नैरात्म्य वादानामपि उपनिषत्प्रभवत्वं विषयेष्वात्यन्तिकं रागं विनिवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्", इत्युक्तम् ॥

एवंसति तत्र यदि दार्शनिका एव परस्परं दर्शनेनैव निमित्तेन रागद्वेषपरिग्रहवन्तो भवन्ति ततो हास्यतरं लोके किञ्चिदन्यन्न विद्यते इत्यापाततः यद्यपि प्रतिभाति । वस्तुतस्तु तत्तद्दर्शनमूलपुरुषाणां महतां वचस्सु परामृश्यमानेषु दर्शननिमित्तरागद्वेषशून्यत्वं स्वस्वदर्शनस्य स्पष्टमभिहितमवगम्यते ॥

बुद्धदर्शने बोधिचर्यावतारपञ्चिकायाम्—

**आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।**
**उभयोस्संप्रतिवद्धाः सर्वे भावाः प्राजायन्ते ॥ ४९२ पु. ॥**

सर्वसंकल्पहानाय शून्यताऽमृतदेशना ।
यश्च तस्यामपि ग्राहः त्वयाऽसाववसादितः ॥ ३५९

(त्वया भगवता बुद्धेनेत्यर्थः । चतुस्तववचनमिदम् ॥)

शून्यता सर्वदृष्टीनां प्रोक्ता निस्सरणं जिनैः ।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे ॥ ४१४

प्रपञ्चविनिवृत्त्येकस्वभावा या च शून्यता ।
तस्यां तु शून्यतादृष्टिरमलायां न शोभते ॥ माध्य-वृत्तिः ॥

एवं शून्येषु धर्मेषु किं लब्धं किं हृतं भवेत् ।
सत्कृतः परिभूतो वा केन किं सम्भविष्यति ॥ ५९०

इति उदाहृतैर्वचनैः सर्वविधा दृष्टयः संकल्परूपा अभिनिवेशलक्षणाः परिहर्तव्याः । सर्वाभिनिवेशरूपस्य रागद्वेषादिलक्षणस्य परित्यागायैव शून्यत्वोपदेशः । तत्र शून्यत्वोपदेशे लब्धेऽपि अभिनिवेशः न शान्तश्चेत् उपदेशो व्यर्थ एवेति स्पष्टमुच्यते । एवं स्वसिद्धान्ते एव अभिनिवेशं निषेधन् सिद्धान्तः अन्यसिद्धान्ते द्वेषस्यावकाशं कथं दास्यतीति सिद्धन्तविरोधेन निमित्तेन द्वेषो नास्तीत्युक्तं भवति ॥

आर्हतदर्शने सर्वदर्शनसंग्रह वचनमिदमवधेयम्—

अन्योन्यपक्षप्रतिपक्षभावात्परस्परं मत्सरिणः प्रवादाः ।
नयानशेषानविशेषमिच्छन्नपक्षपाती समयस्तथाऽऽर्हतः ॥

इति । अनेन वचनेन स्वदर्शनस्य दर्शनान्तरविरोधगन्ध एव नास्तीति स्फुटमुक्तं भवति ॥

अद्वैतदर्शने माण्डूक्यकारिकायामद्वैतप्रकरणे—

स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।
परस्परं विरुध्यन्ते तैरयं न विरुध्यते । इति ॥

अत्रैवं श्रीशाङ्करं भाष्यं—एवं रागद्वेषोपेताः स्वस्वसिद्धान्तदर्शन-निमित्तमेव परस्परं विरुद्धयन्ते। तैरन्योन्यविरोधिभिः अस्मदीयोऽयं वैदिकः सर्वानन्यत्वादात्मैकत्वपक्षः न विरुध्यते। यथा स्वहस्त-पादादिभिराघाते जातेऽपि पुरुषो यथैक्यज्ञानेन न क्रुध्यत्येवमस्मिन् दर्शने दर्शनान्तरनिमित्तद्वेषादिर्नास्तीत्यभिप्राय इति ॥

विशिष्टाद्वैतदर्शने—सर्वस्य ब्रह्मात्मकत्वमुच्यते। ब्रह्मात्मकत्वं नाम सर्वस्य ब्रह्मशरीरत्वम्। तथाचात्मन इव परेषामपि विश्व-रूपभगवद्रूपत्वानुसन्धाने कथं वैरावतारः, एकशरीरावयवन्यायात्। इति ॥ (तात्पर्यचन्द्रिका ११–५५)

एवमसौ सर्वानुकूल्यसिद्धान्त इत्यप्युच्यते। प्रपञ्चे परिदृश्य-मानं सर्वं सर्वशेषिणो भगवतः निरतिशयमनुकूलम्। तत्र किंचिल्लीला-रसानुकूलं किञ्चिद्भोगरसानुकूलम्। एतादृशसिद्धान्तनिष्ठावतो भागवत-स्यापि भगवत इव सर्वं अनुकूलमेव। एवंस्थिते प्रातिकूल्यभावनाया एवाभावात् कथं परकीयसिद्धान्ते प्रद्वेष इति ॥

एवं विशुद्धाद्वैत-विशिष्टाद्वैतसिद्धान्तयोः एकशरीरावयवन्याय एवानुसृत इति विज्ञायते। इमं च न्यायं बाह्या अप्येवमुपदिशन्ति—(बोधिचर्या. ३२८ पु.)

**हस्तादिभेदेन बहुप्रकारः कायो यथैकः परिपालनीयः।**
**तथा जगद्भिन्नमभिन्नदुःखसुखात्मकं सर्वमिदं तथैव ॥ इति ॥**

अन्ततश्चार्वाकदर्शनमपि शान्तिमेव बोधयतीति विजानीमः—

**सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते।**
**स्वभाववादिभिस्ते च नाहुः स्वमपि कारणम् ॥**

**राजीवकेसरादीनां वैचित्र्यं कः करोति हि ।**
**मयूरचन्द्रिकादेर्वा विचित्रः केन निर्मितः ॥**
**यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकम् ।**
**कादाचित्कतया तद्वत् दुःखादीनामहेतुता ॥ इति ॥ बो. ५४१ ॥**

अत्र दुःखादीनामहेतुतालक्षणयाऽऽकस्मिकतया तत्प्रयोजकत्वेन इतरेषु द्वेषो न कर्तव्यः । अपितु स्वभावभावनया शान्त एव भवेदित्यभिप्रायः ॥

तस्मात्---

**शमार्थं सर्वशास्त्राणि विहितानि मनीषिभिः ।**
**स एव सर्वशास्त्रज्ञः यस्य शान्तं मनस्सदा ॥**

इति सुष्ठूक्तम् ॥

अस्य च इतिहाससमुच्चयादौ पठितस्य वचनस्य वयमन्वयमेवं रोचयामहे । यथा—यः विचारशीलः पुरुषः सर्वशास्त्रसारं विजानाति तस्य मनस्सदा शान्तमिति । एकदेशज्ञानिनां गृहीतग्राहित्वाभिमानः रूढमूलः वर्तते । नानाशास्त्रसारग्राहिणस्तु तादृशाभिमानाविधुराः प्रायश्शान्ता भवन्तीति । ततश्च—" य एव सर्वशास्त्रज्ञः तस्य शान्तं मनस्सदा" इति पठितव्यमिति ॥

सम्प्रदायो विश्वसनीयः.

**पक्षो योऽङ्गीकृतो येन तमत्रस्यन् स निर्वहेत् ।**
**हारयेदन्तरा त्रस्यन् भीतोपद्रवकारिभिः ॥ ८६ पु.**
**इति कौमारिलं वाक्यं श्रूयते तन्त्रवार्तिके ।**
**वेदान्ताचार्यवाक्यं तु रहस्योक्तं निशम्यताम् ॥**
**भवन्ति बहवो मूर्खाः क्वचिदेको विशुद्धधीः ।**
**त्रासितोऽपि सदा मूर्खैरचलो यस्स बुद्धिमान् ॥**

**इति लोकप्रसिद्धेन न्यायेन बहवः किल ।**
**सिद्धान्ताः परिदृश्यन्ते तैस्तदीयैः प्रवर्तिताः ॥**

इह तावन्मनुष्याणामार्याणां द्विविधस्संस्कारः जननादारभ्य समाधीयते लौकिको वैनयिकश्चेति । प्रथमः सुप्रसिद्धः लौकिकेन व्यवहारेणैवाधीयमानः विचित्र एव वर्तते । द्वितीयस्तु विनयपद-वाच्यया "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यादि-शास्त्रविहितया शिक्षया पित्रादिसम्प्रदायपरम्पराया तत्तत्सिद्धान्तविचार-रूपमीमांसया च समाहितो वैनयिक इत्युच्यते ॥

तत्र सम्प्रदायो नाम "शिष्योपाध्यायसम्बन्धस्याविच्छेदेन शास्त्रप्राप्तिः" इति न्यायवार्तिके प्रथमसूत्रभाष्यान्ते उद्योतकरः प्राह । आह च भगवानपि गीतायाम्—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ इति ॥**

ततश्च तत्त्वसाक्षात्कारवतामुपदेशपारंपर्येण सिद्ध एवार्थः सिद्धान्त इति तेषांतेषामभिप्रायः । स च संस्कारः तत्तत्सम्प्रदायसंस्कृतमानसानामेव हृदयङ्गमः । स एव दृढतमश्चेत् फलपर्यवसायीति श्रद्धातव्यश्च श्रद्धा-लुभिरिति निर्णयः ॥

## भावनामयः पुरुषः

यतः—आत्मा नाम श्रद्धालक्षणविश्वासमयः । "अथो खल्वाहुः काममय एवायं पुरुष इति । स यथाकामो भवति तथाक्रतुः भवति । यथाक्रतुर्भवति तथा तत्कर्म कुरुते । यत्कर्म कुरुते तदभिसम्पद्यते" इति बृहदारण्यके ॥ ६–४–५ ॥

"अथ खलु क्रतुमयः पुरुषः यथाक्रतुरस्मिन् लोक पुरुषो भवति तथेतः प्रेत्य भवति" इति छान्दोग्ये (३-१४-१)

"श्रद्धां कामस्य मातरम्" इति तैत्तिरीयके (ब्रा—२-८-८)

"स प्राण मसृजत प्राणात् श्रद्धाम्" इति प्रश्नोपनिषदि च श्रूयते ॥

भगवद्गीतायामपि—

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥
श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥
यो यो यां यां तनूं भक्तश्श्रद्धयाऽर्चितुमिच्छति ।
तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्धधाना मत्परमाः भक्तास्तेऽतीव मे प्रियाः ॥
त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चेति तामसी चेति तां शृणु ॥
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषः यो यच्छ्रद्धः स एव सः ॥

इत्यात्मनां श्रद्धात्मक संस्कारलक्षण विश्वासमयत्वबोधकानि भगवद्गीता-वचनानि ॥ निष्कृष्टार्थस्तु—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ इति ॥

मनुः—

श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतन्द्रितः ।
श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः ॥ इति ॥

अग्निहोत्रं तपस्सत्यं वेदानामुपलम्भनम् ।
आतिथ्यं वैश्वदेवं च हीष्टमित्यभिधीयते ॥
वापीकूपतटाकादिदेवतायतनानि च ।
अन्नप्रदानमारामः पूर्तमित्यभिधीयते ॥ इति ॥

पाद्मे चर्यापादे—(१४)

गृहार्चने कौतुके वा मण्डले वा घटेऽपि वा ।
अर्चनं श्रद्धया कार्यं श्रद्धापूतमिदं जगत् ॥ इति ॥

अस्य सर्वस्यापि श्रद्धामहिमवचनस्य मूलं श्रद्धासूक्तं (ऋग्वेद १०-१५१) ॥

श्रद्धयाऽग्निस्समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥
प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वसु इदं म उदितं कृधि ॥
यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वसु अस्माकमुदितं कृधि ॥
श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया विन्दते वसु ॥
श्रद्धां प्रातर्हवामहे श्रद्धां मध्यंदिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥ इति ॥

किमत्र बहुनोक्तेन—

मन्त्रे तीर्थे द्विजे दैवे दैवज्ञे भेषजे गुरौ ।
यादृशीं भावनां कुर्यात् सिद्धिर्भवति तादृशी ॥ इति ॥

अत एव परस्य ब्रह्मणोऽपि श्रद्धामयत्वमवगमयितुं सर्वासूपनिषत्सु श्रद्धापदेन व्यपदेशस्समुपलभ्यते ॥

अत्र यद्यपीयमाशङ्का समुदेति । यथा—

**यं तु कर्मणि यस्मिन् स न्ययुङ्क्त प्रथमं विभुः ।**
**तदेव स पुनर्भेजे सृज्यमानः पुनःपुनः ॥ मनु—१-२८ ॥**
**यादृशेन तु भावेन यद्यत्कर्म निषेवते ।**
**तादृशेन शरीरेण तत्तत्फलमुपाश्नुते ॥ १२-८१ ॥**
**न गाधा गाधिनं शास्ति बहु चेदपि गायति ।**
**प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥**
**जन्मान्तरसहस्रेषु बुद्धिर्या भाविता पुरा ।**
**तामेव भजते जन्तुः उपदेशो निरर्थकः ॥ महा. भा. सभा. ४४**

गीयते च—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥**

इत्यादीनि वचनानि पुरुषकारं प्रतिबध्नन्तीति ॥

अयमत्र समाधिः—

**इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।**
**तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ इति ॥**

अयं भावः—प्रकृतिर्हि रागादिद्वारेण कार्यकारिणी । न तु वायूदकादिवत् पुरुषं प्रेरयति । तत्र रागादिनिरोधे च पुरुषप्रयत्नस्सावकाशः । ततश्च प्राचीनवासनानुरोधेन इष्टसाधनताज्ञाने सति इच्छायां सत्यामपि तदधीनो न भवेत् पौरुषं पुरस्कुर्यादिति । इदं च पद्यं पुरुषकारावसरप्रदानपरमिति सर्वेषां भाष्यकृतां पन्थाः ॥

अत एवैतेषां वचनानां सारार्थं गृहीत्वा माण्डूक्यकारिकायां

वैतथ्यप्रकरणे (१७) एवमाहुः—

**यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।**
**तं चावति स भूत्वाऽसौ तद्ग्रहस्समुपैति तम् ॥ इति ॥**

एतेन भावनामयः पुरुष इति स्पष्टमुक्तं भवति ॥

अतएव कुमारिलभट्टाचार्योऽपि तन्त्रवार्तिके अपूर्वाधिकरणे—

**सर्वावाप्तिसमर्थो वा प्रकृत्याऽऽत्मा सदेष्यते ।**
**कश्चित्तु प्रतिबन्धोऽस्य कर्मभिस्सोऽपनीयते ॥**

इत्याह सर्वकामावाप्तियोग्यतामात्मनः स्वाभाविकीम् ॥

ततश्च पुरुषस्य भावनामयत्वे सिद्धे सैषा भावना सामान्येन त्रिधा प्रविभागमर्हति—सर्वोपशमभावना आत्मव्यतिरिक्तसर्वोपशम-भावना सर्वकामावाप्तिभावना चेति । तत्र प्रथमद्वितीये—सर्वमिदं जगद्दुःखमयं प्रतिकूलमितिभावनामूलसिद्धान्तनिबन्धने भवतः । तृतीया तु सर्वस्य दुःखमयत्वं प्रतिकूलत्वरूपमौपाधिकं प्राचीनानन्तविचित्र-कर्ममूलम् । सर्वकर्मनिवृत्तौ सर्वं भगवतो विभूतिभूतं शेषभूतं सुखमयं अनुकूलतममिति सिद्धान्तनिबन्धना ॥

इदमेकमत्रोदाहरणम् । सौगताः खल्वेवमाहुः—"त्यज्यता-मेष मूर्धाभिषिक्तः प्रथमो मोहः आत्मग्रहो नाम । तन्निवृत्तावात्मीय-ग्रहोऽपि विरंस्यति--अहमेव न, किं ममेति । तदिदमहङ्कारममकार प्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारम् । तदुच्यते बोधिचर्यावतारे—

**यतस्ततो वाऽस्तु भयं यद्यहं नाम किञ्चन ।**
**अहमेव न किञ्चिच्चेत् भयं कस्य भविष्यति ॥ ४४९ ॥**

इति नैरात्म्यदर्शनमेव सर्वोत्तमं रागभञ्जकमिति ॥

एतन्मतमभिसन्धायैव औपनिषदं दर्शनमेवं प्रवृत्तं ब्रह्मात्मैक-त्वोपदेशाय—तत्त्वमसीति । अयमर्थः—"आत्मैवेदमग्र आसीत् सोऽ-

बिभेत् । तस्मादेकाकी बिभेति । सहायमीक्षांचक्रे । यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति । तत एवास्य भयं वीयाय । कस्माद्धि अभैष्यत् द्वितीयाद्वै भयं भवति । (बृ. उ. ३-३-२) इति । रागादिभङ्गाय नैरात्म्यपर्यन्तानुधावनं नोचितम् । आत्मसत्त्वेऽपि द्वितीयाभावे रागाद्यभावात् ऐकात्म्यदर्शनमेव वरमित्यैकात्म्यसिद्धान्तः ॥

आत्मभेदवादिसिद्धान्तरीतिस्तु—द्वितीयसत्त्वेऽपि तृतीयस्य परमेश्वरस्य सर्वनियन्तुस्सत्त्वात् तत्पारतन्त्र्यस्यैव सर्वेषां निरुपाधिकस्य तत्त्वमसीति समुपदिष्टत्वात् सर्वेषामात्मनां समानाकारत्वेन वैषम्याभावात् वैषम्यहेतूनां देवमनुष्याद्याकाराणामौपाधिकत्वात् सर्वेषां सर्वनियन्तृशरीरत्वेन तदवयवभावनया एकदेहीयहस्तपादादिन्यायेन रागद्वेषानवकाशात् नियन्त्रपेक्षया द्वितीयस्य स्वतन्त्रस्याभावेन नैव भयस्यावसर इति सङ्ग्रहः ॥

सम्प्रदायसमाश्रयः.

लोकसिद्धो न्यायोऽपि संस्काराधीनो विविधो विज्ञायते । तथाहि—प्राचीनो वेदान्तवादस्तु भेदाभेदलक्षणः परिणामवादः । स एव सर्वासामुपनिषदां सूत्राणां च तात्पर्यविषयभूत इति भूयसामभिप्रायः । स एव हि वादः श्रीमतां शङ्कराचार्याणां प्राधान्येन निराचिकीर्षितः । यतः स्वयमाह—(बृ. उ. ४-३-६) "तस्मात् श्रुत्यर्थकल्पनाकुशलाः सर्व एवोपनिषदर्थमन्यथा कुर्वन्ति। तथापि वेदार्थश्चेत्स्यात् कामं भवतु न मे द्वेषः" इति। तथाच वेदव्याख्यातारः तत्राप्युपनिषद्व्याख्यातारः प्राचीनाः भूयांस आसन्निति "सर्व एव" इत्यनेनावधार्यते ॥

नैतावता शाङ्करं दर्शनं नवीनमित्यभिमतमिति न भ्रमितव्यम् । यतस्स एवान्यत्रैवमाह–(बृ. उ. ४-१-२०) "कुतर्कदूषितान्तःकरणाः

ब्राह्मणादिवर्णापशदाः अनुकम्पनीया आगमार्थविच्छिन्नसम्प्रदायबुद्धयः" इति ॥

तथा माण्डूक्यकारिकाभाष्ये एवमुच्यते—"विगतद्वेषैः वेदान्तार्थतत्परैः सन्न्यासिभिः परमात्मा द्रष्टुं शक्यो नान्यैः रागादिकलुषितचेतोभिः स्वपक्षपातदर्शनैः तार्किकादिभिरित्यभिप्रायः" इति ॥ (२-३५)

न्यायसूत्रभाष्ये तु—(४-२-४९.) "अन्योन्यप्रत्यनीकानि च प्रवादुकानां दर्शनानि । स्वपक्षरागेण चैके न्यायमतिवर्तन्ते" इति ॥

तथा भास्करभाष्ये—(२९ पु.) "तस्मात्सम्प्रदायपरम्परया च तद्व्याख्यानं शोभनम्" इति तथा--(४१.) "केचित्तु श्रुत्यर्थमाचार्योक्तिं च पृष्ठतः कृत्वा अन्यदेव दर्शनं रचयन्ति" इति । तथा—(८५.) "सूत्रकारश्श्रुत्यनुकारी परिणामपक्षं सूत्रयाम्बभूव । अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां सम्प्रदायतस्समाश्रितः" इति ॥

श्रीभाष्ये तु—"भगवद्बोधायनकृतां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति ॥

एवं विलक्षणेषु बहुषु मार्गेषु सत्सु माध्यस्थ्येन परामृशतां विमर्शकवराणां संस्कारलक्षणभावनामयत्वमेव सर्वमार्गाणामिति सुदृढं हृदयारूढं भवति । यतः सर्व एव सिद्धान्तप्रवर्तकाः "सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम्" इत्यनुभवलक्षणां प्रतीतिमेव प्रमाणत्वेन पुरस्कुर्वन्ति । अनुभवश्च तत्तादृशभावनानिबन्धन इति विदितमेवैतत् ॥

## खण्डनमण्डनविचारः.

**स्वसिद्धान्तव्यवस्थित्यै परसिद्धान्त खण्डनम् ।**
**तस्मान्न दौर्जन्यमिति सर्वेऽप्याहुर्मनीषिणः ॥**

तत्तत्त्वमप्यत्र यथा सङ्गतं स्यान्निशम्यताम् ।
सिद्धान्ते दृढविश्वासादुपायः फलसाधकः ॥

तत्तत्संस्कारदार्ढ्याय सर्वैर्यत्नो ह्यपेक्ष्यते ।
स्वसंस्कारानुरोधेन दूषणं भूषणं भवेत् ॥

तदेव परसंस्कारवशाद्भवति दूषणम् ।
एवंस्थिते दूषणादौ के वा खण्डनमण्डने ॥ इति

अत एवेत्थं भास्कराचार्येण भाषितम्—(२१९ पु.)

उक्तं तत्त्वमनादृत्य दुर्ग्रहो गृह्यते यदि ।
तत्रास्माभिरिदं वाच्यं गृह्यतां गृह्यतामिति ॥
शास्त्रार्थं तत्त्वतो ज्ञात्वा चरिष्यामो वयं सदा ।
न नो व्यसनिता काचित् विमतिप्रतिबोधने ॥ इत्यादि ॥

श्रीभाष्ये (२-२-१) "परपक्षप्रतिक्षेपायानन्तरः पादः प्रवर्तते । अन्यथा वैदिकपक्षेस्मिन् किञ्चिच्छ्रद्धावैकल्यं जायेतापि" इति ॥

तथाच परसिद्धान्तखण्डनमपि सम्प्रदायश्रद्धारूपस्य संस्कारस्य दार्ढ्यायैवेति न दौर्जन्यदोषावहमिति विजानीमः ॥

स्वसिद्धान्तप्रचाररूपप्रवचनायेति येऽभिप्रयन्ति तेषामभिप्रायः निरर्थक एव । अपरथा—जगत्यस्मिन्नेकसिद्धान्तपरिशेष एव स्यात् इति ॥

नन्वेवं सर्वमार्गाणां वासनामयत्वे परमार्थतः किमपि न स्यादिति प्रसज्यत इति चेन्न—लोकोत्तरे अतीन्द्रिये विषये वासनामयत्वापेक्षयाऽतिरिक्तस्य पारमार्थ्यस्यानभ्युपगमात् । वासनामयं सर्वमपरमार्थमेवेति नियमस्यानभ्युपगमात् । लोकोत्तरस्य परमार्थतत्त्वस्यात्मलक्षणस्य श्रद्धामयत्वलक्षणवासनामयत्वस्यैवं धर्मिग्राहकमानभूतश्रुत्युक्तत्वात् ॥

वस्तुन्यस्मिन् सर्वात्मके सर्वशक्तियुक्ते सर्वविधस्य विकल्पस्यैव

भूषणत्वात् । वस्तुनि विकल्पो नास्तीति वादिनो ये तार्किकादयः वस्त्वैकरूप्यवादिनः तेऽपीत्थमाहुः—

**न हि वस्तु स्वभावेन पुरुषार्थत्वमश्नुते ।**
**तथात्वे सर्वदा सर्वं सर्वेषां स्याद्व्यवस्थया ॥**
**सुखाय वा स्यात् दुःखाय न चैवं त्वव्यवस्थया ।**
**परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ ॥**
**कुणपः कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ।**
**अर्थस्सर्वात्मकस्तस्मात्सर्वाभ्युपगतो मतः ॥**

तथा—पातञ्जलार्हतभाट्टाः अनेकान्तवादिनः परमार्थतो वस्तुविकल्पवादिन एव । औपनिषदा अपि ये द्वैतैकत्ववादिनः भर्तृप्रपञ्च ब्रह्मदत्त भर्तृहरि भास्कर यादवप्रकाशादयः तेऽपि सर्वे वस्तुविकल्पवादिनः । तथाचोक्तं हरिणा (२–४४१) वाक्यपद्याम्—

**नानात्मकानामेकत्वं नानात्वं च विपर्यये ।**
**सर्वात्मकत्वादर्थस्य नैरात्म्याद्वा व्यवस्थितम् ॥ इति ॥**

अत्र नैरात्म्यात्सर्वमुपपद्यत इति चेन्न–अर्थक्रियाकारित्वलक्षणस्य शून्यताविरोधिनो रूपस्य सर्वानुभवसिद्धत्वेन तन्मार्गानाश्रयणात् ॥

सूत्रकारोऽप्याचार्यबादरायणः—"कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इत्याक्षेपं "श्रुतेस्तु शब्दमूलत्वात्" इति समाहितवान् । शब्दैकसमधिगम्ये वस्तुनि यथाशब्दं प्रत्येतव्ये लोकसिद्धन्यायविरोधचिन्ता न कार्येति तत्रत्याशयः ॥

ततश्च भौतिकमेव सर्वं सर्वात्मकमिति सर्वाभ्युपगमसम्भवे अभौतिकसतीन्द्रियं शब्दैकसमधिगम्यं विलक्षणं वस्तु सर्वात्मकमिति वादिनां कोऽतिरिक्तोऽपराधः ॥

एवं ग्रन्थेषु लोकसिद्धप्रमाणप्रमेयव्यवस्थाया एव विचित्रायाः परिदृश्यमानत्वात् स्वस्ववासनानुगुणैव युक्तिः सद्युक्तिः, तादृशो न्याय एव लोकसिद्धः समीचीनो न्यायः, तादृश्येव व्यवस्था सुव्यवस्था, इतरद्-खिलं असमञ्जसमिति च महान्तोऽपि धीमन्तोऽपि विश्वसन्ति । तथाऽनुतिष्ठन्ति । शान्ताश्च निवसन्ति । ततश्चैवं लोकवैचित्र्ये निरूप्यमाणे पुंसां प्रबन्धानां व्यवहाराणां सर्वेषामपि भावनामयतैव विशदतरं परि-स्फुरतीति स्वस्वसम्प्रदायसमाश्रयणमेव सर्वेषां श्रेय इति भद्रम् ॥

तथाचोक्तं वेदान्ताचार्यैर्न्यायसिद्धाञ्जने—

परश्शतपरिक्षोदात्परस्तादपि वादिभिः ।
उपलम्भबले स्थैर्यं तदादावेव गृह्यताम् ॥ इति ॥

इदमत्रावधेयम्—सर्वदर्शनानां संप्रदायानां च श्रद्धामयत्वेऽपि सनातनधर्मव्यवस्थानुरोधेन स्वीक्रियमाणैव श्रद्धा सात्त्विकीत्युच्यते । तयैव यथायथं पुरुषार्थप्राप्तिरिति सर्वशास्त्रसारार्थः । ततश्च सनातनधर्म-व्यवस्थां व्याकुलीकुर्वतां रागद्वेषमूलस्वच्छन्दाचारकुतुकिनां श्रद्धाऽपि परिग्राह्या स्यादिति शङ्काया नात्रावकाशः ॥

सनातनधर्मा अधर्माश्च न्यायसूत्रभाष्ये (१-१-२) वात्स्यायने-नोपदर्शिताः—"रागद्वेषासूयेर्ष्यामायालोभादिभिः दोषैः प्रयुक्तः शरीरेण हिंसा स्तेय प्रतिषिद्धमैथुनान्याचरति । वाचाऽनृत परुष सूचनाऽसंबद्धानि । मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति । सेय पापात्मिका प्रवृत्तिरधर्माय ॥

अथ शुभा—शरीरेण दानं परित्राणं परिचरणं च । वाचा सत्यं हितं प्रियं स्वाध्यायं चेति । मनसा दयामस्पृहां श्रद्धां चेति । सेयं धर्माय" इति ॥

---

# शून्यतादर्शनम्

---

दर्शनक्रमः.

अथ प्रथममेतस्मिन् प्रबन्धे दर्शनोदये ।
प्रपञ्चशून्यतावादिसिद्धान्तः प्रविचिन्त्यते ॥
तत्तद्ग्रन्थस्थवाक्यानामेव योजनया कृता ।
मीमांसेयमतोऽस्माकमपराधो न कश्चन ॥
केवला दृष्टिरस्माकं तत्तत्सिद्धान्तनिर्णये ।
तत्तत्सिद्धान्तैकदेशमूलविभ्रान्तिशान्तये ॥
आदौ सौगतसिद्धान्तविचारे हेतुरुच्यते ।
दर्शनानां यतः पौर्वापर्ये नास्ति नियामकम् ॥

यद्यपि सर्वाणि दर्शनानि तत्तत्पुरुषविशेषाभिप्रायरूपाणि अनादीनीत्येव वक्तव्यानि भवन्ति । यस्मादनादित्वेनाङ्गीकृते वेदान्तदर्शने उपनिषत्स्वेव "अस्तीत्येके नायमस्तीति चैके" (कठ. १-२०) "तद्धैक आहुरसदेवेदमग्र आसीत्" (छा. ६-२) इत्यादिषु वाक्येषु चार्वाकदर्शनसौगतदर्शनादीनामभिप्रायस्यानुवादो दृश्यते । प्रायशश्चोपनिषदां साङ्ख्यसिद्धान्ताभिप्रायनिरासायैव भगवता बादरायणेन सूत्राण्यपि प्रणीतानि । ततश्च दर्शनेषु पौर्वापर्यलक्षणः क्रमः नियामकस्य कस्याप्यदर्शनात् अशक्यो निरूपयितुम् ॥

तथाप्यधुनोपलभ्यमानेषु प्रबन्धेषु तत्र निरूप्यमाणेषु युक्तिरूपन्यायेषु च शब्दतोऽर्थतश्च पौर्यापर्यदर्शनात् शक्यं कञ्चित्क्रममभ्युपगन्तुम् ॥

एवं सत्ययं क्रमोऽस्माकमभिमतः—बौद्धं साङ्ख्यं तार्किकं स्वायंभुवं शैवं भाट्टं प्राभाकरं शाङ्करं भास्करं यादवं रामानुजीयमिति ॥

तथाऽमुमेव क्रमेऽभिप्रायमनुरुद्ध्य सङ्कल्पसूर्योदये द्वितीयेऽङ्के श्रीवेदान्ताचार्यैः पद्यमिदं पठ्यते—

**गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना**
**क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते ।**
**क्षामा कौमारिलोक्तिः जगति गुरुमतं गौरवात् दूरवान्तं**
**का वा वार्तेतरेषां भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥**

इति ॥

तत्रच सर्वेषां दर्शनानां मूलभूते इव द्वे एव साक्षात्पक्षप्रतिपक्षतयाऽवस्थिते बौद्धसाङ्ख्यदर्शने । इतराणि सर्वाण्यपि दर्शनान्येताभ्यामेव सङ्कीर्णानि क्वचित्क्वचित् विशिष्य परिष्कृतानीव प्रवृत्तानीति विज्ञायते ॥

तत्र बुद्धदर्शनं नाम माध्यमिकसम्मतः सर्वशून्यवादः निःस्वभाववादः निरन्वयोत्पत्तिविनाशवादः भ्रान्तिवादः परतन्त्रवादः इत्येवंप्रकारैः व्यपदिश्यते । तस्य च प्रतिद्वन्द्वितयाऽवस्थितं साङ्ख्यदर्शनन्तु सर्वसत्यवादः स्वभाववादः परिणामवादः अविवेकवादः स्वतन्त्रवादः इत्यभिलप्यते । तस्मात्सर्वशून्यवादस्य प्रतिपक्षभूतो वादस्सर्वसत्यवादः ॥

तद्विस्तरस्तु–सर्वमसदिति सौगताः प्राहुः । सदिति साङ्ख्याः । अभाव इति भाव इति, क्षणिकमिति स्थिरमिति कार्यकारणयोः भेद इत्यभेद इति, असत्कार्यमिति सत्कार्यमिति, नैरात्म्यमिति सार्वात्म्यमिति, भ्रान्तिरिति अविवेक इति, सर्वं ज्ञानमयथार्थमिति यथार्थ-

मित्येवंप्रकारैः सर्वैरपि सौगतसाङ्ख्ययोरेव पक्षप्रतिपक्षभावः । इतराणि सर्वाण्यपि दर्शनानि माध्यस्थ्येन स्थितानि। तदेतदुत्तरत्र विशदीक्रियते॥

शून्यपदार्थः

तत्र विविधेषु सुगतमतसिद्धान्तेषु निःस्वभावानिर्वाच्यनैरात्म्याद्यपरपर्यायः शून्यवाद एव काष्ठामुपगत इति माहायानिकानामभिप्रायः । तत्र शून्यपदस्यार्थोऽपि तुच्छलक्षणाभाव एव न तु वस्तुभूतः। श्रावकादियानवादिनां सिद्धान्तेषु तु शून्यपदमपि स्वस्वाभिमतनिर्विशेषविज्ञानादिपरमेवेति तेते तथा तथा व्यवस्थापयान्ति। यथा च माहायानिकाः प्रतीत्यसमुत्पादवादं नित्यतत्त्ववादं धर्मात्मवादं पुद्गलात्मवादमेवमादींश्च स्वाभिमते निःस्वभाववादेऽन्तर्भावयन्ति तथा तत्र प्रमाणानि पुरस्तात्प्रपञ्चयिष्यामः । ततश्च सौगतसिद्धान्तोऽपि प्रवचनभेदेन इतरसिद्धान्तवत् विविधस्संवृत्तः ॥

ततश्चाधुनातनानां बौद्धसिद्धान्तविमर्शकानामेकदेशदर्शिनां "शून्यता भावलक्षणवस्तुरूपैव" इत्यादीनि वचांस्यपि सत्यान्येव। यस्माद्बौद्धसिद्धान्तप्रवर्तकाः विविधाभिप्रायवन्तस्समुपलभ्यन्ते ॥

तथा जैमिनि कणाद गौतम बादरायणादीनां दर्शनानि तदीयभाष्यकाराणां शबर प्रशस्तपाद वात्स्यायनोपवर्षादीनां शून्यवादानुवादवचांस्यपि सत्यान्येव। यतो माहायानिकसिद्धान्तानुरोधेन शून्यवाद एव तैः निराचिकीर्षितः ॥

इमं लोकपर्यायवृत्तान्तमजानानाः केचन विमर्शकाः स्वैः परिचितस्य प्रबन्धस्यार्थस्सर्वेषां बौद्धसिद्धान्तप्रबन्धकर्तृणामभिप्रेत इति व्यामुह्यन्तः व्यामोहयन्तीतरानपीति वयं विजानीमः। तदेवं तेषां भ्रान्तिकारणमपि पुरस्तात् सम्यक्प्रदर्शयिष्यामः ॥

अन्यथा पक्षप्रतिपक्षभावेनावस्थितयोः साङ्ख्यसौगतसिद्धान्तयोः सर्वभावसर्वाभाववादरूपयोः वैलक्षण्यमेव न सिद्ध्यतीति कापिला एव प्रथमं भ्रान्ताः स्युः ॥

तथा "असदेवेदमग्र आसीत्" इत्यादिनाऽनूद्यमानस्यासल्लक्षणस्य नैरात्म्यदर्शनस्य प्रतिपक्षभूतः अध्यात्मशास्त्रत्वेन प्रसिद्धः "सदेव सोम्येदमग्र आसीत, आत्मा वा इदमेक एवाग्र आसीत्" इत्यादिःसल्लक्षणात्मप्रतिपादकः औपनिषदोऽपि वादः भ्रान्तप्रलपितायेत ॥

एवं शून्यवादस्य प्रवचनकर्तारः ये संस्कृतभाषामयप्रबन्धप्रणेतारः नागार्जुन शान्तदेव प्रज्ञाकर प्रभृतयः तैः प्रणीताः ये च माध्यमिककारिका बोधिचर्यावतारः तत्पञ्चिकादयः, येच विज्ञानवादस्य प्रवक्तारः वसुबन्धु मैत्रेयनाथ शान्तरक्षित कमलशील प्रभृतयः तैः प्रणीताः प्रज्ञप्तिमात्रतासिद्धि अभिधर्मकोशाभिसमयालङ्कार तत्त्वसंग्रह तत्पञ्चिकादयः, ये च दिङ्नाग धर्मकीर्ति प्रभृतिभिः वैभाषिकसिद्धान्तप्रवर्तकैः प्रोक्ताः वचनविशेषाः, तथा ये पुनरिदानीं समुपलभ्यमानाः शून्यवादस्य मूलभूताः अष्टसाहस्रिका प्रज्ञापारमिता लङ्कावतारसूत्रप्रमुखाः प्रबन्धाः, बोधिचर्यावतारपञ्चिकायां प्रमाणत्वेन समुद्धृताः प्राचीनाः प्रायः पञ्चाशत्सङ्ख्याकाः सूत्रप्रभृतयः प्रबन्धाश्च । त एते सर्वे शून्यतायाः भावस्वरूपत्वे साक्षादेव बाधका इति स्पष्टमेव विमर्शकविपश्चिताम् ॥

तस्मात्संस्कृतभाषामयशून्यवादप्रबन्धतात्पर्यमार्याणां विपश्चिदपश्चिमानां नावगतमिति साहसवचनं एकदेशदर्शिताविलसितमित्यवधेयम् ॥

तस्माच्छून्यतास्वरूपं माहायानिकमतानुसारेण निरुपाधिकाभाव-पर्यायं तुच्छलक्षणमित्येवावधार्यताम् ॥

अत एव बौद्धागमेष्वेव शून्यवादस्य प्रतिपक्षतया प्रसिद्धः माहायानिकैर्निराक्रियमाणः आर्यसत्यवादः संश्लिष्यते । प्रपञ्चयिष्यते चेदमप्यग्रे ॥

### अभावस्तार्किकसम्मतः.

अथैतादृशनिर्णयविवेकाय तत्तत्सिद्धान्तानुसारेण अभावादिप-दानां व्युत्पत्तिरेवादौ प्रदर्शनीयेति अभावविचारः प्रारभ्यते—सर्वैरपि वादिभिः अभाव निस्स्वभाव तुच्छ स्वप्न माया गगन गन्धर्वनगर शशविषणादिपदानि पर्यायतया प्रयुज्यन्ते । तेषामर्थविषये चतुष्टयी गतिः ॥

अभावो नाम—वस्तुप्रतियोगिकः वस्त्वनुयोगिकः वस्तुभूतः कश्चित्पदार्थ इत्येकः पक्षः तार्किकाणाम् ॥

वस्त्वनुयोगिकः अवस्तुप्रतियोगिकः अवस्तुभूतश्चेति द्वितीयः पक्षः निर्विशेषब्रह्मवादिनाम् ॥

अवस्त्वनुयोगिकः अवस्तुप्रतियोगिकः अवस्तुभूत इति तृतीयः पक्षः शून्यवादिनाम् ॥

भावादन्योऽभावो नाम कश्चित्पदार्थ एव नास्तीति भावान्तराभाव-वादः तुरीयः पक्षः साङ्ख्यानाम् ॥

अथैतेषामुपव्याख्यानम्—न्यायसूत्रभाष्ये प्रथमसूत्रे वात्स्या-यनेन—“ किंपुनस्तत्वम् । सतश्च सद्भावः असतश्च असद्भावः सत्स-दिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । असच्चासदिति गृह्य-माणं यथाभूतमविपरीतं तत्त्वं भवति ” इति अभिहितमस्ति ॥

अत्रासत्पदार्थः सप्तमः अभावाख्योऽभिमतः । अनूदितश्चाय-मर्थः छान्दोग्यशाङ्करभाष्ये=(६-२-१) "सदभावमात्रं तत्त्वं परिकल्प-यन्ति बौद्धाः । न तु सत्प्रतिद्वान्द्वि वस्त्वन्तरमिच्छन्ति । यथा—असच्चासदि तिगृह्यमाणं यथाभूतमविपरीतं वस्तु तत्त्वं भवतीति नैया-यिकाः" इति ॥

तथा (४-२-२६ ३१.) न्यायदर्शन एव—"बुद्ध्या विवेच-नात्तु भावनां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः । स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः । माया-गन्धर्वनगरमृगतृष्णिकावद्वा" इत्यादीनि सूत्राणि शून्यवादानुवाद-रूपाणि ॥

समाधानसूत्राणि तु—"प्रमाणतश्चार्थप्रतिपत्तेः मिथ्योपलब्धि-विनाशः तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत्प्रतिबोधे" इत्यादीनि ॥

इदमत्र समाधानसूत्रभाष्यम्—"बुद्ध्या विवेचनात्तु भावानां याथात्म्योपलब्धिः । यदस्ति यथा च । यन्नास्ति यथा च । तत्सर्वं प्रमाणत उपलब्ध्या सिद्ध्यति । या च प्रमाणत उपलब्धिस्तद्बुद्ध्या विवेचनं भावानाम् । तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः । परीक्षमाणो हि बुद्ध्याऽध्यवस्यतीदमस्ति इदं नास्तीति । तत्र न सर्वभावानुपपत्तिः ॥ (४-२-२९)

उपादानवच्च (सालम्बनम्) मायादिषु मिथ्याज्ञानं, प्रज्ञापनीय-सरूपं च द्रव्यमुपादाय साधनवान् परस्य मिथ्याध्यवसायं करोति, सा माया । नीहारप्रभृतीनां नगरस्वरूपसन्निवेशे दूरान्नगरबुद्धिरुत्पद्यते, विपर्यये तदभावात् । सूर्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमाने-षूदकबुद्धिर्भवति सामान्यग्रहणात्, अन्तिकस्थस्य विपर्यये तदभावात् ।

क्वचित्कदाचित्कस्यचिच्च भावान्नानिमित्तं मिथ्याज्ञानम् । दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च दूरान्तिकस्थयोः गन्धर्वनगरमृगतृष्णिकासु । सुप्तप्रतिबुद्धयोश्च स्वप्नविषये । तदेतत्सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे नोपपद्यत इति ॥ (४-२-३५)

तथाच ज्ञानद्वयमस्ति सम्यज्ज्ञानं मिथ्याज्ञानमिति च । तत्र प्रथमेन द्वितीयस्य विनाशः न त्वर्थापह्नव इति भावः ॥

अयमेवार्थः निरालम्बनवादरूपशून्यवादनिराकरणप्रकरणे शाबरभाष्यकुमारिलवार्तिकादिषु प्रपञ्चितः । अत्र सर्वत्रोक्तो मुख्यो निरासहेतुरेषः—सुपरिनिश्चितः अबाधितः प्रत्यक्षप्रत्ययः सर्वप्रमाणज्येष्ठः विरुद्धसर्वप्रमाणानां नावकाशप्रदो भवतीति ॥

तथाच निरुपाख्यः निरात्मकः अभावलक्षणः तुच्छः शून्यतापदवाच्यः परमार्थसत्यं प्रपञ्चसत्यतावादिभिः नाङ्गीकृतमिति सिद्धम् । सत्यतावादिमते सत्त्वं नाम व्यवहारार्हत्वम् । असत्त्वन्तु विरोधिव्यवहारार्हत्वम्, तत्तन्निष्ठात्यन्ताभावप्रतियोगित्वमिति निष्कर्षः ॥

एतदेवानेन वाक्येन बोधिचर्यावतारपञ्जिकागतेन सौगतसिद्धान्ते स्पष्टीक्रियते—(३'३८) नच भावनिवृत्तिरूपोऽभावः, निवृत्तेः निस्स्वभावत्वात् । यदि भावस्यैव कश्चित्स्वभावः स्यात्तदा तत्प्रतिषेधात्माऽभावोऽपि स्यात् । भावस्य स्वभावो नास्तीति प्रतिपादितमेव । अतो न भावनिवृत्तिरूपोऽभावो नाम कश्चिदस्ति ॥

नच भावाभावयोरुक्तक्रमेणासत्त्वे प्रतिपादिते तदुभयसङ्कीर्णात्मा सम्भवति उभयप्रतिषेधस्वभावता वा, भावविकल्पस्यैव सकलविकल्पनिबन्धनत्वात् तस्मिन्निराकृते सर्वे एवामी एकप्रहारेण निरस्ता भवन्तीति । तस्मादुक्तं च—

**न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।**
**चतुष्कोटि विनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥ इति ॥**

अस्मिन् पद्ये असत्पदं नैयायिकसम्मताभावपरम्, नतु स्वसंमताभावपरम्। अन्यथा असदेव अभावरूपं तत्त्वमिति सिद्धान्तविरोधप्रसङ्गः ॥

तथा—न्यायवार्तिकतात्पर्यटीकायां (३-२-१७) "अस्माभिर्भवदभिमतस्य तुच्छस्याभावस्यानङ्गीकारात्; अस्मदभिमतस्य भवद्भिरनङ्गीकारात्" इति विशदीकृतमास्ति ॥

तथा—शास्त्रदीपिकायां सम्बन्धाक्षेपपरिहारे "यद्धि प्रतीतं बाध्यते मृगतोयादि तदसदेवेति लौकिकी प्रसिद्धिः, नहि शशविषाणमृगतोयादीनां च कश्चिद्विशेषो लोके." इत्युच्यते । ततश्च शशविषाषाणादिपदानां नैयायिकादिदृष्ट्या सत्प्रतिद्वन्द्विशशवृत्तिविषाणाभावादिपरत्वम् । बौद्धदृष्ट्या तु तुच्छलक्षाणभावपरत्वम् । ततश्च शून्यलक्षणं तत्त्वन्तु तुच्छलक्षणाभावरूपमेवेति निष्कर्षः ॥

अभावः अद्वैतसम्मतः

अनिर्वचनीयप्रपञ्चवादिनां सिद्धान्ते तु व्यवहारदृष्टिः परमार्थदृष्टिश्चेति दृष्टिद्वयमङ्गीक्रियते । अबाधिता व्यवहारदृष्टिरेव परमार्थदृष्टिरितीतरेषां सिद्धान्तः । सैव व्यवहारदृष्टिरित्यनिर्वचनीयप्रपञ्चवादिसिद्धान्तः । परमार्थदृष्टिस्तु प्रपञ्चप्रत्याख्यानमेव । तदेव प्रपञ्चस्यासत्त्वम् । तदुक्तं शारीरकभाष्ये तदनन्यत्वमिति सूत्रे—"सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभिप्रायेण तु स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति । अप्रत्याख्यायैव हि कार्यप्रपञ्चं परिणामप्राक्रियां चाश्रयति उपासनेषूपयोक्ष्यत इति" ॥

तच्च प्रत्याख्यानं सौगत नैयायिक सिद्धान्तासङ्कीर्णमिति वक्त-व्यम् । निरधिकरणकस्य अध्यासस्य निषेधस्य चानभ्युपगमात् सर्वा-भावलक्षणेन परमार्थसत्येन शून्यवादसिद्धान्तेन न सङ्कीर्यते । नैयायिक-सिद्धान्तरीत्या प्रपञ्चप्रत्याख्यानरूपमसत्त्वन्तु प्रपञ्चस्य प्रतियोगिनः अस-त्प्रतिद्वन्द्विनः तत्त्वतापादकं भवतीति न तदभिमतेनाप्यसत्त्वेन सङ्कीर्यात् । ततश्च प्रतिषेधः निरुपाख्यः अभाव इति व्यवह्रियमाणोऽपि निरुपाधिक-त्ववैधुर्येण अनिर्वचनीयप्रपञ्चप्रतियोगिकत्वेन च विलक्षणः अनिर्वचनीय इति वाऽभ्युपगम्यते, नतु तत्त्वान्तरतयेति ॥

ततश्चासदभावादिपदानामतत्त्वभूताऽनिर्वचनीयप्रपञ्चप्रतिद्वन्द्वि-त्वेऽपि अतत्त्वलक्षणः निरुपाख्यः ब्रह्मसत्तातिरिक्तसत्ताशून्यं व्यतिरेकेणा भाव इत्यादिभिः पदैः व्यवह्रियमाणः उभयसिद्धान्तविलक्षणोऽर्थ इति निर्णयः ॥

तदपिचाऽनिर्वचनीयत्वं सदादिपक्षत्रयविलक्षणा तुरीयकोटिरि-त्येको मार्गः । तत्रापि न विश्रान्तिः, अपि तु दुर्निरूपत्वमेवेत्यपरो मार्गः । तत्तत्त्वमुत्तरत्र स्पष्टीक्रियते । तथा च प्रपञ्चविषये साङ्ख्यसौग-तमतविलक्षणं सदसद्विलक्षणत्वमित्युक्तं भवति । प्रपञ्चविनिवृत्त्यनन्तरं सौगतवैलक्षण्यन्तु "ब्रह्मावसानोऽयं प्रतिषेधः नाभावावसान इत्यध्यव-स्यामः" इति स्पष्टं भाषितं सूत्रे ॥ (३–२–२२)

तथा तत्रैव "न तावदुभयनिषेध उपपद्यते शून्यवादप्रसङ्गात् । किंचिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते । तच्च परिशिष्यमाणे कस्मिंश्चिद्भवति" इतिच । तथा महावैनाशिकसिद्धान्ते असदादिपदं सर्वाभावपरमित्यर्थोऽपि छान्दोग्यभाष्ये–(६-२-२) अवगम्यते ॥

तथा–(२-२-३१) शारीरकसूत्रे वाचस्पतिमिश्रेण माध्यमिकमतनिरासप्रकरणे एवमभिहितम्—"अपिचारोपितं निषेधनीयम्। आरोपश्च तत्त्वाधिष्ठानो दृष्टः। यथा शुक्तिकादिषु रजतादेः। नचेदस्ति किञ्चित्तत्वं कस्य कस्मिन्नारोपः। तस्मान्निष्प्रपञ्चं परमार्थसत् ब्रह्म अनिर्वाच्यप्रपञ्चात्मनाऽऽरोप्यते। तच्च तत्त्वं व्यवस्थाप्य अतात्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपाद्यते इति युक्तमुत्पश्यामः" इति ॥

एवं लेखनस्येदं मूलं तत्रत्यं भाष्यम्–"न ह्ययं सर्वप्रमाणसिद्धः लोकव्यवहारः अन्यतत्वमनधिगम्य शक्यतेऽपह्नोतुम्, अपवादाभावे उत्सर्गप्रसिद्धेः" इति ॥

एवमुदयनाचार्यविरचिते आत्मतत्त्वविवेके माध्यमिकमतनिरासोपसंहारे—"अस्तु तर्हि शून्यतैव परमं निर्वाणमितिचेन्न" इत्याद्युक्तम् ॥

अयमत्रत्यस्सारार्थः–शून्यता नाम स्वतस्सिद्धा? अन्यतस्सिद्धा? असिद्धैव वा? तृतीये कथं तदवशेषं विश्वम्? द्वितीये यद्यन्यपदार्थः संवृतिस्तर्हि विश्वशून्यतयोर्न कश्चिद्विशेषः। यदि संवृतिभिन्नः? तत्राप्येवं त्रिविधविकल्पप्रसङ्ग इत्यनवस्था। प्रथमे–स्वतस्सिद्धतया तदनुभवरूपम्। शून्यत्वादेव न कालावच्छेद इति नित्यम्। अत एव न देशावच्छेद इति व्यापकम्। अत एव तस्य विशेषाभाव इत्यद्वैतम्। प्रपञ्चस्यापारमार्थिकत्वादेव निष्प्रतियोगिकमिति विधिरूपम्। अविचारितप्रपञ्चाक्षेपात्तु शून्यमिति व्यवहारः। इति ॥

अथापि प्रपञ्चशून्यस्यानुभूतिमात्रस्य प्रपञ्चेन कस्सम्बन्ध इतिचेद्वस्तुतः न कश्चित्। संवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इव विषयविषयिभावः। स च यथा नैयायिकैस्समर्थयिष्यते तथैव वेद्यनिष्ठ-

स्त्वसौ वेदान्तदर्शन इति विशेषः । मायोपनीतोपाधिभेदाच्चानुभूतिरपि भिन्नेव व्यवहारपथमवतरति गगनमिव स्वप्नदृष्टघटकटाहकोटरकुटीकोटिभिस्तदास्तां तावदिति ॥

अनेन सन्दर्भेण शून्यपदस्य नैयायिकवासनया घटशून्यं भूतलमिति व्यवहारवत्सकलविशेषशून्यं वस्त्वित्यर्थोऽङ्गीकृतः। तथाच शून्यता नाम कश्चिद्भावस्य धर्म इति तेषामभिप्राय इति विज्ञायते ॥

अत एवेमां वासनामुररीकृत्यानन्दतीर्थीये अनुव्याख्याने—"वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रे—

**यच्छून्यवादिनश्शून्यं तदेव ब्रह्म मायिनः ।**
**न हि लक्षणभेदोऽस्ति निर्विशेषत्वतस्तयोः ॥**

इति लिखितम् ॥

उदयनाचार्याभिप्रायेण तु—

**यन्मायावादिनो ब्रह्म तच्छून्यं शून्यवादिनः ।**
**न हि स्वरूपभेदोऽस्ति स्वतास्सिद्धत्वतस्तयोः ॥**

इति पठितव्यं स्यात् ॥

वस्तुतस्तु—शून्य शून्यमेव । निर्विशेषं निर्विशेषमेव । अस्ति ह्यनयोर्महीयान्विशेषः सदसत्त्वलक्षणः विधिनिषेधरूपः ॥

सिद्धं वा असिद्धं वेति विकल्पस्य समाधानं तु सिद्धत्वासिद्धत्वयोः प्रपञ्चरूपत्वेन तदतीते विकल्पस्यैव नावसर इति ॥

## अभावः सौगतसम्मतः.

निरुपाधिकाभावलक्षणशून्यतासिद्धान्तस्तु लङ्कावतारे—(१५२)

**न सन्नासन्न सदसद्यदा लोकं प्रपश्यति ।**
**तदा व्यावर्तते चित्तं नैरात्म्यं चाधिगच्छति ॥**

**अस्तित्वपूर्वकं नास्ति अस्ति नास्तित्वपूर्वकम् ।**
**अतो नास्ति न गन्तव्यं अस्तित्वं न च कल्पयेत् ॥ लं. ११० ॥**

**अनुत्पादश्च तथता भूतकोटिश्च शून्यता ।**
**रूपस्य नामान्येतानि अभावं न विकल्पयेत् ॥ लं. ३४९ ॥**

बोधिचर्यावतारपञ्जिकायां (४१६) एवं पठ्यते—"भगवत्यां प्रज्ञापारमितायां विस्तरेणाध्यात्मशून्यतादयः अष्टादश शून्यताः प्रोक्ताः। न च शून्यता भावाद्व्यतिरिक्ता, भावस्यैव तत्स्वभावत्वात् । अन्यथा शून्यतायाः भावाद्व्यतिरेके धर्माणां निस्स्वभावता न स्यात्, निस्स्वभावता तत्स्वभाव इति साधितम् । इदमपि प्रज्ञापारमितायामुक्तम्—एवं प्रत्यवेक्षते न रूपशून्यतया रूपं शून्यं रूपमेव शून्यं शून्यतैव रूपम्। न वेदनाशून्यतया वेदना शून्या वेदनैव शून्या शून्यतैव वेदना। एवं संस्कारः एवं संज्ञा एवं विज्ञानमिति" ॥

तथा धर्मपदे विंशतिविधाश्शून्यताः प्रतिपादिताः ॥

लङ्कावतार(७४)सूत्रेत्वेवं पठ्यते—"शून्यता शून्यतेति महामते परिकल्पितस्वभावपदमेतत् । परिकल्पितस्वभावाभिनिवेशेन पुनर्महामते शून्यताऽनुत्पादाभावाद्वयनिस्स्वभाववादिनो भवन्ति । तत्र सङ्क्षेपेण महामते सप्तविधा शून्यता—भावस्वभावशून्यता, अप्रचरितशून्यता, प्रचरितशून्यता, सर्वधर्मनिस्स्वभावशून्यता, परमार्थज्ञानमहाशून्यता, इतरेतरशून्यता" इति ॥

अयमत्र समुदायार्थः—सर्वधर्मशून्यता हि भावाभिनिवेशप्रहाणायोपादीयते । सापि शून्यता शून्यताभिमुखीकरणात्पश्चात्प्रहीयते । याऽपि च कथञ्चिद्भावकल्पना जायते, साऽपि समनन्तरविचारेण निवर्तते इति ॥ बो. च. ४१६ ॥

**यदा न भावो नाभावः मतेस्संतिष्ठते पुरः ।**

**तदाऽन्यगत्यभावेन निरालम्बा प्रशाम्यति ॥ इति ॥ ४१७ ॥**

एभिस्सन्दर्भैश्शून्यत्वं नाम न भावः नाभावः नधर्मः न धर्मीत्येवं सर्वविधनिषेधास्पदं निस्स्वभावं तुच्छमित्यवधार्यते ॥

ततश्च शून्यमितिपदस्य इतरदार्शनिकैर्योऽर्थोऽभिधीयते स सौगतैर्नाङ्गीक्रियते । येऽपिच लौकिकाश्शब्दाः तैस्सर्वैरप्यनभिधेयं तत्तदर्थविलक्षणञ्च तत्त्वमिति कथयन्ति । सर्वनिषेधरूपत्वाच्छून्यामिति व्यवहरन्ति । तत्त्वतः विधिर्वा प्रतिषेधो वा नास्तीति वदन्ति ॥

एवं यादृशं परमार्थतत्त्वमद्वैतवाद्यभिमतं तादृशमितरैः कैश्चिदपि नाभ्युपगम्यते । एव सर्वेषु दर्शनेषूत्प्रेक्षितव्यम् । ततश्च तत्तत्सिद्धान्तिभिरुच्यमानं तत्तादृशं दूषणं तादृशतादृशपदार्थोऽनभ्युपगम इत्येव परिशिष्यते ॥

अभावस्सांख्यसम्मतः.

साङ्ख्यसिद्धान्तस्तु--शून्यवादस्य साक्षात्प्रतिपक्षभूत इति प्राक्सूचितम् । ततश्चासदादिपदानां परिणामविशेषलक्षणावस्थापन्नभावपरतैवाऽश्रीयते । प्रतिक्षणपरिणामिनस्सर्वे भावाः ऋते चितिशक्तेरिति तेषां मनीषा । अतएव सेश्वरसाङ्ख्ये पातञ्जलसूत्रे—(४-१३) व्यासदेवेनेत्थं भाषितम्——

**गुणानां परमं रूपं न दृष्टिपथमृच्छति ।**

**यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥ इति ।**

अयमत्राभिप्रायः—मायातुच्छादिपदानां तिरोभावार्हतारूपावस्थापरत्वमेवेति ॥

अपिच—वैशेषिकादिसम्मतः सप्तमः पदार्थः अभावलक्षणः तैर्नाभ्युपगम्यते एतस्मादेव शून्यवादावसरप्रसङ्गभयादिति शक्यं समुत्प्रेक्षितुम् ॥

तथा—सत्त्वपुरुषान्यताया अख्यातिरित्याश्रिता । ततश्च मिथ्याज्ञानलक्षणा भ्रान्तिरपि शून्यवादमूलभूता तैरपोह्यते । अतस्त एव प्रथमे अख्यातिवादिन इति निर्धार्यते । अतएव सर्वं ज्ञानं यथार्थमिति साङ्ख्यसिद्धान्तः ॥

ब्रह्मपरिणामवादिनो भर्तृप्रपञ्च भर्तृमित्र भास्कर यादवादीनां सिद्धान्तेषु तु अभावपदार्थः परिणामविशेषमापन्नो भाव एवेति साङ्ख्यसिद्धान्तासिद्ध एव न्यायः । अयं प्राचीनो भावान्तराभाववादः । नवीनः भावान्तराभाववादस्तु विवक्षाभेदेन घटत्वादिकमेव जातिरिति पटादिभेद इति चाख्यायत इति । सोऽपि वादः अतिरिक्तमभावपदार्थमपवदतीत्यन्यत्र विस्तरः ॥

विमर्शकावकाशः.

शून्यता वस्तुभूता नाभावभूतेति वादिनां निदानमिदम्—तत्त्वं अनारोपितं वस्त्विति सर्वे परिष्कुर्वन्ति । शून्यं तत्त्वं परमार्थं सत्यं नित्यं शाश्वतं धर्म इत्यादिभिः पदैः सौगतानां व्यवहारः प्रथमो हेतुः ।

तथा माध्यमिकवृत्तौ—

**प्रपञ्चविनिवृत्त्येकस्वभावा या च शून्यता ।**
**तस्यां तु शून्यतादृष्टि रमलायां न युज्यते ॥**

**प्रपञ्चोपशमायैव शून्यता सोपदिश्यते ।**
**तस्मात्प्रपञ्चोपशमः शून्यतायां प्रयोजनम् ॥**

**शून्यत्वं नास्तितारूपं भवांस्तु परिकल्पयन् ।**
**प्रपञ्चं वर्धयन्नेव नच वेत्ति प्रयोजनम् ॥** (१९० पु.)

इत्यादि श्रूयते । अत्र शून्यतादृष्टिः नास्तितापरिकल्पना न कर्तव्येति स्पष्टमभिधानाद्वस्तुरूपैव शून्यतेति स्यादिति द्वितीयो हेतुरिति ॥

तदेतदयुक्तम्—अत्र दृष्टिरेव प्रतिषेध्या न शून्यता । सा च दृष्टिरभिनिवेशलक्षणा । सर्वाभिनिवेशप्रशमायोपदिष्टायां शून्यतायामपि यद्यभिनिवेशः तदा देशना निष्प्रयोजना स्यात् । तस्माच्छून्यताविषयकाभिनिवेशो न कर्तव्य इत्युपदिश्यते ॥

तदिदमुच्यते बोधिचर्यावतारपञ्जिकायाम्—

**मुक्तिस्तु शून्यतादृष्टेस्तदर्थाशेषभावना ।**
**इति तस्माच्छून्यतैव बोधिमार्ग इति स्थितम् ॥ इति ॥**

शून्यतादृष्टेः शून्यतादर्शनादित्यर्थः ॥ (४३८)

तथा—

**सर्वसङ्कल्पहानाय शून्यताऽमृतदेशना ।**
**यश्च तस्यामपि ग्राहस्त्वयाऽसाववसादितः ॥ इति । ३५९ ॥**

बुद्धं भगवन्तं प्रति वचनमिदम् । चरमोऽपि ग्राहः त्वयैव विनाशनीय इति भावः ॥

अपि च—

**शून्यता सर्वदृष्टीनां प्रोक्ता निस्सरणं जिनैः ।**
**येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे ॥ ४१४ ॥**

इत्याशङ्क्य—

**शून्यतावासनाधानात् हीयते भाववासना ।**
**किञ्चिन्नास्तीति चाभ्यासात् साऽपि पश्चात्प्रहीयते ॥**

इति च समाहितम् ॥

अयमर्थः अत्रैवावधेयः—"एवं निस्स्वभावतैव सर्वपदार्थानां निजं पारमार्थिकं रूपमवतिष्ठते । तदेव प्रधानपुरुषार्थरूपं परमं प्रयोजनम् । अत्रापि नाभिनिवेष्टव्यम् । अन्यथा भावाभिनिवेशो वा

शून्यताभिनिवेशो वा न कश्चिद्विशेषः, उभयोरपि कल्पनात्मकत्वात्सांवृतमेवेति ॥ (३५८)

यथा—मानलक्षणशत्रुविजयायोपादीयमानोऽपि मानः, क्रोधलक्षणशत्रुविजयायोपादीयमानोऽपि क्रोधः न मानः नापि क्रोधः, तथा सर्वाभिनिवेशविनाशायोपादीयमानोऽप्यभिनिवेशः नाभिनिवेश इति भावोऽवगन्तव्यः ॥ (२७५)

"तस्माच्छून्यताया इदं फलम्—यत्करुणया संसारेऽवतिष्ठमानोऽपि शून्यतादर्शनात्संसारदोषैर्न लिप्यते। इदमप्रतिष्ठितनिर्वाणतारूपमपि शून्यतायाः फलम्" इतिचोक्तम् ॥ (४४६)

बोधिप्राप्त्यनन्तरं तु तथागतत्वं फलम्। तथागतपदं यथा आगतः तथा गतः शून्यभूत इत्यर्थमभिधत्ते। लङ्कावतारे (१८९) स्फुटमिदम् ॥

बौद्धसम्प्रदायः.

सौगतसम्प्रदायस्त्वेवमुपलभ्यते लङ्कावतारे (१४४) यथा—"अत एतस्मात्कारणान्महामते मयेदमुक्तम्—याञ्च रात्रिं तथागतोऽभिसम्बुद्धः यां च रात्रिं परिनिर्वास्यति अत्रान्तरे एकमप्यक्षरं तथागतेन नोदाहृतम्, नोदाहरिष्यति। तत्रेदमुच्यते—

**यस्यां रात्र्यामधिगमः यस्यां च परिनिर्वृतिः।**
**एतस्मिन्नन्तरे नास्ति मया किञ्चित्प्रकाशिम्॥"** इति। लं. ३२४

बोधिचर्यावतारेऽप्येवमुच्यते "तदुक्तम्—यस्यां रात्रौ तथागतोऽभिसंबुद्धो बभूव, यस्यां च परिनिर्वृतः। अत्रान्तरे तथागतेन एकमप्यक्षरं नोदाहृतम्। तत्कस्य हेतोः? नित्यं समाहितो भगवान्

ये च अक्षरस्वररुतवैनेयाः सत्त्वाः ते तथागतमुखात् ऊर्णाकोशात् उष्णी-षात् ध्वनिं निश्चरन्तं शृण्वन्ति । उक्तं च—

**तस्मिन् ध्यानसमापन्ने चिन्तारत्नवदास्थिते ।**
**निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥**
**ताभिर्विज्ञापितानर्थान्सर्वान् जानन्ति मानवाः ।**
**हितानि च यथा भव्यं क्षिप्रमासादयन्ति ते ॥ इति ॥**

चतुस्स्तवेऽप्युक्तम्—(नागार्जुन)

**नोदाहृतं त्वया किञ्चिदेकमप्यक्षरं विभो ।**
**कृत्स्नश्च वैनेयजनः धर्मवर्षेण वर्षितः ॥ ४२० ॥**

माध्यमिकवृत्तावपि—

**सर्वोपलम्भोपशमः प्रपञ्चोपशमश्शिवः ।**
**न क्वचित्कस्यचित्कश्चित् धर्मो बुद्धेन देशितः ॥ १८४ ॥ इति ॥**

लङ्कावतारे एवमप्युक्तम्—" क्वचिन्महामते बुद्धक्षेत्रे अनिमिष-प्रेक्षया धर्मो देश्यते । क्वचिदिङ्गितैः क्वचिद्भ्रूविक्षेपेण क्वचिन्नेत्रसञ्चारेण क्वचिदास्येन क्वचिद्विजृम्भितेन क्वचिदुत्कासनशब्देन क्वचित् क्षेत्रस्मृत्या क्वचित् स्पन्दितेनेति "। अत्रोपाख्यानानि बहूनि वर्णितानि ॥ १०५ ॥

अतएवात्रान्योन्यं विवादो हीनयानमहायानयोः । तथाहि—(बोधि ४२५) " तत्र वैभाषिकादयः सर्वधर्मशून्यतायाः सर्वावरणविभ्रम-दुःखप्रहाणमसहमानाः चतुरार्यसत्यदर्शनभावनां च तदुपायमिच्छन्तः प्राहुः—

**सत्यदर्शनतो मुक्तिः शून्यतादर्शनेन किम् ।**
**न विनाऽनेन मार्गेण बोधिरित्यागमो यतः ॥ इति ॥**

आर्यसत्यचतुष्टयन्तु दुःखसमुदयमार्गनिरोधलक्षणम् । किञ्च(४३०)—

**नन्वसिद्धं महायानं कथं सिद्धस्त्वदागमः ।**
**यस्मादुभयसिद्धोऽसौ न सिद्धोऽसौ तवादितः ॥**

अयमर्थः—हीनयानवादिनः महायानाप्रामाण्यं प्रथमेन पादेनापादयन्ति। तेऽपि महायानवादिनः तथैव हीनयानाप्रामाण्यं द्वितीयेनापादयन्ति—कथं सिद्ध इति। केन प्रकारेण त्वदीयागमः भगवद्वचनमिति सिद्धः। उभयवादिसिद्धत्वात्प्रमाणं हीनयानमिति पूर्वपक्षिणः प्राहुः—यस्मादिति। ततस्सिद्धान्तिनोऽपीत्थमाहुः—न सिद्ध इति। त्वदागमोऽप्यभ्युपगमात्प्रागसिद्ध एव। भवतामपि तत्प्रामाण्यमसिद्धमित्युभयवादिसिद्धत्वमसिद्धमिति भावः॥

इदन्तर्हि साधनमस्तु गुरुपरम्परयाऽऽम्नायायातं बुद्धवचनत्वेन यच्च सूत्रेऽवतरति विनये संदृश्यते धर्मतां च न विलोपयति तद्बुद्धवचनम्, नान्यत्। तत्राह—

**यत्प्रत्यया च तत्रास्था महायानेऽपि तां कुरु।**
**अन्योभयेष्टसत्यत्वे वेदादेरपि सत्यता॥**

अन्योभयेति। आवयोर्विवादारूढत्वात् आवाभ्यामन्ये ये केचित् उभयविधदार्शनिकाः तैस्सम्मतत्वेन सत्यत्वं स्यादिति पूर्वपक्ष्याशङ्का। तत्रोत्तरं वेदादेरिति। वेदवैशेषिकादेरपि सत्यता स्यादिति॥

अपि च—चतुर्निकायमष्टादशभेदभिन्नं भगवतश्शासनम्। तत्रैकस्यैव निकायस्यानेकभेदसम्भवात स्वयूथ्यानामप्यन्योन्यं विवादः। (४३४) तथा अस्ति ह्येकभेदावस्थितानामपि सौत्रान्तिकादीनामप्यन्योन्यं विवाद इति॥

अपि च (४३५)—

**शासनं भिक्षुतामूलं भिक्षुतैव च दुःस्थिता।**

इत्यप्युक्तम्। अयमर्थः— पञ्चविधो भिक्षुः संज्ञाभिक्षुः, प्रतिज्ञाभिक्षुः, भिक्षणशीलो भिक्षुः, ज्ञप्तिचतुर्थकर्मणा उपसम्पन्नः भिक्षुः, भिन्नक्लेशो

भिक्षुः इति। भिन्नक्लेशः निवृत्तसंसारः। दुःस्थिता शून्यतादर्शनमन्तरेणासमञ्जसा। केवलसत्यदर्शनतो न युज्यत इत्यर्थः। अत्र भिन्नक्लेश एव बोधिसत्त्वः। परसमये यः जीवन्मुक्त इत्युच्यते। स एव दयामयहृदयः बोधिचर्यानिष्ठः। (८७) बोधिः बुद्धत्वं सर्वावरणप्रहाणात् सर्वधर्मनिःस्वभावताधिगमः॥

न ह्यविस्मृतसम्प्रदायानामन्योन्यं विवादो युक्तः। न च सर्वज्ञवचनेषु परस्पराहतिरस्ति। न च सूत्राभिधर्मविनयानां परस्परमेकवाक्यता सम्भवतीति॥

अयमत्र सिद्धान्तसारः (४३१) अध्याशयसंचोदनसूत्रेपि—अपि तु मैत्रेय चतुर्भिः कारणैः प्रतिभानं सर्वं बुद्धभाषितं वेदितव्यम्। कतमैश्चतुर्भिः—इह मैत्रेय प्रतिभानमर्थोपसंहितं भवति नाऽनर्थोपसंहितम्। धर्मोपसंहितं भवति नाधर्मोपसंहितम्। क्लेशप्रहायकं भवति न क्लेशविवर्धकम्। निर्वाणगुणानुशंससन्दर्शकं भवति न संसारगुणानुशंससन्दर्शकमिति॥

एतैश्चतुर्भिः यस्य कस्य चिन्मैत्रेय! प्रतिभाति प्रतिभास्यति वा तत्र श्राद्धैः कुलपुत्रैः कुलदुहितृभिर्वा बुद्धसंज्ञा उत्पादयितव्या। शास्तृसंज्ञां कृत्वा स धर्मः श्रोतव्यः। तत्कस्य हेतोः? यत्किञ्चिन्मैत्रेय सुभाषितं सर्वं तद्बुद्धभाषितम्। तत्र मैत्रेय य इमानि प्रतिभानानि प्रतिक्षिपेत्, नैतानि बुद्धभाषितानीति तेषु चागौरवमुत्पादयेत्। पुद्गल (शास्त्र) विद्वेषेण तेन सर्वं बुद्धभाषितं प्रतिभानं प्रतिक्षिप्तं भवति। धर्मं प्रतिक्षिप्य धर्मव्यसनसंवर्तनीयेन कर्मणाऽपायगामी भवति तत्र धर्मताया अविलोपनमेव सम्यग्लक्षणम्॥

उक्तञ्च—

> यदर्थवद्धर्मपदोपसंहितं
> त्रिधातुसंक्लेशनिवारणं वचः ।
> भवेच्च यच्छान्त्यनुशंसदर्शकं
> तदुक्तमार्षं विपरीतमन्यथा ॥ इति॥

ततश्च सूत्रविनयाभिधर्मभेदेन त्रिप्रस्थानं बौद्धशास्त्रं महात्मभिः प्रणीतं बुद्धानुग्रहमूलं बुद्धवचनाऽभिमतं सर्वं प्रमाणमित्युक्तं भवति ॥

लङ्कावतारे—

> यावत्प्रतिज्ञा क्रियते तावत्सर्वं ससङ्करम् ।
> स्वचित्तमात्रं संपश्येन्न विवादं समारभेत् ॥ २१९. ॥

तथा—

> सूत्रविनयाभिधर्मेण विशुद्धिं कल्पयन्ति ये ।
> ग्रन्थतो न तु चार्थेन न ते नैरात्म्यमाश्रिताः ॥ इति २९.० ॥

अत्र वैदिका अप्यागमविषये पाञ्चरात्राद्यागमसंहितासु सर्वासु भगवद्वचनत्वेन प्रतिपन्नासु एतादृशमेवाभिप्रायं सूचयन्ति । यथा—पाञ्चरात्ररक्षायां श्रीमान्वेदान्ताचार्यः निरूपयति—"कार्त्स्न्येन भगवच्छास्त्रस्य प्रामाण्यं प्रागेव प्रतिपादितम् । न चात्र भगवद्व्यतिरिक्तब्रह्मादिपुरुषकृतांशेषु कारणदोषस्सम्भवति । 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्' इति स्ववक्तृके शास्त्रे भगवतैव तेषामृषीणां तत्तत्पुण्यविशेषानुसारेण नित्येऽपि वेदे सूत्रकाण्डमन्त्रकृत्त्ववत् संहिताकर्तृत्वस्याधिकारतया समर्पितत्वात् । यथा च व्यासोक्ते महाभारते वैशम्पायनसंहिताभेदः । एवमत्रापीति न सङ्कटं किञ्चित्" इति ॥

अत्र सौगतागमविषये कौमारिलं श्लोकवार्तिकं न्यायरत्नाकरश्च—

(८७) इतश्च तदागमस्याप्रामाण्यमित्याह—

रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।
देशनाऽन्यप्रणीतैव स्याद्दते प्रत्यवेक्षणात ॥
सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निस्सरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥
एवमाद्युच्यमानन्तु श्रद्दधानस्य शोभते ।
कुड्यादिनिस्सृतत्वाच्च नाश्वासो देशनासु नः ॥
किन्नु बुद्धप्रणीतास्स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ इति ॥

लाभपूजाख्यातिरागनिमित्तं हि आगमप्रणयनं स्वयूथ्यस्पर्धानिमित्तं वा प्रक्षीणरागादिदोषस्य बुद्धस्य न सम्भवति । निर्व्यापारश्चायं, नासावर्थप्रतिपादनाय शब्दं समुच्चारयितुं शक्नोति । कथम्? प्रत्यवेक्षणपर्यायस्य विकल्पस्यासम्भवात् । अस्येदं साधनं अनेन च शब्देन इदं प्रतिपादयितुं शक्यमिति यावन्न विकल्प्यते न तावद्वाक्यप्रणयनं सम्भवति । नचायं विकल्पो निर्विकल्पकेन प्रत्यक्षेणाखिलं जगदध्यक्षयतो बुद्धस्यास्ति ! तस्मादन्येन केन चित्प्रणीतो देशनाधर्मोपदेश इत्यप्रामाण्यमिति । तस्मिन्निर्व्यापारेऽपि तत्सन्निधिमात्रेणैव कुड्यादिभ्योपि देशना निस्सरन्तीति चेत् श्रद्दधानस्योच्यमानं शोभते, नास्माकमित्याह—सान्निध्येति सार्धेन । श्रद्दधानं प्रत्युच्यमानमित्यर्थः । कुड्यादिनिस्सृतासु च बुद्धप्रभावकृतत्वं न निर्णेतुं शक्यम् । अन्यथापि सम्भवादित्याह—कुड्यादीति सार्धेन । ततश्च न प्रामाण्याध्यवसायः सम्भवतीति ॥

## स्वप्रकाशविचारः.

ये तु स्वयूथ्याः चित्तमेव वस्तुसत् स्वप्नादिषु तथा प्रतिभासते इति मन्यन्ते । तेऽपि यथावसरमग्रे स्वसंवेदननिराकरणान्निराकरिष्यन्ते इत्युक्तम् । (बो. ३७१) तद्यथा—इयमत्र योगाचाराणामाशङ्का—

(३९.० पु बो.) यदा सर्वं जगन्मायात्मकतया स्वभावशून्यमुपगतं मध्यमकवादिभिः मायास्वभावसंवृतिग्राहिणी बुद्धिरपि भवतां नास्ति बाह्यवत्, तदा माया केनोपलभ्यते ग्राहकवस्त्वभावात् । यस्य पुनः चित्तमेव परमार्थसत् बाह्यरूपतया भ्रान्तं तथा प्रतीयते न तस्यायं दोष इति ॥

अत्रोच्यते—स्वभावशून्यमेव सर्वं जगत् यदा युक्तितः प्रतिपादितं तदा कः कस्य स्वभावः वस्तुत इति कस्य केन वेदनं स्यात् । उक्तं च भगवता—"सर्वे धर्माः शून्याः शून्यतालक्षणं चित्तम् । सर्वे धर्मा विविक्ताः विविक्ततालक्षणं चित्तम्" इति । "चित्तं चित्तं न पश्यति" इति च ॥

**न च्छिनत्ति यथाऽऽत्मानमसिधारा तथा मनः ।**
**अङ्गुल्यग्रं यथाऽऽत्मानं नात्मना स्प्रष्टुमर्हति ॥**

इति ॥

पुनश्शङ्का समाधानं च—

**आत्मभावं यथा दीपः संप्रकाशयतीति चेत् ।**
**नैव प्रकाश्यते दीपः यस्मान्न तमसा वृतः ॥**

विद्यमानस्य वस्तुनः यदावरणं तस्यापनयनं प्रकाशनम् । नैतद्दीपेऽस्तीति ॥

पुनश्शङ्का—

**न हि स्फटिकवन्नीलं नीलत्वेऽन्यमपेक्षते ।**
**तथा किञ्चित्परापेक्षं अनपेक्षं च दृश्यते ॥** इति ॥

समाधानम्—

**अनीलत्वन तन्नीलं कुर्यादात्मानमात्मना ॥**

अयं भावः—नीलस्यापि नीलत्वे सापेक्षतैव नीलभावं प्रति स्वहेतुप्रत्ययापेक्षत्वात् । अन्यथा तत् अनीलमेव स्वहेतोरुत्पद्येत । पुनस्तद्भावे

परनिरपेक्षं स्वयमेव नीलमात्मानं कुर्यात्। न चैतदस्ति, स्वात्मनि क्रिया-विरोधात्। इति॥

यदुच्यते (३९६)—

**विज्ञानं जडरूपेभ्यो व्यावृत्तमुपजायते।**
**इयमेवात्मसंवित्तिः अस्य या जडभिन्नता॥**

अत्रोच्यते—

**क्रियाकारकभेदेन न स्वसंवित्तिरस्य तु।**
**एकस्यानंशरूपस्य त्रैरूप्यानुपपत्तितः॥ इति॥**

अयं भावः—क्रियाकारकभेदेन व्यवहारप्रसिद्धं शब्दार्थमधिगम्य दूषणमुक्तं, स्वसंवेदनशब्दस्य तदर्थाभिधायित्वात्। यदि पुनर्दोषभयात् लोकप्रसिद्धः शब्दार्थः परित्यज्यते तदा लोकत एव बाधेति॥

वस्तुतस्तु—हेतुप्रत्ययोपजनितस्य प्रतिबिम्बस्येव निःस्वभावत्वात् तत्त्वतो निजस्वभावाभावात् गगनोत्पलकल्पस्यात्मसंवेदनं नोचितं शून्यवादिनाम्। वस्तुवादिनां तु संवेदनं क्रियेति कारकभेदोऽवर्जनीय इति दूषणं दुरुद्धरम्॥

किञ्च (३९७)—

**दीपः प्रकाशत इति ज्ञात्वा ज्ञानेन कथ्यते।**
**बुद्धिः प्रकाशत इति ज्ञात्वेदं केन कथ्यते॥**
**प्रकाशा वाऽप्रकाशा वा यदा दृष्टा न केनचित्।**
**वन्ध्यादुहितृलीलेव कथ्यमानाऽपि सा मुधा॥**

तेन ज्ञानसंवेदनाभावे अर्थानधिगमादयो दोषाः निःस्वभाववादिनो नावतरन्ति। लोकव्यवहारस्तु सांवृतसर्वाभ्युपगमनिबन्धनस्समुपपद्यत एवेति॥

अनक्षरः धर्मः.

बुद्धस्य मौनममौनं वाऽस्तु । विकल्पाविषयतया परमार्थभूताया-श्शून्यतायाः देशयितुमशक्यत्वात् । शून्यतालक्षणं तत्त्वमशेषसांवृतव्यव-हाररहितस्वभावं परमार्थसत्यं कथं शक्यते समुपदेष्टुमित्यत्राह---

**अनक्षरस्य धर्मस्य श्रुतिः का देशना च का ।**
**श्रूयते देश्यते चार्थः समारोपादनक्षरः ॥ बो ३६५ ॥**

अतः व्यवहारसत्य एव स्थित्वा परमार्थो देश्यते । परमार्थदेशनावग-माच्च परमार्थाधिगमो भवति । तस्यास्तदुपायत्वात् । तदुक्तं शास्त्रे--

**व्यवहारमनादृत्य परमार्थो न देश्यते ।**
**परमार्थमनागम्य निर्वाणं नाधिगम्यते ॥**
**उपायभूतं व्यवहारसत्यम् ।**
**उपेयभूतं परमार्थसत्यम् ॥ इति ३७२ ॥**

उपदेशप्रकारस्तु दृष्टान्तद्वारेण संवृतिमुपादाय वक्तव्यः । यदाह-शास्त्रवित्—

**विकल्पितं यत्तिमिरप्रभावात्**
**केशादिरूपं वितथं तदेव ।**
**येनात्मना पश्यति शुद्धदृष्टिः**
**तत्तत्त्वमित्येवमिहाप्यवेहि ॥ इति ॥ ३६५ ॥**

अयमर्थः—(३६३) यद्यपि सर्वप्रपञ्चविनिर्मुक्तस्वभावं परमार्थ-सत्यम् । अतस्सर्वोपाधिशून्यत्वात्कथं कयाचित् कल्पनया पश्येत् कल्प-नासमतिक्रान्तस्वरूपञ्च शब्दानामविषयः । विकल्पजन्मानो हि शब्दाः विकल्पधियामविषये न प्रवर्तितुमुत्सहन्ते । तथापि भाजनश्रोतृजनानुग्रहार्थं संवृत्या निदर्शनोपदेशः किंचिदभिधीयते ॥

यथा—तिमिरप्रभावात्तैमिरिकः सर्वमाकाशदेशं केशोण्डुकमण्डित-मितस्ततो मुखं विक्षिपन्नपि पश्यति। तथा कुर्वन्तमवेत्याऽतैमिरिकः किमयं करोतीति तत्समीपमुपगम्य तदुपलब्धकेशप्रणिहितलोचनोऽपि न केशाकृतिमुपलभते, नापि तत्केशाधिकरणान् भावाभावादिविशेषान् परिकल्पयति॥

यदा पुनरसौ तैमिरिकोऽतैमिरिकाय स्वाभिप्रायं प्रकाशयति केशानिह पश्यामीति तदा तद्विकल्पापसरणाय तस्मै यथाभूतमसौ ब्रवीति नात्र केशास्सन्तीति तैमिरिकोपलब्धानुसारेण प्रतिषेधपरमेव वचनमाह। न च तेन तथा प्रतिपादयताऽपि कस्यचित्प्रतिषेधः कृतो भवति, विधानं वा। तच्च केशानां तत्वं यत्तैमिरिकः पश्यति तन्नातैमिरिकः॥

एवमविद्यातिमिरोपघातात् अतत्त्वदृशो बालाः यदेतत् स्कन्धधात्वायतनादिस्वरूपमुपलभन्ते तदेतेषां सांवृतं रूपम्। तानि स्कन्धादीन्येव स्वभावेन निरस्तसमस्ताविद्यावासनाः बुद्धाः भगवन्तः पश्यन्त्यतैमिरिकोपलब्धकेशदर्शनन्यायेन॥ इति॥

इदमत्रावधेयम्—बुद्धः "नैकमप्यक्षरं प्रोवाच" इत्ययमतिवादस्स्यात्, यतः तच्छिष्यप्रशिष्यप्रणीतानां प्रबन्धानां विविधानां बुद्धानुग्रहमूलताप्रकाशनेन बुद्धवचनतासम्पादनमेव हेतुदर्शनं स्पष्टं प्रतीयते। वस्तुतस्तु—बुद्धाभिप्रायो वा तदीयानां महतामभिप्रायो वा न खलु केवलं वक्तृवैलक्षण्यमात्रेण परिग्रहमर्हति। किं तु विषयवैलक्षण्येनेति सुप्रसिद्धं विदुषाम्। तदुक्तं न्यायपरिशुद्धौ—

यथालोकं यथावेदं लौकिके वैदिकेऽपिवा।
यो वक्ता स परिग्राह्यः प्राक्तनोऽद्यतनोऽपिवा॥
कणान्वा भक्षयेत्कामं माहिषाणि दधीनि वा।
युक्तियुक्तन्तु गृह्णीमः न तु तद्वाक्यगौरवात्॥ इति॥

तथा संवित्सिद्धौ—

**हन्त ब्रह्मोपदेशोऽयं श्रद्दधानेषु शोभते ।**
**वयमश्रद्दधानास्स्मो ये युक्तिं प्रार्थयामहे ॥** इति च ॥

तस्माद्बुद्धः प्रथमं सर्वं क्षणिकं दुःखं स्वलक्षणं शून्यमिति सामान्यतः कैश्चित्सूत्रैः समुपादिदेशेति सम्भावयामः, यथोपनिषत्सु—"अथात आदेशो नेतिनेति" इति । अत एव कानिचित्सूत्राणि "इदं प्रत्ययफलम्, उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्माणां धर्मता धर्मस्थितिता धर्मनियामकता च प्रतीत्यसमुत्पादानुलोमता" इत्यादीनि बुद्धसूत्रत्वेन प्रसिद्धानि सर्वदर्शनसंग्रहे । अनूदितानि चेतरैः कुमारिलादिभिस्तन्त्रवार्तिकादौ । ततश्च तच्छिष्याः स्वस्ववासनामधिकारलक्षणामनुरुध्य परिग्रहपरिष्कारादिकमकुर्वन् ॥

एवं समुपदिष्टं शून्यत्वमेव केचिद्गगनकुसुमतुल्यं निस्स्वभावत्वम्, अन्ये दुर्निरूपत्वम्, इतरे नैरात्म्यम्, अपरे विज्ञप्तिमात्रम्, परे प्रतीत्यसमुत्पादमात्रम्, इत्येवंप्रकारेण निरवोचन् । अत एव शून्यतत्त्वविषये अधुनातनानां विचित्रस्याभिप्रायस्यावकाशः । सर्वानपि प्रबन्धान् प्रायः सम्यक्समवधानेन परिशीलयतां विपश्चितामिदमतिरोहितम् । निस्स्वभावतालक्षणशून्यवादिनस्तु सर्वानपि परिष्कारान् स्वसिद्धान्त एवान्तर्भावयन्ति, प्रक्रियाभेदमात्रमित्यभिप्रयन्ति ॥

एवं बुद्धस्य साक्षादेवोपदेष्टृत्वं सर्वदर्शनसङ्ग्रहकर्ताऽपीत्थमनुवदति—"यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बौद्धानां बुद्धिभेदाच्चातुर्विध्यम् । यथा गतोऽस्तमर्क इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरणहरणसदाचरणादिसमयं बुध्यन्ते । तथात्रैव भिक्षुपादप्रसरणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीय-

त्वानुगतत्वसर्वसत्यत्वभ्रमव्यावर्तनेन सर्वशून्यतायामेव पर्यवसानम् इति ॥

बुद्धस्य सर्वदा समाधिस्थित्या मौनकल्पनमपि शून्यताया एव स्थिरीकरणार्थोऽतिवादो माहायानिकानामित्यपि सम्भावयामः । मौनेनैव तत्त्वोपदेशनमपि अवचनेनैव प्रवचनपर्यायमुपानिषत्स्वपि दृश्यते ॥

यथा बाष्कलिबाध्वसंवादे—"स होवाचाधीहि भो इति । स तूष्णीं बभूव । तं ह द्वितीये तृतीये वा वचन उवाच । ब्रूमः खलु त्वं न विजानासि । उपशान्तोऽयमात्मा" इति । अयमर्थः—स बाष्कलिः बाध्वं प्रार्थयामासाधीहीति । द्वितीये तृतीये वा प्रश्ने इत्यर्थः । उपशान्त इति । निरस्तसमस्तविशेष इत्यर्थः । तस्मादवचनेनैव प्रोवाचेत्यर्थः । "यतो वाचो निवर्तन्ते" इत्यपि श्रूयते ॥ (शं. सू. भा. ३-२-१७)

तथा विद्वद्भिरप्यनुसन्धीयते—

**चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा ।**
**गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥**

इति । स्तोत्रमप्येवं पठ्यते दशश्लोक्यन्ते—

**न चैकं तदन्यद्द्वितीयं कुतस्स्यात्**
**न वा केवलत्वं न चाकेवलत्वम् ।**
**न शून्यं न चाशून्यमद्वैतकत्वात्**
**कथं सर्ववेदान्ततत्त्वं ब्रवीमि ॥ इति ॥**

शून्यतोपदेशः.

**बुद्ध्या विविच्यमानानां स्वभावो नाऽवधार्यते ।**
**तस्मादनभिलप्यास्ते निस्स्वभावेन देशिताः ॥**

इति लङ्कावतारे (११;६) निस्स्वभावलक्षणशून्यता समुपदिष्टा ॥

**इदं वस्तु बलायातं यद्वदन्ति विपश्चितः ।**
**यथायथाऽर्थाश्चिन्त्यन्ते विविच्यन्ते तथा तथा ॥** इति ॥ **सर्व** ॥ विविच्यन्ते न क्वचिदपि पक्षे व्यवतिष्ठन्ते इत्यर्थः । इयं सर्वात्मना दुर्निरूपत्वलक्षणा शून्यता । भामत्यादिषु सर्वेष्वपि प्रबन्धेषु माध्यमिक-मतनिरासावसरे समुदाहृतामिदं वचनम् ॥

**न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।**
**चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥** इति **बो. ३५८** ॥ इदं सत्त्वासत्त्वादिकोटिचतुष्टयविलक्षणं शून्यत्वम् । अत्रासत्पदार्थः शून्यवादिसम्मतः तुच्छलक्षणो नाऽभावः । अपि तु नैयायिकादिसम्मतः प्रागभावादिविभागविभक्तः सप्तमः पदार्थः । अन्यथा असत्त्वस्यापि प्रतिक्षेपादसद्वादविरोधप्रसङ्गः । निरूपितमिदं प्रागेव ॥

एवं शून्यतायाः बहुभिः प्रकारैः निरूपणस्य निदानमिदं स्यादित्युल्लिखामः—प्रपञ्चोऽयं बहुभिः प्रकारैस्तैस्तैर्वादिभिर्निरूपितोऽस्ति तत्र सर्वेणापि प्रकारेण शून्यतायामेव पर्यवसानमिति निरूपणाय शून्य-ताप्रकारभेदावकाश इति ॥

माध्यमिकवृत्तौ—

**अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ।**
**निर्विकल्पमनानार्थं एतत्तत्त्वस्य लक्षणम् ॥**
**अनिरोधमनुत्पादमनुच्छेदमशाश्वतम् ।**
**अनेकार्थमनानार्थमनागममनिर्गमम् ॥**
**यः प्रतीत्यसमुत्पादः प्रपञ्चोपशमाश्शिवः ।**
**देशयामास सम्बुद्धः तं वन्दे वदतां वरम् ॥** इति ॥

लङ्कावतारे—

**तथता शून्यता कोटी निर्वाणं धर्मधातुकम् ।**
**अनुत्पादश्च धर्माणां स्वभावः पारमार्थिकः ॥**

**अथ वैचित्र्यसंस्थानं विकल्पो यदि जायते ।**
**आकाशे शशशृङ्गे च अर्थाभासं* भविष्यति ॥ ३३६ ॥**

**स्वप्नं केशोण्डुकं माया गन्धर्वमृगतृष्णिका ।**
**अहेतुकाऽपि दृश्यन्ते तथा लोकविचित्रता ॥ २०० ॥**

**आकाशं शशशृङ्गञ्च वन्ध्यायाः पुत्र एव च ।**
**असन्तश्चाभिलप्यन्ते तथा भावेषु कल्पना ॥ १०५ ॥**

**वासनाहेतुको लोकः नासन्न सदसत्कचित् ।**
**ये पश्यन्ति विमुच्यन्ते धर्मनैरात्म्यकोविदाः ॥ ३२२ ॥**

**अलातचक्र गन्धर्वे प्रतिश्रुत्कासमोद्भवाः ।**
**अद्वया वितथा शून्या भूतकोटिश्च धर्मता ॥**
**निर्विकल्पश्च देशेमि ह्येते निष्पन्नलक्षणाः ॥ २८७ ॥**

**अनुत्पादश्च तथता भूतकोटिश्च शून्यता ।**
**रूपस्य नामान्येतानि अभावं न विकल्पयेत् ॥ ३४९ ॥**

**स्वप्नं केशोण्डुकं माया गन्धर्वं मृगतृष्णिका ।**
**सर्वदृष्टिप्रहाणञ्च तदनुत्पादलक्षणम् ॥ २०२ ॥**
**अस्वभावा अनुत्पन्नाः प्रकृत्या गगनोपमाः ॥ २०३ ॥**

गन्धर्वनगरमायापुरुषवत् । तद्यथा—कश्चिद्गन्धर्वनगरे बालजातीयः मायापुरुषसत्त्वसार्धं विचित्रं प्रविशन्तं निर्गच्छन्तं वा कल्पयेत् अमी प्रविष्टाः अमी निर्गताः । न च तत्र कश्चित्प्रविष्टः न वा निर्गतः ॥ (१९९)

बोधिचर्यावतारे—

**निःस्वभावा अमी भावाः तत्त्वतः स्वपरोदिताः ।**
**एकानेकस्वभावेन वियोगाद्वियदब्जवत् ॥ ३५८ ॥**

---

*प्रायेण सौगतप्रबन्धेषु शब्दशुद्धिचिन्ता न चिन्तनीया.

**एवञ्च न निरोधोऽस्ति न च भावोऽस्ति तत्त्वतः ।**
**अजातमनिरुद्धं च तस्मात्सर्वमिदं जगत् ॥**
**स्वप्नोपमास्तु गतयः विचारे कदळीसमाः ।**
**निर्वृतानिर्वृतानाञ्च न विशेषोऽस्ति वस्तुतः ॥ ५८८ ॥**

आकाशदृष्टान्तः.

एवं शून्यरूपतत्त्वस्याकाशो दृष्टान्तीक्रियते प्रायेण बौद्धप्रबन्धेष्वित्याकाशस्वरूपं तदभिमतं निरूपणीयमिति प्रक्रमः । तत्र लङ्कावतारे— "तद्यथा, महामते आकाशं न नित्यं नाऽनित्यं नित्यानित्यव्युदासात् । एकत्वान्यत्वोभयत्वानुभयत्व नित्यत्वानित्यत्व दोषैरवचनीयम् । पुनरपरं महामते शश हय खरोष्ट्र मण्डूक सर्प मक्षिका मीन विषाणतुल्यं स्यादनुत्पादादनित्यत्वात्" इति ॥ (२१७)

तद्यथा--महामते आकाशं सङ्ख्यालक्षणातीतं, अथच विकल्प्यते एवमाकाशमिति । एवमेव महामते स्कन्धाः सङ्ख्यालक्षणगमनातीताः भावाभावविवर्जिताः चतुष्कोटिरहिताः सङ्ख्यागणनानिर्देशेन बालैः । न त्वार्यैः । आर्यैः पुनर्महामते मायाविचित्ररूपाकृतिवत् अन्यानन्यवर्जिताः प्रज्ञाप्यन्ते स्वप्नबिम्बपुरुषवत् । (१२५) एवं शून्यानुत्पादस्वाभाव्यं सर्वधर्माणां प्रत्यवगन्तव्यम् । इति ॥ (१८८)

भगवानाह—असतामपि महामते भावानामभिलापः क्रियते । यदुत–शशविषाण कूर्मरोम वन्ध्यापुत्रादीनां लोके दृष्टोऽभिलापः । तेन च महामते न भावा नाभावा अभिलप्यन्ते ॥ इति ॥ (१०४)

बोधिचर्यावतारेऽपि—

**षट्केण युगपद्योगात्परमाणोष्षडंशता ।**
**षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः ॥**

परमाणवोऽपि पुनरणीयांसः भागाः तथैव निरूप्यमाणाः निरात्मकतया नभःस्वभावतां प्रतिपद्यन्ते । अतो निष्कृष्यमाणः निस्स्वभावतया आकाशं शून्यमेव ॥ (५०३)

यथाऽऽकाशं प्रज्ञप्तिसन्मात्रमसत् न क्वचिदर्थक्रियायां समर्थं तथा संसारः निःस्वभावो ह्याकाशः ॥ ४०९ ॥

अपिच—अत एवचानुत्पन्नानिरुद्धस्वभावतया निष्प्रपञ्चत्वात्सर्वधर्माः विमोक्षाभिमुखाः धर्मधातुनिर्याताः आकाशधातुपर्यवसानाः अप्रज्ञप्तिकाः अव्यवहाराः अनभिलप्याः अनभिलपनीया इत्युच्यन्ते ॥ ५२७ ॥

यथा आकाश मनागत मगत मकृत मविकृत मनभिसंस्कृत मस्थित मसंस्थित मव्यवस्थित मनुत्पन्न मनिरुद्धमेवं सुभूते सर्वे धर्मा अनागता अगता इत्यादि ॥ प्रज्ञापारमिता २९७ ॥

अत एव तदविषयस्सर्वकल्पनानां यद्भावाभाव स्वपरभाव सत्यासत्य शाश्वतोच्छेद नित्याऽनित्य सुखदुःख शुच्यशुच्यात्मानात्म शून्याशून्यैकत्वान्यत्वोत्पादनिरोधादयो दोषाः तत्त्वस्य न संभवन्ति अमीषां सांवृतत्वात् ॥ बो. ३६६ ॥

**निरीहा वशिकाः शून्याः मायावत्प्रत्ययोद्भवाः ।**
**सर्वे धर्मास्त्वया नाथ निस्स्वभावाः प्रकाशिताः ॥ इति ४८९ ॥**

अत्र प्रायेण शून्यतावगमायाकाशमुदाह्रियते अभाव एवाकाश इति तेषां हृदयम् । एतादृशसंस्कारनिरोधायैव "आकाशवत्सर्वगतश्च नित्यः" इति वेदान्तवाक्यावतारः । अत एवाचार्यबादरायणोऽपि "आकाशे चाविशेषात्" इति सूत्रेणाकाशस्य तुच्छतां निराचकार ॥ इति ॥

अविद्या.

अथाविद्यानिरूपणम्, बोधिचर्यावतारे —

"यथा हि माया हस्त्याकारतया तदाकारशून्याऽपि मन्त्रौषधप्रभावात् इदम्प्रत्ययतया तत्त्वरहितापि प्रकाशते तथा अमी अपि क्लेशाः विपर्यासनिमित्ताः अयोनिशः मनसिकारसमुद्भूताः इदम्प्रत्ययतामात्रतः निम्तत्त्वा एव प्रकाशन्ते ॥ ९० ॥

एतदुक्तं भवति—सर्व एवामी आध्यात्मिका बाह्याश्च भावाः स्वभावद्वयमाविभ्रतः समुपजायन्ते । यदुत—सांवृतिकं पारमार्थिकं च । तत्रैकं अविद्यातिमिरावृतबुद्धिलोचनानामतथाभूतदर्शिनां पृथग्जनानां मृषादर्शनविषयतया समादर्शितात्मकसत्ताकम् । अन्यत्प्रविचयाञ्जनशलाकोद्घातिताविद्यापटलसम्यज्ज्ञाननयनानां तत्त्वविदामार्याणां सम्यग्दर्शनविषयतया उपस्थितस्वरूपम् । यदाह—

**सम्यङ्मृषादर्शनलब्धभावं**
**रूपद्वयं विभ्रति सर्वभावाः ।**
**सम्यग्दृशां यो विषयस्स तत्त्वं**
**मृषादृशां संवृतिसत्यमुक्तम्** ॥ ३६१ ॥

अविद्या च संवृतिः । विकल्पश्च सर्व एवायमविद्यास्वभावः ॥ ३६६ ॥

तत्त्वेऽप्रतिपत्तिः मिथ्याप्रतिपत्तिः अज्ञानमविद्या । एवमविद्यायां सत्यां त्रिविधाः संस्काराः ॥ इत्यदि ॥ शालिस्तम्बसूत्रे ४७९ ॥

तत्राऽविद्या कतमा एतेषामेव षण्णां धातूनां यैकसंज्ञा पिण्डसंज्ञा, नित्यसंज्ञा, ध्रुवसंज्ञा, शाश्वतसंज्ञा, सुखसंज्ञा, आत्मसंज्ञा, सत्त्वसंज्ञा, जीवसंज्ञा, जन्तुसंज्ञा, मनुष्यसंज्ञा, मानवसंज्ञा, अहङ्कारममकारसंज्ञा । एवमादि विविधमज्ञानमुच्यतेऽविद्या ॥

एवमविद्यायां सत्यां विषयेषु रागद्वेषमोहाः । अमी अविद्याप्रत्ययास्संस्काराः ॥ इत्यादि ॥ ३८८ ॥

संव्रियते आव्रियते यथाभूतपरिज्ञानं स्वभाववरणादावृतप्रकाशनाच्चानयेति संवृतिः । अविद्या मोहो विपर्यास इति पर्यायाः । अविद्या असत्पदार्थस्वरूपारोपिका स्वभावदर्शनावरणात्मिका च सती संवृतिरुपपद्यते । उक्तं च—

**अभूतं ज्ञापयत्यर्थं भूतमावृत्य वर्तते ।**
**अविद्या जायमानेव कामलातङ्कवृत्तिवत् ॥**

तदुपदर्शितं च प्रतीत्यसमुत्पन्नं वस्तुरूपं च संवृतिरुच्यते ॥ इति ३५२ ॥

नित्यशब्दः भगवन्! काऽभिहितः । भगवानाह, भ्रान्तौ । यस्मादियं महामते भ्रान्तिः आर्याणामपि ख्यायते अविपर्यासतः । तद्यथा—मृगतृष्णाऽलातचक्रकेशोण्डुकगन्धर्वनगरमायास्वप्नप्रतिबिम्बाक्षि—पुरुषाः लोके अविद्वाद्भिर्विकल्प्यन्ते न तु विद्वद्भिः । न च पुनः न ख्यायन्ते सा भ्रान्तिः, भावाभावविवर्जितत्वात् ॥ इति ॥ लङ्का १०६ ॥

महामतिराह—भ्रन्तिर्भगवन् विद्यते नेति । भगवानाह—मायावन्महामते न लक्षणाभिनिवेशतो भ्रान्तिर्विद्यते । यदि पुनर्महामते भ्रान्तिः लक्षणाभिनिवेशेन विद्यते अव्यावृत्त एव महामते भावाभिनिवेशस्स्यात् । प्रतीत्यसमुत्पादवत् तीर्थकरकारणोत्पादवत् ॥ इति ॥ लं १०८ ॥

अनेन विज्ञायते प्रतीत्यसमुत्पादवादः शून्यवादस्य विरुद्धः आर्यसत्यचतुष्टये समुदयेऽन्तर्गत इति ॥

प्रमाणम्.

**कल्पना कल्पितं चेति द्वयमन्योन्यमिश्रितम् ।**
**यथाप्रसिद्धमाश्रित्य विचारस्सर्व उच्यते ॥**

विचारितेन तु यदा विचारेण विचार्यते ।
तदाऽनवस्था तस्यापि विचारस्य विचारणात् ॥ ५३४ ॥

यदि ज्ञानवशादर्थः ज्ञानास्तित्वे तु का गतिः ।
अथ ज्ञेयवशात् ज्ञानं ज्ञेयास्तित्वे तु का गतिः ॥ ५३६ ॥

अथान्योन्यवशात्सत्त्वमभावः स्यात् द्वयोरपि ।
पिता चेन्न विना पुत्रात् कुतः पुत्रस्य संभवः ॥ बो ५३७ ॥

शङ्कते—

अङ्कुरो जायते बीजात् बीजं तेनैव सूच्यते ।
ज्ञेयात् ज्ञानेन जातेन तत्सत्ता किं न गम्यते ॥ ५३८ ॥

समाधत्ते—

अङ्कुरादन्यतो ज्ञानात् बीजमस्तीति गम्यते ।
ज्ञानास्तित्वं कुतो ज्ञानं ज्ञेयं यत्तेन गम्यते ॥ ५३९ ॥

तस्माद्वास्तविकपक्षे ज्ञानज्ञेयासिद्धेः विचारः कर्तुमशक्यः । काल्पनिकपक्षे तु यथाप्रसिद्धि व्यवहारमाश्रित्य शक्यत इति निश्चयः ॥

किंच—

प्रत्यक्षमपि रूपादि प्रसिद्ध्या न प्रमाणतः ।
अशुच्यादिषु शुच्यादिप्रसिद्धिरिव सा मृषा ॥ ६७४ ॥

प्रसिद्ध्या रूढ्या लोकप्रवादेन न प्रमाणतः । सांव्यवहारिकप्रमाणत्वात्प्रत्यक्षादीनाम् । तदधिगतं सांवृतमेव रूपादि । यदाह—

इन्द्रियैरुपलब्धं यत् तत्तत्त्वेन भवेद्यदि ।
जातास्तत्त्वविदो बालाः तत्त्वज्ञानेन किं तदा ॥ ३७५ ॥

इति । अनेन वचनेन तत्त्वज्ञानं लोकोत्तरविषयकमेवेत्यभिप्रायोऽवगम्यते ॥

तथाऽत्रैव—(बो. ३६७ पु.)

पितापुत्रसमागमाख्ये ग्रन्थे सांवृतपरमार्थयोस्स्वरूपमेवं निरूप्यते—एतावच्च ज्ञेयम् । यदुत—संवृतिः परमार्थश्च । तच्च भगवता शून्यतः सुसंदृष्टं सुविदितं सुसाक्षात्कृतं तेन सर्वज्ञ इत्युच्यते । तत्र संवृतिः लोकप्रचारतः तथागतेन दृष्टा । यः पुनः परमार्थतः सोऽनभिलप्यः अनाज्ञेयः अपरिज्ञेयः अविज्ञेयः अदेशितः अप्रकाशितः यावद्क्रियः अकरणः यावन्नलाभः नालाभः न सुखं नासुखं न यशो नायशः न रूपं नारूपं प्रत्यस्तमितसमस्तसांवृतवस्तुविशेषमशेषोपाधिविमुक्तं अनन्तवस्तुविस्तरव्यापिज्ञानालोकावभासितान्तरात्मना भगवता परमार्थसत्यमिति विदितम् । तदेतदार्याणामेव स्वसंविदितस्वभावतया प्रत्यात्मवेद्यमतस्तदेवात्र प्रमाणम् । संवृतिसत्यं तु लोकव्यवहारमाश्रित्य प्रकाशितम् । तदेवं विभागतः सत्यद्वयपरिज्ञानात् अविपरीतः धर्मप्रचय उपजायते । तथाचोक्तम्—

> न बाधते ज्ञानमतैमिराणां
> यथोपलब्धं तिमिरेक्षणानाम् ।
> तथा मलज्ञानतिरस्कृतानां
> धियाऽस्ति बाधा न धियोऽमलायाः ॥ इति ३६९ ॥

एवं सांवृतप्रमाणेनापि शून्यता सिद्धा भवतीति समर्थयितुं शङ्कते—

> प्रमाणमप्रमाणं चेत् ननु तत्प्रमितं मृषा ।
> तत्त्वतश्शून्यता तस्माद्भावानां नोपलभ्यते ॥ बो. ९७१ ॥

समाधत्ते—

> कल्पितं भावमस्पृष्ट्वा तदभावो न गृह्यते ।
> तस्माद्भावो मृषा यो हि तस्याभावः स्फुटं मृषा ॥ इति ॥

असत्स्वभावो यः तस्याभावः मृषैव । एवं भावाभावयोः परिकल्पितरूपत्वे सर्वधर्मनिस्स्वभावतैवावतिष्ठते । यथा—

तस्मात्स्वप्ने सुते नष्टे स नास्तीति विकल्पना ।
तद्भावकल्पनोत्पादं निबध्नाति मृषा च सा ॥ ५७२ ॥

तद्भावेति । तद्भावः तस्य सुतस्य अस्तित्वं तस्य कल्पना सत्त्वसमारोपः । तस्योत्पादः उन्मज्जनमित्यर्थः । स्वप्ने उत्पन्नविनष्टे सुते सति पुत्रो नास्तीति कल्पना पुत्रोन्मज्जनं निषेधति यतो मृषा च सा इति । तथा च अप्रमाणप्रमिताऽपि निःस्वभावलक्षणशून्यता सत्स्वभावतां नापादयतीति भावः ॥

एतत्सर्वं हृदि निधाय आत्मतत्त्वविवेके उदयनाचार्य एवमाह— (६७ पु.) "लोकव्यवहारसिद्धामिति चेत् सिद्धमेव तर्हि, न ह्यन्यतोऽपि किञ्चित्सिद्ध्यति" इति ॥

नैरात्म्यम्.

तदुक्तमाचार्यपादैः—

यः पश्यत्यात्मानं तस्यात्राहमिति शाश्वतः स्नेहः ।
स्नेहात्सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते ॥

गुणदर्शी परितृषन् ममेति तत्साधनान्युपादत्ते ।
तेनात्माभिनिवेशो यावत्तावत्तु संसारः ॥

आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।
अनयोस्संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥ इति । बो. ४९२ ॥

तथा—

सन्तानस्समुदायश्च पङ्क्तिसेनादिवन्मृषा ।
यस्य दुःखं स नास्त्यस्मात् कस्य तत्स्वं भविष्यति ॥

सन्तानो नाम न कश्चिदेकः परमार्थः, किन्तर्हि कार्यकारणभावप्रवृत्तक्षणपरम्पराप्रवाहरूप एवायम् । ततो व्यतिरिक्तस्यानुपलम्भात् । तेषामेव क्षणानामेकपदेन प्रतिपादनाय सङ्केतः कृतः । प्रज्ञप्तिसन्नेवायम् ।

एवं समुदायोऽपि न समुदायिभ्यः वस्तुसन्नेको वर्तते, तत्त्वान्यत्वविकल्पस्तु अवयविविचारवन्नेयः ॥ (३३४)

इति ॥ तथा—

अतीतानागतं चित्तं नाहं तद्धि न विद्यते ।
अथोत्पन्नमहं चित्तं नष्टेऽस्मिन्नास्त्यहं पुनः ॥ ४८४ ॥
यथैव कदलीस्तम्भः न कश्चिद्भागशः कृतः ।
तथाहमप्यसद्भूतः मृग्यमाणो विचारतः ॥ ४८५ ॥
पुद्गलस्सन्ततिस्स्कन्धाः प्रत्यया अणवस्तथा ।
प्रधानमीश्वरः कर्ता चित्तमात्रं वदाम्यहम् ॥ ४८४ ॥

इति ॥ तथा—

यद्दुःखजननं वस्तु त्रासस्तस्मात्प्रजायताम् ।
शून्यता दुःखशमनी ततः किं जायते भयम् ॥ ४४८ ॥
यतस्ततो वाऽस्तु भयं यद्यहं नाम किञ्चन ।
अहमेव न किञ्चिच्चेद्भयं कस्य भविष्यति ॥
नास्त्यहं न भविष्यामि न मेऽस्ति न भविष्यति ।
इति बालस्य संत्रासः पण्डितस्य भयक्षयः ॥ इति ४४९ ॥

लङ्कावतारेऽपि—

पुनरपरं महामते चतुर्विधं निर्वाणं, यदुत—भावस्वभावाभावनिर्वाणम्, लक्षणविचित्रभावाभावनिर्वाणम्, स्वलक्षणभावाभावावबोधनिर्वाणम्, स्कन्धानां स्वसामान्यलक्षणसन्ततिप्रबन्धव्युच्छेदनिर्वाणम् । एतन्महामते चतुर्विधं तीर्थकराणां निर्वाणम् । न मत्प्रवचने । तत्र पुनः विकल्पितस्य मनोविज्ञानस्य व्यावृत्तिः निर्वाणमित्युच्यते ॥ (१२६)

नाहं निर्वामि भावेन क्रियया लक्षणेन च ।
विकल्पहेतुविज्ञाने निर्वृते निर्वृतो ह्यहम् ॥ इति १२७ ॥

**न सन्नासन्न सद्सत् यदालोकं प्रपश्यति ।**
**तदा व्यावर्तते चित्तं नैरात्म्यं चाधिगच्छति ॥ १५२ ॥**

धर्मपुद्गलनैरात्म्यावबोधात् महामते आवरणद्वयपरिज्ञानाच्च बुद्धानां भगवतां बुद्धता भवति ॥ इति १४० ॥

तथागत एव मोक्षशब्देन देश्यते, यतो विमोक्षात्तथागतो नान्यो नानन्यः । यत्सर्वप्रमाणविनिवृत्तं तद्वाङ्मात्रम्, यद्वाङ्मात्रं तदनुत्पन्नम् । यदनुत्पन्नं तदनिरुद्धम् । यदनिरुद्धं तदाकाशसमम् । आकाशं च न कार्यं न कारणम् । यच्च न कार्यं न कारणम्, तन्निरालम्ब्यम्, तत्सर्वप्रमाणातीतम् । यत्सर्वप्रमाणातीतम्, स तथागतः ॥ इति १८९ ॥

सुगतशब्दोऽप्येवं व्याख्यायते—"सु प्रशस्तं सर्वधर्मनिःस्वभावतातत्त्वं गता अधिगताः सुगता इति" बोधिचर्यावतारपञ्जिका ॥ २पु ॥

प्रतीत्यसमुत्पाद;

सर्वास्तिवादिसौत्रान्तिक सिद्धान्तानुसारेणार्यसत्याभिधानानि चत्वारि तत्त्वानि उपदिष्टानि दुःखं समुदयो निरोधः मार्गश्चेति । दुःखं प्रसिद्धम् । समुदयः दुःखकारणं वक्ष्यते । निरोधः समुदयविनाशः विमलज्ञानोदयलक्षणमुक्तिपर्यन्तः । मार्गः तत्त्वज्ञानमिति ॥

समुदय एव प्रतीत्यसमुत्पाद इत्युच्यते । स हि द्विविधः—प्रत्ययोपनिबन्धनः हेतूपनिबन्धनश्चेति । आद्योऽयमनेन सूत्रेणोपदिष्टः "इदं प्रत्ययफलम्" इति भगवता । तदर्थस्तु—इदं कार्यं ये अन्ये हेतवः प्रत्ययन्ते गच्छन्ति तेषामयमानानां हेतूनां भावः प्रत्ययत्वं कारणसमवायः तन्मात्रस्य फलं न चेतनस्य कस्यचिदिति । यथा बीजादङ्कुरः षण्णां धातूनां समवायाज्जायते । ते च धातवः पृथिवीजलतेजोगगनऋत्वाख्याः । एतानि सहकारिकारणानि ॥

द्वितीयोऽपि सूत्रेणोपदिष्टः । तथाहि "उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितिता धर्मनियामकता च प्रतीत्यसमुत्पादानुलोमता" इति ॥

अयमर्थः—तथागतानां बुद्धानां मते धर्माणां कार्यकारणरूपाणां या धर्मता कार्यकारणरूपा एषा उत्पादादनुत्पादाद्वा स्थिता । यस्मिन् सति यदुत्पद्यते तत्तस्य कारणस्य कार्यमिति धर्मतेत्यस्य विवरणम् । धर्मस्य कार्यस्य कारणानतिक्रमेण स्थितिः । स्वार्थिकस्तल्प्रत्ययः । धर्मस्य कारणस्य कार्यं प्रति नियामकता ॥

नन्वयं कार्यकारणभावश्चेतनमन्तरेण न संभवतीत्यत उक्तं—प्रतीत्येति । कारणे सति तत्प्रतीत्य प्राप्य समुत्पादे अनुलोमता अनुसारिता या सैव धर्मता उत्पादादनुत्पादाद्वा धर्माणां स्थिता । नचात्र कश्चिच्चेतनोऽधिष्ठातोपलभ्यत इति सूत्रार्थः ॥

स द्वितीयः हेतूपनिबन्धनो यथा—बीजादङ्कुरोऽङ्कुरात्काण्डं काण्डान्नाळो नाळाद्गर्भः ततश्शूकं शूकात्पुष्पं ततः फलम् । नचात्र बाह्ये समुदाये कारणं बीजादि कार्यमङ्कुरादि वा चेतयते अहमङ्कुरं निर्वर्तयामि अहं बीजेन वा निर्वर्तित इति । एवमाध्यात्मिकेऽपि कारणद्वयमवगन्तव्यम् ॥

अनेन प्रतीत्यसमुत्पादनिरूपणेन प्रत्ययलक्षणं हकारिकारणं हेतुलक्षणमुपादानकारणं चेति द्वयमभ्युपगतम् । बुद्धिमत्कर्तृलक्षणं निमित्तकारणमपलपितम् । अयमेव प्रतीत्यसमुत्पादवादे विशेषः यच्चेतनपदार्थः आत्माख्यो धातुर्नास्तीति । अयमेव धर्मात्मवाद इत्यवगम्यते ॥

एतादृशं प्रतीत्यसमुत्पादवादं माहायानिकाः शून्यवादयन्ति । तथाहि (बो. ४१७)—

**यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ।**
**भावः स्वतन्त्रो नास्तीति सिंहनादस्तवातुलः ॥**

इत्युच्यते । एतदर्थमेव माध्यमिकवृत्तिप्रवृत्तिरपि ॥

एवं सर्वधर्माणां हेतुप्रत्ययाधीनत्वनिरूपणेन स्वतन्त्रचेतननिराकरणेन च निर्व्यापाराणां सर्वधर्माणां पारतन्त्र्यमुपदर्शितम् । तदुच्यते (बो १८६)—

**एवं परवशं सर्वं यद्वशं सोऽपि चावशः ।**
**निर्माणवद्चेष्टेषु भावेष्वेवं क्व कुप्यते ॥ इति ॥**

ततोऽविद्यादिप्रत्ययबलात् उत्तरोत्तरः कार्यप्रवाहः संस्कारादिरूपः प्रवर्तते पूर्वपूर्वनिवृत्तौ निवर्तते ॥ इति १८८ ॥

लङ्कावतारसूत्रेऽपि (१०३)—तीर्थकरा अपि भगवन् कारणत उत्पत्तिं वर्णयन्ति प्रधानेश्वरपुरुषकालाणुप्रत्ययेभ्यः भावानामुत्पत्तयः । किंतु भगवता प्रत्ययपर्यायान्तरेण उत्पत्तिर्वर्ण्यते भावानाम् । नच सिद्धान्तविशेषान्तरम् । सदसतो हि भगवन् तीर्थकरा अप्युत्पत्तिं वर्णयन्ति भूत्वा च विनाशं प्रत्ययैर्भावानाम् । यदप्युक्तं भगवताऽविद्याप्रत्ययास्संस्कारा यावज्जरामरणमिति अहेतुवादव्यपदेश एष भगवताऽनुवर्णितो न सहेतुवादः । युगपत् व्यवस्थितानामेतद्भवत्यस्मिन् सतीदं भवतीति । तीर्थकरव्यपदेश एव भगवन् विशिष्यते । न त्वदीयम् । तत्कस्य हेतोः ? तीर्थकराणां हि कारणमप्रतीत्यसमुत्पन्नं कार्यमभिनिर्वर्तयति । तव तु भगवन् कारणमपि कार्यापेक्षं कार्यमपि कारणापेक्षम् । हेतुप्रत्ययसङ्करश्च एवमन्योन्यानवस्था प्रसज्यते ॥

भगवानाह—न महामते ममाहेतुककारणवादः, हेतुप्रत्ययसंकरश्च प्रसज्यते अस्मिन् सतीदं भवतीति ब्रुवतः ग्राह्यग्राहकाभावात्

स्वचित्तदृश्यमात्रावबोधात् । ये तु महामते ग्राह्यग्राहकाभिनिविष्टाः स्वचित्तदृश्यमात्रं नावबुध्यन्ते तेषामेष दोषः । न तु मम प्रतीत्य कारण-व्यपदेशं कुर्वतः इति ॥

तथा—पुनरपरं महामते नवविधा परिणामवादिनां तीर्थकराणां परिणामदृष्टिर्भवति । यदुत—संस्थानपरिणामः । लक्षणपरिणामः । हेतुपरि-णामः । युक्तिपरिणामः । दृष्टिपरिणामः । उत्पादपरिणामः । भाव-परिणामः । प्रत्ययाभिव्यक्तिपरिणामः । क्रियाभिव्यक्तिपरिणामः । एता महामते परिणामदृष्टयः । यास्सन्धाय सर्वतीर्थकराः सदसत्पक्षोत्पादपरि-णामवादिनो भवन्ति इति ॥ (१५८)

तथा—न च तार्किका अनादिकालभावाभावप्रपञ्चवासितमतयः एवं प्रजानन्ति आत्मात्मीयलक्षणग्राह्याभिनिवेशाविष्टाः स्वचित्तदृश्यमात्रा-नवबोधात् ज्ञानं ज्ञेयं प्रति विकल्पयन्ति ॥ (१७०)

तथा—

**कदळीस्वप्नमायाभं लोकं पश्येद्विकल्पितम् ।**<br>
**रागो न विद्यते द्वेषो मोहश्चापि न पुद्गलः ॥**<br>
**तृष्णया ह्युदिताः स्कन्धाः विद्यन्ते स्वप्नसन्निभाः ।**<br>
**प्रत्यात्मधर्मस्थितितां संधाय कथितं मया ।**<br>
**तैश्च बुद्धैर्मया चैव न यत्किंचिद्विशेषितम् ॥ इति ॥ ३२४ ॥**

अत्र धर्मपुद्गलनैरात्म्यं स्पष्टमुक्तम् । तथा धर्मनित्यतामप्यन्यथ-यति—

पुनरपरं महामते अस्त्यसौ पर्यायः, येन नित्यस्तथागतस्स्यात् । तत्कस्य हेतोः ? यदुत—अभिसमयाधिगमज्ञाननित्यत्वात् नित्यस्तथा-गतः । अभिसमयाधिगमज्ञानं हि महामते नित्यं तथागतानमनुत्पादाद्वा

स्थितैवैषा धर्मता धर्मनियामकता धर्मस्थितिता सर्वश्रावकप्रत्येकबुद्ध-तीर्थकराभिसमयेषु । न तु गगने धर्मस्थितिर्भवति इति ॥ (२१८)

अनेन संदर्भेण नित्यं किंचित्तत्त्वमस्तीत्युक्तं प्रतीयते। तच्च ज्ञान-रूपमिति च । सर्वशून्यवादे एतन्नसंभवतीति च प्रोक्तम् । गगने इत्यस्य सर्वशून्यसिद्धान्ते इत्यर्थः । अत्रास्त्यसौ पर्याय इत्यनेन नायं परमसिद्धान्त इति स्फुटमुक्तं भवति ॥

अयं च सन्दर्भः कुमारिलेन सम्यगवलोकित इति विज्ञायते, यतः तन्त्रवार्तिके वेदनित्यत्वप्रसङ्गे सौगतागमनित्यताप्रतिक्षेपसमये इत्थं लिखितमस्ति (१६९ पु.) "कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत् ॥

यदेव भवतां गोत्रं तदस्माकमपीतिवत् ।
आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥
अस्मदीयमिदं वाक्यं भवतामिति चोदिताः ।
जल्पन्त्यस्माकमेवैतत् श्रुत्वा मीमांसकैर्हृतम् ॥
तत्र शाक्यैः प्रसिद्धाऽपि सर्वक्षणिकवादिता ।
त्यज्यते वेदसिद्धान्तात् जल्पद्भिर्नित्यमागमम् ॥
धर्मस्तेनोपदिष्टोऽयमनित्यं सर्वसंस्कृतम् ।
क्षणिकाः सर्वसंस्काराः अस्थिराणां कुतः क्रियाः ॥
बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च तत् ।

तथा—शब्देऽपि बुद्धेर्नियमान्नाभिव्यक्तिः द्वेधाऽपि दोषात् इत्येवमादिभिः सर्वदा सर्वपदार्थसम्बन्धानित्यत्वप्रतिपाथनात् तद्विपरीत-मागमनित्यत्वमभ्युपगम्यमानं लोकोपहासास्पदमेव भवेत् ॥

व्यवहारनित्यताशब्दश्च क्रियानित्यत्वपर्यायः, तद्यस्य शब्दार्थ-सम्बन्धानित्यत्वं तस्य तदाश्रयव्यवहारनित्यत्वं किमाधारं भविष्यतीत्य-तिदुस्सम्पादम् ॥

न च शब्दार्थसम्बन्धकूटस्थत्वमनिच्छताम् ।
नित्यताव्यवहारस्य निराधाराऽवकल्पते ॥
शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्तताम् ।
स्थितैषा धर्मतेत्येतत् अर्थशून्यमतो वचः ॥
एषेत्यपि न निर्देष्टुं शक्या क्षणविनाशिनी ।
किमुत स्थितया साकमेषेत्यस्यैकवाक्यता ॥

तेनानित्यशब्दवादिनामागमनित्यत्वमनुपपन्नम्" इति ॥

अनेन सन्दर्भेण "उत्पादाद्वा अनुत्पादाद्वा स्थितैवैषा धर्माणां धर्मता धर्मस्थितिता" इति प्रागुदाहृतं सूत्रं नित्यतत्त्वोपदेशपरामित्यवगम्यते, यथायथं तत्र तत्र उपयुज्यते इत्यप्यवगम्यते ॥

"शब्देऽपि बुद्धेर्नियमात्" इति शाक्यग्रन्थस्यायमर्थः—कश्चिदेव शब्दः केन चिदेव श्रोत्रेण युज्यते इति द्विविधो बुद्धिनियमो दृश्यते । स च विषयसंस्कारपक्षे स्रुघ्नस्थस्य पाटलिपुत्रेऽप्युपलब्धिप्रसङ्गान्न युज्यते । इन्द्रियसंस्कारपक्षे श्रोत्रेण सर्वगतेन तत्समानदेशस्यान्यस्याप्युपलब्धिप्रसङ्गान्न युज्यते । एवं द्वेधाऽपि दोषात् शब्देऽभिव्यक्तिर्न साधीयसीति ॥

## पुद्गलात्मा

लङ्कावतारे (३५४–३६० पु.)—

साङ्ख्या वैशेषिका नग्नाः तार्किका ईश्वरोदिताः ।
सदसत्पक्षपतिताः विविक्तार्थविवर्जिताः ॥
इतस्ततः प्रधावन्ति ह्यात्मवादचिकीर्षया ।
प्रत्यात्मगतिगम्याश्च ह्यात्मा वै शुद्धिलक्षणः ॥
गर्भस्तथागतस्यादौ तार्किकाणामगोचरः ।
कान्तिर्यथा सुवर्णस्य जातरूपाश्च शर्कराः ॥

परिकर्मेण पश्यन्ति सत्त्वं स्कन्धालयैस्तथा ॥
निधयो मणयश्चापि पृथिव्यामुदकं यथा ।
विद्यमाना न दृश्यन्ते तथा स्कन्धेषु पुद्गलम् ॥

यथा हि गर्भो गर्भिण्यां विद्यते न च दृश्यते ।
आत्मा हि तद्वत् स्कन्धेषु ह्ययुक्तिज्ञो न पश्यति ॥

अनित्यतां च भावेषु शून्यतां च यथा बुधाः ।
विद्यमानां न पश्यन्ति तथा स्कन्धेषु पुद्गलम् ॥

नैरात्म्यवादिनोऽभाष्याः भिक्षुकर्माणि वर्जयेत् ।
बाधका बुद्धधर्माणां सदसत्पक्षदृष्टयः ॥

तीर्थ्यदोषैर्विनिर्मुक्तं नैरात्म्यवनदाहकम् ।
जाज्वलत्यात्मवादोऽयं युगान्ताग्निरिवोत्थितः ॥

पौराणिकमिदं वर्त्म अर्हं ते च तथागताः ।
त्रिभिस्सहस्रैस्सूत्राणां निर्वाणमिति देशिकाः ॥ इति ॥

कार्यकारणभावापलापः.

प्रतीत्यसमुत्पादवादं शून्यवादेऽन्तर्भावयितुं कार्यकारणभावापलापः बोधिचर्यावतारे—

भावानां निःस्वभावानां न सत्ता विद्यते यतः ।
सतीदमस्मिन् भवतीत्येतन्नैवोपपद्यते ॥ २३ ॥

अन्यतो नापि चायातं न तिष्ठति न गच्छति ।
मायातः को विशेषोऽस्य यन्मूढैस्सत्यतः कृतम् ॥

मायया निर्मितं यच्च हेतुभिर्यच्च निर्मितम् ।
आयाति तत्कुतः कुत्र याति चेति निरूप्यताम् ॥ ५८० ॥

यदन्यसन्निधानेन दृष्टं न तदभावतः ।
प्रतिबिम्बसमे तस्मिन् कृत्रिमे सत्यता कथम् ॥ ५८३ ॥

**न स्वतो नापिपरतः न द्वाभ्यां नाप्यहेतुतः ।**
**उत्पन्ना जातु विद्यन्ते भावाः क्वचन केचन ॥**

एकानेकस्वभावविचारणयाऽपि सर्वभावानां स्वभावविकलत्वात् न सत्स्वभावत्वम् ॥ (३५७)

चतुस्तवेऽप्युक्तम्—

**निरुद्धाद्वाऽनिरुद्धाद्वा बीजादङ्कुरसम्भवः ।**
**अतस्त्वया जगदिदं परिकल्पसमुद्भवम् ॥**
**परिज्ञातमसद्भूतमनुत्पन्नं न नश्यति ।**
**नित्यस्य संसृतिर्नास्ति कस्य वा निर्वृतिर्भवेत् ॥**
**मायागजप्रकाशत्वात् आदिशान्तं प्रयत्नतः ।**
**यः प्रतीत्यसमुत्पादः शून्यता सैव ते मता ॥**
**तथाविधश्च सद्धर्मः तत्समश्च तथागतः ।**
**तत्तत्त्वं परमार्थोऽपि तथता द्रव्यमिष्यते ॥**
**भूतं तदविसंवादि तद्बोधाद्बुद्ध उच्यते ॥ इति ॥ ५३३ ॥**

एवं प्रतीत्यसमुत्पादवादलक्षणः धर्मात्मवादः पौराणिकः पुद्गलात्मवादश्च माध्यमिकैः शून्यवादलक्षणे नैरात्म्यवादेऽन्तर्भावितः । अत एव "धर्मपुद्गलनैरात्म्यम्" इति सौगतदर्शनं न्यायवार्तिकतात्पर्यटीकायां आत्मज्ञानप्रकरणेऽनूद्यते ॥

एवं धर्मात्मवादे पुद्गलात्मवादे च शून्यवादपर्यवसिते सति विज्ञानात्मवादस्यावकाश एव न स्यादिति मत्वा विज्ञानात्मवादिना वसुबन्धुना मतद्वयमेतत् विज्ञानात्मवादे पर्यवसितं करोति प्रज्ञप्तिमात्रतासिद्धौ—

**तथा पुद्गलनैरात्म्यप्रवेशो ह्यन्यथा पुनः ।**
**देशना धर्मनैरात्म्यप्रवेशः कल्पितात्मना ॥**

इति । सर्वथा विज्ञप्तिनैरात्म्यं नास्तीत्यस्य पद्यस्य तात्पर्यार्थः ॥

विरोधपरिहारः

अत्र सर्वेषामपि वादानामधिकारिभेदेन विरोधपरिहारः शून्यतायां पर्यवसानं चोच्यते। अधिकारिणस्तु— सर्वबुद्धः बोधिसत्त्वः प्रत्येकबुद्धः अर्थश्रावकः पृथग्जनश्चेति पञ्चप्रकाराः। अत्र सर्वबुद्धयानमेव महा-यानम्। प्रत्येकबुद्धश्रावकयानादीनि हीनयानानीति बोधिचर्यावतारे (२६) स्पष्टीभवति ॥

तथा—प्रज्ञापारमिताऽप्येवं स्तूयते (४३०)—

**बुद्धैः प्रत्येकबुद्धैश्च श्रावकैश्च निषेविता।**
**मार्गस्त्वमेकामोक्षस्य नास्त्यन्य इति निश्चयः ॥ इति ॥**

लङ्कावतारेऽपि—

**देवयानं ब्रह्मयानं श्रावकीयं तथैव च।**
**ताथागतं च प्रत्येकं यानानीति वदाम्यहम् ॥**
**यानानां नास्ति वै निष्ठा यावच्चित्तं प्रवर्तते।**
**चित्ते तु वै परावृत्ते न यानं नच यायिनः ॥ इति ॥ १३४ ॥**

तथा—

**पञ्च धर्माः त्रिस्वभावाः विज्ञानान्यष्ट चैव हि।**
**द्वे नैरात्म्ये भवेत्कृत्स्नः महायानपरिग्रहः ॥ इति ॥ २२९ ॥**

तथा—नागार्जुनधर्मपदेऽपि "श्रावकयानं प्रत्येकबुद्धयानं महा-यानमिति यानानि त्रीणि" इति निरूपितानि। अत्र माहायानिका एव शून्यवादिनः माध्यमिकाः ॥

यद्यप्यत्र कैश्चिद्वैदिकैः माहायानिकपदं निरालम्बनवादित्वेन प्रसिद्धेषु बाह्यार्थशून्यवादिषु विज्ञानवादिषु प्रयुज्यते। यथा—शाबरबाष्ये वनवादे "यद्येवं प्रत्युक्तस्स माहायानिकः पक्षः" इति ॥

प्रकरणपञ्चिकायां शालिकनाथेन तत्त्वालोके "तस्मादेषोऽपि माहायानिकपक्षप्रवेशो ब्रह्मवादिनां मोह एव" इति ॥

पञ्चपादिकायां प्रथमवर्णके "अतस्स एव माहायानिकपक्षः समर्थितः" (२५ पु.) इति ॥

शास्त्रदीपिकायां सम्बन्धाक्षेपपरिहारे "तस्माद्दूरमस्मात् मायावादान्माहायानिकवादः" इति ॥

तथापि बाह्यार्थविचारः सर्वशून्यवादिनां माध्यमिकानां बाह्यार्थशून्यवादिनां योगाचाराणां च समानः । यतः माध्यमिकनिरूपितः मार्ग एव योगाचारैरुररीकृतः । तदेतत् प्रज्ञप्तिमात्रतासिद्ध्यादिषु प्रबन्धेषु श्लोकवार्तिकादिषु च विस्पष्टम् । तस्मात् बाह्यार्थनिरासप्रस्तावे माहायानिकपदप्रयोगः न विरुद्ध्यते ॥

अपि च बोधिचर्यावतारपञ्चिकायां (३८९) सर्वशून्यवादिमाहायानिकविषये माध्यमिकपदं प्रयुक्तमस्ति, अतो माध्यमिकास्सर्वशून्यवादिनो माहायानिकाः विज्ञानवादिनस्तु बाह्यार्थमात्रशून्यवादिन इति विवेकः । प्रकृतमनुसरामः ॥

लङ्कावतारे—

चित्राचार्यो यथा कश्चित् चित्रान्तेवासिकोऽपि वा ।
चित्रार्थे नामयेत् रङ्गान् देशयामि तथा ह्यहम् ॥
रङ्गे न विद्यते चित्रं न भूमौ न च भाजने ।
सत्त्वानां कर्षणार्थाय रङ्गैश्चित्रं विकल्प्यते ॥
विचित्रा हि यथा माया दृश्यते न च विद्यते ।
देशनाऽपि तथा चित्रा देश्यते व्यभिचारिणी ॥
देशना हि यदन्यस्य तदन्यस्याप्यदेशना ।
आतुरे आतुरे यद्वत् भिषग्द्रव्यं प्रयच्छति ॥ ४८ ॥

तथा—"तत्र त्रिविधं ज्ञानं स्वसामान्यलक्षणावधारकं उत्पाद-व्ययावधारकं अनुत्पादानिरोधावधारकं चेति" इति (लं. १५७)

तथा —

नयो हि द्विविधो मह्यं सिद्धान्तो देशना च वै ।
इमां देशेमि बालानां सिद्धान्तं योगिनामहम् ॥ इति लं. १७२ ॥

तथा—

वैद्या यथाऽऽतुरवशात्क्रियाभेदं प्रकुर्वते ।
न तु शास्त्रस्य भेदोऽस्ति दोषभेदात्तु भिद्यते ॥
तथाहं सर्वसत्त्वानां क्लेशदोषैः प्रदूषितम् ।
इन्द्रियाणां बलं ज्ञात्वा नयं देशेमि प्राणिनाम् ॥ लं २०४ ॥

तथा बोधिचर्यावतारे (१४६)—

हीनोत्कृष्टेषु धर्मेषु समं गौरवमाचरेत् ।
नोदारधर्मपात्रं च हीने धर्मे नियोजयेत् ॥
न चाचारं परित्यज्य सूत्रमन्त्रैः प्रलोभयेत् ॥

बोधिचित्तविवरणे (सर्वदर्शनसङ्ग्रहे)—

देशना लोकनाथानां सत्त्वाशयवशानुगाः ।
भिद्यन्ते बहुधा लोके उपायैः बहुभिः किल ॥
गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणाः ।
भिन्ना हि देशनाः भिन्ना शून्यताद्वयलक्षणा ॥ इति ॥

तथात्रैव बोधिचर्यावतारे (३७६)—

लोकावतरणार्थं च भावा नाथेन देशिताः ।
तत्त्वतः क्षणिकानैते संवृत्या चेद्विरुध्यते ॥

अयमर्थः—लोकानां भावाभिनिवेशिनां स्कन्धादिदेशनावैनेयानां आपाततश्शून्यतादेशनानधिकृतानां शून्यतायामवतरणार्थं सुकुमारोपक्रमेण सत्त्वाशयवेदिना नाथेन नरकादिदुःखात् सत्त्वान् परित्राय-

माणेन अभ्युदयनिःश्रेयससुखं प्रापयता प्रकाशिताः क्षणिका भावाः। संवृत्या क्षणिकत्वं चेत् परमार्थतः स्थिरतेति स्यात्, तच्च विरुध्यते। तस्माल्लोकावतारायैव क्षणिकत्वाद्युपदेश इति ॥

एवमधिकारिभेदेन शास्त्रविभागः वैदिकैरप्युपगतः। भगवद्गीता—

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तस्समाचरन् ॥**

इति। माण्डूक्यकारिकाऽपि—

**मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा।**
**उपायस्सोऽवताराय नास्ति भेदः कथञ्चन ॥**

इति। तथा शाङ्करं बृहदारण्यकभाष्यम् (४—१—२०) "तस्मात्पुरुषमतिवैचित्र्यमपेक्ष्य साध्यसाधनसम्बन्धविशेषान् अनेकधा उपदिशति। तत्र पुरुषाः स्वयमेव यथारुचि साधनविशेषेषु प्रवर्तन्ते। शास्त्रं तु सवितृप्रदीपादिवदुदास्ते एव। तथा कस्यचित्परोऽपि पुरुषार्थः अपुरुषार्थवदवभासते। यस्य यथाऽवभासः स तथारूपं पुरुषार्थं पश्यति। तदनुरूपाणि च साधनान्युपादित्सते। स्वविषयशूराणि हि प्रमाणानि श्रोत्रादिवत्" इति ॥

## प्रज्ञापारमिता.

सा च प्रज्ञा द्विविधा—हेतुभूता, फलभूता च। फलभूता तु सर्वाकारोपेतसर्वधर्मशून्यत्वाधिगमस्वभावा। तथाहि—विपर्याससंज्ञिनः असत्सत्त्वसमारोपाभिनिवेशवशादात्मीयग्रहप्रवृत्तेः अयोनिशः मनसिकारप्रसूतः रागादिक्लेशगणस्समुत्पद्यते। तस्मात्कर्म ततो जन्म ततश्च व्याधिजरामरणशोकपरिदेवदुःखदौर्मनस्योपायासाश्च प्रजायन्ते। एवमस्य केवलस्य महतो दुःखस्कन्धस्य समुदयो भवति। तदेवमनुलोमाकारं

प्रतीत्यसमुत्पादं सम्यक्प्रज्ञया व्यवलोकयतः पुनस्तमेव निरात्मकम-स्वामिकं मायामरीचिगन्धर्वनगरस्वप्नप्रबिम्बादिसमानाकारतया परमार्थतो निःस्वभावं पश्यतो यथाभूतपरिज्ञानात् तद्विपक्षात्मतया मोहस्वभावमविद्या भवाङ्गं निवर्तते ॥

अविद्यानिरोधात्तत्प्रत्ययास्संस्कारा निरुद्धयन्ते । एवं पूर्वपूर्वस्य कारणभूतस्य निरोधादुत्तरोत्तरकार्यभूतस्य निरोधो वेदितव्यः । याव-ज्जातिनिरोधाज्जरादिशोका निरुद्धयन्ते । एवमस्य महतो दुःखस्कन्धस्य निरोधो भवति ॥

तदेवं प्रज्ञया स्वप्नमायादिस्वभावं संस्कृतं प्रत्यवेक्षमाणस्य सर्व-धर्माणां निस्स्वभावतया प्रतिपत्तेः परमार्थाधिगमात्सवासनानिश्शेषदोष-राशिनिवृत्तिर्भवतीति सर्वदुःखोपशमहेतुः प्रज्ञा उपपद्यते ॥ (बो. ३४९)

हेतुभूता तु यथावस्थितप्रतीत्यसमुत्पन्नवस्तुप्रविचयलक्षणा। तथा च युक्त्यागमाभ्यां विचारयतः अविपरीतवस्तुतत्त्वप्रविचयस्समुत्पद्यते । तदुपदर्शयितुं सत्यद्वयव्यवस्थामाह—

**संवृतिः परमार्थश्च सत्यद्वयमिदं मतम् ।**
**बुद्धेरगोचरस्तत्त्वं बुद्धिस्संवृतिरुच्यते ॥ ३५२ ॥**

**द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ॥**
**लोकसंवृतिसत्यं च सत्यं च परमार्थतः ॥ बो. ३६१ ॥**

**संवृतिः परमार्थश्च तृतीयं नास्ति हेतुकम् ।**
**कल्पितं संवृतिर्ह्युक्ता तच्छेदादार्यगोचरम् ॥ लं. १३१ ॥**

**मोहस्वभावावरणाद्धि संवृतिः**
**सत्यं तया ख्याति यदेव कृत्रिमम् ।**
**जगाद तत्संवृतिसत्यमित्यसौ**
**मुनिः पदार्थं कृतकं च संवृतिम् ॥**

**विनोपघातेन यदिन्द्रियाणां**
**षण्णामपि ग्राह्यमवैति लोकः ।**
**सत्यं हि तल्लोकत एव शेषं**
**विकल्पितं लोकत एव मिथ्या ॥ इति । बो. ३९३ ॥**

संवृतिः कथं सत्यमित्युच्यत इति चेल्लोकाध्यवसायतः । लोक एव हि संवृतिसत्यमिह प्रतिपन्नः । तदनुवृत्त्या भगवद्भिरपि संवृतिसत्यमुच्यते । अतएव लोकसंवृतिसत्यमिति शास्त्रेऽपि विशेष उक्तः ॥

परमार्थः—अकृत्रिमं वस्तुरूपं यदभिगमात्सर्वावृतिवासनानुसन्धिक्लेशप्रहाणं भवति । सर्वधर्माणां निःस्वभावता शून्यता तथता भूतकोटिः धर्मधातुरित्यादिपर्यायाः । तस्मात्स्वप्नमायाप्रतिबिम्बादिवदिदं प्रत्ययतामात्रमेव अविचारमनोहरमित्यर्थतत्त्वम् । किमिह दुःखहेतुना भावाभिनिवेशेन प्रयोजनमिति ॥

अथ इतराः पारमिताः धर्मपदे षड्विधाः प्रोक्ताः—"दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्यपारमिता, ध्यानपारमिता, प्रज्ञापारमिता च" इति । पारमितापदार्थः पारप्राप्तिः सिद्धिरिति फलितार्थः । व्युत्पत्तिस्त्वेवं स्यात्—परम एव पारमः प्रज्ञायाः पारमः प्रज्ञातिशयः सोऽस्तीति प्रज्ञापारमी तस्य भावः पारमितेति । पारमितापदं कर्मपरं तस्य पर्यायो विनयपदमिति अष्टसाहस्रिकोपोद्धाते लिखितमस्ति । तदा भाषापदं स्यादित्यवधारयाम ॥

एते दानादयः संस्कृत्य सम्भृता अपि प्रज्ञामन्तरेण सौगतपदाधिगमहेतवो न भवन्ति नापि पारमिताव्यपदेशं लभन्ते । प्रज्ञाकृतपरिशुद्धिभाजः पुनरव्याहतोदारप्रवृत्तितया तदनुकूलमनुवर्तमाना तद्धेतुभावमधिगच्छान्ति पारमितापदञ्च लभन्ते । तस्मात् प्रज्ञैव केवला न सम्यक्संबोधिसाधनम् । किन्तु दानादिपरिकरः प्रज्ञार्थ इति सिद्धम् ॥ बो. ३४५

शमथपदवाच्यं ध्यानमपि यथाभूतज्ञानजननशक्तम्। तस्मात्समाहितो यथाभूतं जानातीत्युक्तवान्मुनिः। एतदपि धर्मसङ्गीतावुक्तम्—"समाहितचेतसो यथाभूतदर्शनं भवति। यथाभूतदर्शिनः बोधिसत्त्वस्य सत्त्वेषु महाकरुणा प्रवर्तते इदं मया समाधिसुखं सर्वसत्त्वानां निष्पादयितव्यमिति। स तया महाकरुणया संचोद्यमानोऽधिशीलमधिचित्तमधिप्रज्ञं च आनुपूर्व्याऽनुत्तरां सम्यक्संबोधिमभिसंबुध्यते" इति॥ (बो. ३४८)

दानादयः वस्तुतः निस्स्वभावा अपि परमार्थतत्त्वाधिगमाय सर्वसत्त्वेषु करुणायमानैः बोधिसत्त्वैरुपादीयन्ते। अन्यथा परमार्थाधिगमायोगात्। ततो दानादिषु प्रवृत्तिरनिवारिता॥ (बो. ३७२)

बौद्धधर्मः.

सौगतानां अनुष्ठानक्रमः बोधिचर्यावतारीयः॥

उद्यमः कर्तव्यः—

न क्लेशा विषयेषु नेन्द्रियगणे नाप्यन्तराले स्थिताः
नातोन्यत्र कुह स्थिताः पुनरिमे मथ्नन्ति कृत्स्नं जगत्।
मायैवेयमतो विमुञ्च हृदय त्रासं भजस्वोद्यमं
प्रज्ञार्थं किमकाण्ड एव नरकेष्वात्मानमाबाधसे॥ ८९ पु.॥

मानुष्यं नावमासाद्य तर दुःखमहानदीम्॥
मूढ कालो न निद्रयाः इयं नौर्दुर्लभा पुनः॥ २५० ॥

क्षणसंपदियं सुदुर्लभा प्रतिलब्धा पुरुषार्थसाधनी।
यदि नात्र विचिन्त्यते हितं पुनरप्येष समागमः कुतः॥ ९ पु॥

अव्यापारसुखास्वाद निद्रापाश्रयतृष्णया।
संसारदुःखानुद्वेगादालस्यमुपजायते॥ २४४ ॥

स्वयूथ्यान् मार्यमाणांस्त्वं क्रमेणैव हि पश्यसि।
तथापि निद्रां यास्येव चण्डालमहिषो यथा॥ २४६ ॥

तस्मादुत्सङ्गगे सर्पे यथोत्तिष्ठति सत्वरम् ।
निद्रालस्यागमे तद्वत् प्रतिकुर्वीत सत्वरम् ॥ २८१ ॥
कायेनैव पठिष्यामि वाक्पाठेन तु किं भवेत् ।
चिकित्सापाठमात्रेण रोगिणः किं भविष्यति ॥ १६६ ॥
परात्मसमतामादौ भावयेदेवमादरात् ।
समदुःखसुखास्सर्वे पालनीया इहात्मवत् ॥ ३२७ ॥
हस्तादिभेदेन बहुप्रकारः
कायो यथैकः परिपालनीयः ।
तथा जगद्भिन्नमभिन्नदुःख-
सुखात्मकं सर्वमिदं तथैव ॥ ३२८ ॥
यदा मम परेषां च तुल्यमेव सुखं प्रियम् ।
तदाऽऽत्मनः को विशेषः येनात्रैव सुखोद्यमः ॥ इति । ३३० ॥

अपराधः क्षमापयितव्यः—

"सर्वापत्तयः (अपराधाः) बोधिसत्त्वेन पञ्चत्रिंशतां बुद्धानामन्तिके भगवतां रात्रिन्दिवमेकाकिना देशयितव्याः । तत्रेयं देशना—अहमेवंनामा बुद्धं शरणं गच्छामीत्यारभ्य यावत्सङ्घं शरणं गच्छामि । नमश्शाक्यमुनये तथागतायार्हते सम्यक्सम्बुद्धाय नमो वज्रप्रमर्दिने इत्यारभ्य यावत् उपैमि सर्वान् शरणं कृताञ्जलिः" इति ॥ (१५३)

अनेकदोषदुष्टेन मया पापेन नायकाः ।
यत्कृतं दारुणं पापं तत्सर्वं देशयाम्यहम् ॥ ५९ ॥
मया बालेन मूढेन यत्किञ्चित्पापमाचितम् ।
प्रकृत्या यच्च सावद्यं प्रज्ञप्त्याऽवद्यमेव च ॥
तत्सर्वं देशयाम्येषः नाथानामग्रतः स्थितः ।
कृताञ्जलिः दुःखभीतः प्रणिपत्य पुनः पुनः ॥
नाभद्रकमिदं नाथाः प्रकर्तव्यं पुनर्मया ।
बोधिसत्त्वत्वबुद्धत्वमनुमोदे च तायिनाम् ॥ ७२ ॥

तायः स्वदृष्टमार्गोक्तिः, तद्विद्यते येषामिति । अथवा—तायः सन्तानार्थः । आसंसारमप्रतिष्ठितनिर्वाणतयाऽवस्थितानामित्यर्थः । एत एव बोधिसत्त्वाः ॥

एवं सर्वमिदं कृत्वा यन्मया साधितं शुभम् ।
तेन स्यां सर्वसत्त्वानां सर्वदुःखप्रशान्तिकृत् ॥ ७७ ॥

बहूनामेकदुःखेन यदि दुःखं निगच्छति ।
उत्पाद्यमेव तद्दुःखं सदयेन परात्मनोः ॥ ३३८ ॥

जगद्दुःखहरे दुःखे प्रीतिरेवात्र युज्यते ।
दुःखानां विनिवृत्तिर्हि सुखमित्येव निर्णयः ॥ २१० ॥

चित्तं दमयितव्यम्—

लाभा नश्यन्तु मे कामं सत्कारः कायजीवितम् ।
नश्यत्वन्यत्तु कुशलं मा तु चित्तं कदाचन ॥ १०७ ॥

यदर्थमेव जीवामि तदेव यदि नश्यति ।
किं तेन जीवितेनापि केवलाशुभकारिणा ॥ २०२ ॥

तस्मात्सर्वसत्त्वेषु मैत्रचित्तं मया निक्षेप्तव्यम् । अन्तशो दग्धस्थूणायामपि प्रतिघं चित्तं नोत्पादयितव्यम् ॥ (१९७)

भूमिं छादयितुं सर्वां कुतश्चर्म भविष्यति ।
उपानच्चर्ममात्रेण च्छन्ना भवति मेदिनी ॥ १०२ ॥

दुःखं हन्तुं सुखं प्राप्तुं ते भ्रमन्ति मुधाऽम्बरे ।
यैरेतद्धर्मसर्वस्वं चित्तं गुह्यं न भावितम् ॥ १०४ ॥

लब्ध्वाऽपि सुबहून् लाभान् चिरं भुक्त्वा सुखान्यपि ।
रिक्तहस्तश्च नग्नश्च यास्यामि मुषितो यथा ॥ २०१ ॥

बद्धश्चेच्चित्तमातङ्गः स्मृतिरज्ज्वा समंततः ।
भयमस्तं गतं सर्वं कृत्स्नं कल्याणमागतम् ॥ ९६ ॥

अपकारः परिहर्तव्यः—

आर्यरत्नराशावपि—"परिभुञ्जता चैवं मनसिकार उत्पादयितव्यः। सन्त्यस्मिन् काये अशीतिक्रिमिकुलसहस्राणि। तान्यनेनैवौजसा सुखं विहरन्तु। इदानीं चैषामामिषेण सङ्ग्रहं करिष्यामि। बोधिप्राप्तश्च पुनः धर्मेण सङ्ग्रहं करिष्यामीति विस्तरः" इति॥ (१४०)

तत्र चैकस्यापि प्राणिनोऽपकारे महात्मनां बहूनां भगवतामपकारः—

**येषां सुखे यान्ति सुखं मुनीन्द्राः**
**येषां व्यथायां प्रविशन्ति मन्युम्।**
**तत्तोषणात्सर्वमुनीन्द्रतुष्टिः**
**तत्रापकारेऽपकृतं मुनीनाम्॥ २३६॥**

**आदीप्तकायस्य यथा समन्तात्**
**न सर्वकामैरपि सौमनस्यम्।**
**सत्त्वव्यथायामपि तद्वदेव**
**न प्रीत्युपायोऽस्ति दयामयानाम्॥ २३७॥**

**आत्मीकृतं सर्वमिदं जगत्तैः**
**कृपात्मभिर्नैव हि संशयोऽस्ति।**
**दृश्यन्त एते ननु सत्त्वरूपाः**
**त एव नाथाः किमनादरोऽत्र॥ २३९॥**

**तस्मान्मया यज्जनदुःखदेन**
**दुःखं कृतं सर्वमहाकृपाणाम्।**
**तदद्य पापं प्रति देशयामि**
**यत्खेदिताः तन्मुनयः क्षमन्ताम्॥ २३८॥**

शान्तिः सम्पादयितव्या—

**मयाऽपि पूर्वं सत्त्वानामीदृश्येव व्यथा कृता।**
**तस्मान्मे युक्तमेवैतत् सत्त्वोपद्रवकारिणः॥ १९२॥**

मत्कर्मचोदिता एव जाता मय्यपकारिणः ।
येन यास्यन्ति नरकान् मयैवामी हता ननु ॥

मामाश्रित्य तु यान्त्येते नरकान् दीर्घवेदनान् ।
अहमेवापकार्येषां ममैते चोपकारिणः ।
कस्माद्विपर्ययं कृत्वा खल चेतः प्रकुप्यसि ॥ १९५ ॥

पुण्यविघ्नः कृतोऽनेनेत्यत्र कोपो न युज्यते ।
क्षान्त्या समं तपो नास्ति नन्वेतत्तदुपस्थितम् ॥

यथाऽहमात्मदोषेण न करोमि क्षमामिह ।
मयैवात्र कृतो विघ्नः पुण्यहेतावुपस्थिते ॥ २२६ ॥

यो हि येन विना नास्ति यस्मिंश्च सति विद्यते ।
स एव कारणं तस्य स कथं विघ्न उच्यते ॥ २२७ ॥

अश्रमोपार्जितस्तस्मात् गृहे निधिरिवोत्थितः ।
बोधिचर्यासहायत्वात् स्पृहणीयो रिपुर्मम । ॥ २२८ ॥

अपकाराशयोऽस्येति शत्रुर्यदि न पूज्यते ।
अन्यथा मे कथं क्षान्तिः भिषजीव हितोद्यते ॥

तद्दुष्टाशयमेवातः प्रतीत्योत्पद्यते क्षमा ।
स एवातः क्षमाहेतुः पूज्यस्सद्धर्मवन्मया ॥ २३० ॥

प्रतिमास्तूपसद्धर्मनाशकाक्रोशकेषु च ।
न युज्यते मम द्वेषः बुद्धादीनां न हि व्यथा ॥

वितथाभिनिवेशप्रसूतात्मग्राहनिवृत्तेः अभिष्वङ्गाभावान्न व्यथा दौर्मनस्यमिति भावः । यथा परसमये देवगुरुद्विजातिमातापितृप्रभृतीनामर्थे पापं कुर्वतोऽपि न दोष इति मतं न तथेहाभिमतमित्युक्तं भवति ॥ (२०४)

तस्मादमित्रं मित्रं वा दृष्ट्वाऽप्यन्याय्यकारिणम् ।
ईदृशाः प्रत्यया अस्येत्येवं मत्वा सुखी भवेत् ॥ इति । १८८ ॥

आत्मा समर्पयितव्यः—

न प्राप्तं भगवत्पूजामहोत्सवसुखं मया ।
न कृता शासने कारा दरिद्राशा न पूरिता ॥

भीतेभ्यो नाभयं दत्तं आर्ता न सुखिनः कृताः ।
दुःखाय केवलं मातुः गतोऽहं गर्भशल्यताम् ॥ २६३ ॥

एवं बुध्वा परार्थेषु भवेत्सततमुत्थितः ।
निषिद्धमप्यनुज्ञातं कृपालोरर्थदर्शिनः ॥ १२८ ॥

यथाऽऽसुखीकृतश्चात्मा ममायं सर्वदेहिनाम् ।
घ्नन्तु निन्दन्तु वा नित्यमाकिरन्तु च पांसुभिः ॥

क्रीडन्तु मम कायेन हसन्तु विलसन्तु च ।
दत्त एभ्यो मया कायः चिन्तया किं ममानया ॥

कारयन्तु च कर्माणि यानि तेषां सुखावहम् ।
अनर्थः कस्यचिन्मा भूत् मामालम्ब्य कदाचन ॥

अनाथानामहं नाथः सार्थवाहश्च यायिनाम् ।
पारेप्सूनां च नौभूतः सेतुस्संक्रम एवच ॥

दीपार्थिनामहं दीपः शय्या शय्यार्थिनामहम् ।
दासार्थिनामहं दासः भवेयं सर्वदेहिनाम् ॥

चिन्तामणिः भद्रघटः सिद्धविद्या महौषधिः ।
भवेयं कल्पवृक्षश्च कामधेनुश्च देहिनाम् ॥

पृथिव्यादीनि भूतानि निश्शेषाकाशवासिनाम् ।
सत्त्वानामप्रमेयाणां यथा भोग्यान्यनेकधा ॥

एवमाकाशनिष्ठस्य सत्त्वधातोरनेकधा ।
भवेयमुपजीव्योऽहं यावत्सर्वे न निर्वृताः ॥ ८२ ॥

सुखार्थं क्रियते कर्म तथापि स्यान्न वा सुखम् ।
कर्मैव तु सुखं यस्य निष्कर्मा स सुखी कथम् ॥ २७७ ॥

तथागताराधनमेतदेव स्वार्थस्य संसाधनमेतदेव ।
लोकस्य दुःखापहमेतदेव तस्मान्ममास्तु व्रतमेतदेव ॥ २४० ॥

जीवन्नेव विमोक्तव्यः—

निर्वातुकामांश्च जिनान् याचयामि कृताञ्जलिः ।
कल्पाननन्तान् तिष्ठन्तु मा भूदन्धमिदं जगत् ॥ ७६ ॥

आकाशस्य स्थितिर्यावद्यावदप्यवनेः स्थितिः ।
तावन्मम स्थितिः भूयाल्लोकपापानि निघ्नतः ॥ ३७ ॥

परिभोगाय सत्त्वानामात्मभावादि दीयते ।
अरक्षिते कुतो भोगः किं दत्तं यन्न भुज्यते ॥

तस्मात्सत्त्वोपभोगार्थमात्मभावादि पालयेत् ।
कल्याणमित्रानुत्सर्गात् सूत्राणां च सदेक्षणात् ॥ ९५ ॥

पुण्येन कायस्सुखितः पाण्डित्येन मनस्सुखम् ।
तिष्ठन् परार्थं संसारे कृपालुः केन खिद्यते ॥ २५९ ॥

आस्तां भविष्यद्बुद्धत्वं सत्त्वाराधनसम्भवम् ।
इहैव सौभाग्ययशस्सौस्थित्यं किं न पश्यसि ॥

तुष्टः किं नृपतिर्दद्यात् यद्बुद्धत्वसमं भवेत् ।
यत्सत्त्वसौमनस्यैन कृतेन ह्यनुभूयते ॥

प्रासादिकत्वमारोग्यं प्रामोद्यं चिरजीवितम् ।
चक्रवर्तिसुखं स्फीतं शान्तः प्राप्नोति संसरन् ॥ २४२ ॥

बोधिचित्ताद्धि यत्पुण्यं तच्च रूपि भवेद्यदि ।
आकाशधातुं संपूर्य भूयश्चोत्तरि तद्भवेत् । इति ॥ ३२ ॥

एवं पुण्यं सम्पाद्य पापं क्षपयित्वा विद्ययाऽविद्यां विनाश्य निर्वृतः भवेदिति सिद्धान्तः ॥

एवं शून्येषु धर्मेषु किं लब्धं किं हृतं भवेत् ।
सत्कृतः परिभूतो वा केन कस्संभविष्यति ॥ इति । बो. ५९०॥

एवं शून्यवादलक्षणं महायानं सर्ववादप्रतिपक्षभूतं निरूपितम् । अस्य च वादस्य नागार्जुन एव प्रवक्तेति लङ्कावतारगाथिकायां सूच्यते(२८६)—

निश्चितास्तीर्थवादानां महायानमनिश्चितम् ।
सत्त्वाश्रयप्रवृत्तोऽयं कुदृष्टीनामनास्पदम् ॥

प्रत्यात्मवेद्यमानं मे तार्किकाणामगोचरम् ।
पश्चात्काले गते नाथे ब्रूहि कोऽयं धरिष्यति ॥

निर्वृते सुगते पश्चात्कालोऽतीतो भविष्यति ।
महामते निबोधत्वं यो नेत्रीं धारयिष्यति ॥

दक्षिणापथवेदल्यां भिक्षुः श्रीमान् महायशाः ।
नागाह्वयस्स नाम्ना तु सदसत्पक्षदारकः ॥

प्रकाश्य लोके मद्यानं महायानमनुत्तमम् ।
आसाद्य भूमिं मुदितां यास्यतेऽसौ सुखावतीम् ॥

इति । भाविष्यपुराणवदिदं प्रकरणमिति सुधियो विभावयन्ति ॥

एवं सौगतसिद्धान्तरीतयः संप्रकाशिताः ।
लक्ष्मीपुरं श्रीनिवासविपश्चिच्चक्रवर्तिना ॥

इति दर्शनोदये शून्यतादर्शन परिच्छेदः प्रथमः.

———

# सत्यतादर्शनम्.

## स्वभाववादः.

**ब्रह्मसत्यजगन्मिथ्या सिद्धान्तोऽथ विचिन्त्यते ।**
**तदुपोद्घातरूपेण कांश्चिद्वादान् विविञ्ज्महे ॥**

अत्र प्रथमः लोकायतः स्वभाववादः । स हि स्वाभाविकपरिणाम-वादापरपर्यायः स्थूलदृष्ट्या लोकप्रसिद्ध इति लोकायत बार्हस्पत्य चार्वाकादिपदैः व्यपदिश्यते । तत्र हीमानि बार्हस्पत्यसूत्राणि भास्कर-भाष्ये (१९६) समुदाहृतानि—" अथ लोकायतम् । पृथिव्यप्तेजो-वायुरिति तत्त्वानि । तत्समुदाये शरीरेन्द्रियविषयसंज्ञा । तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत् विज्ञानम् " इति ॥

तथा—" लोकायतमेव शास्त्रम् । यत्र प्रत्यक्षमेव प्रमाणम् । अर्थकामौ पुरुषार्थौ । भूतान्येव चेतयन्ते । नास्ति परलोकः । मृत्युरेवा-पवर्गः " इति तत्सिद्धान्तस्वरूपं प्रबोधचन्द्रोदये निरूपितम् ॥

अपि च—

**नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन ।**
**विचित्राः केचिदित्यत्र तत्स्वभावो नियामकः ॥**
**अग्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।**
**केनेदं चित्रितं तस्मात् तत्स्वभावो नियामकः ॥**

इति न्यायकुसुमाञ्जलिप्रथमस्तबकटीकायामुदाहृतम् ॥

तथा बोधिचर्यावतारपञ्जिकायामप्येवमुदाहृतमस्ति (५४१)—

**सर्वहेतुनिराशंसं भावानां जन्म वर्ण्यते ।**
**स्वभाववादिभिः ते च नाहुः स्वमपि कारणम् ॥**

राजीवकेसरादीनां वैचित्र्यं कः करोति हि ।
मयूरचन्द्रिकादिर्वा विचित्रः केन निर्मितः ॥
यथैव कण्टकादीनां तैक्ष्ण्यादिकमहेतुकम् ।
कादाचित्कतया तद्वत् दुःखादीनामहेतुता ॥

इति । सर्वस्याप्यस्य मूलं गौतमीयं न्यायसूत्रम् " अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिवत् " इति । (४–१–२२) विस्तरस्त्वस्य पुरस्तात् कार्यकारणभावविचारे भविष्यति । अत्रापि किंचिदुच्यते— " प्रत्यक्षपरिकलितोपादानशक्तिलक्षणवस्तुस्वभावेनैव परिणामपरम्परा-दर्शनात् स्वभाववादः । तत्र च नियतचेतनादिनिमित्तादर्शनात् निरपेक्ष-वादः । नियतनियामकादर्शनात् यदृच्छावादः । अप्रार्थितानि अवि-ज्ञातान्येव कार्याण्यनुभूयन्त इति प्रसङ्गवादोऽनुषङ्गवादो वा । देश-स्वभाववत्कालस्वभावकल्पना कदाचिद्वादः । एवमादीनां सर्वेष-वादानां समाहारः अकस्माद्वाद इत्याकस्मिकतावादिनो लौका-यताः ॥

## प्रयत्नवादः.

अत्र स्वभाववादे—

स्वप्रवृत्त्यादिनैष्फल्यं शास्त्रादेरप्यनुत्थितिः ।
आलस्यं देशकालादिनियतेरव्यवस्थितः ॥

इत्यादिदोषेण तमेतं वादं केवलेर्ष्यासूयादिरूपदुःखप्रदं अपुरुषार्थपर्यवसा-यिनं पुरुषकारानवकाशप्रदं आलस्याधायकं अनिर्मोक्षप्रदं निःस्वभाववाद-लक्षणेन रागादिक्लेशनिवृत्तिहेतुना नैरात्म्यवादापरपर्यायेण पुरुषकार-रूपभावनासाध्यसम्यग्दर्शनफलेन शून्यवादरूपेण प्रयत्नवादेन सौगता निराचक्रुः ॥

तद्वादस्वरूपं पूर्वं प्रपञ्चेनोपपादितमपि प्रसङ्गात्किंचिदुच्यते। तेषामियं प्रतिज्ञा आर्यलङ्कावतारे (११६ पु.)—

**बुद्ध्या विवेच्यमानानां स्वभावो नावधार्यते।**
**अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः॥**

इति। अनूदितश्चायमर्थः अक्षपादेनापि न्यायसूत्रे—"बुद्ध्याविवेचनात्तु भावानां याथात्म्यानुपलब्धिः। तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत्तदनुपलब्धिः" (४-२-२६) इति॥

भाष्यं तस्येदं वात्स्यायनीयम्—यथा अयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुषु विवेच्यमानेषु यथा नार्थान्तरं किंचिदुपलभ्यते यत्पटबुद्धेर्विषयः स्यात् याथात्म्यानुपलब्धेः। असति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति। एवं सर्वत्रेति॥

तथा—"स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः। मायागन्धर्वनगरमृगतृष्णिकावद्वा"॥ (४-२-३२)

भा—यथा स्वप्ने न विषयास्सन्ति अथचाभिमानो भवति। एवं न प्रमाणानि प्रमेयाणि च सन्ति। अथच प्रमाणप्रमेयाभिमानो भवति इति॥

एते भ्रान्तिवादिनः। भ्रमलक्षणं किमपि ज्ञानान्तरमस्तीति वदन्ति। प्रयोजनं त्वस्य प्रागेव निरूपितम्। अग्रेऽपि निरूप्यते। सोऽयं निःस्वभाववादलक्षणः प्रयत्नवादः प्रथममेव विस्तरेण निरूपितः॥

परिष्कृतस्वभाववादः.

अज्ञानात् बन्धः ज्ञानान्मोक्ष इति सर्वदार्शनिकानां सामान्यतो व्यपदेशः। तत्र किं नामाज्ञानं किं नाम च ज्ञानमिति विचारे

प्रवृत्ते अविद्या भ्रान्तिः आरोपः अध्यासः मिथ्याप्रत्ययः इत्यादिभिः पदैः व्यपदेश्यः स्वप्नमायागन्धर्वनगरमृगतृष्णिकादिप्रत्ययतुल्यः कश्चित्प्रत्ययः अज्ञानम् । तन्निवर्तकः विद्या प्रमा तत्त्वज्ञानं निश्चयः सम्यग्दर्शनं इत्यादिभिः पदैः व्यपदेश्यः पृथिवीगिरिसरित्समुद्रसूर्यचन्द्राग्निदारागारकेदारपशुपुत्रहिरण्यादिप्रत्ययतुल्यः कश्चित्प्रत्ययः ज्ञानमिति प्रायः इदानींतनास्सर्वेऽपि दार्शनिकाः व्यवहरन्ति ॥

पुरा खलु सौगताः एवमध्यगच्छन्--ये तु विद्यादिपदव्यपदेश्याः प्रत्ययाः तेऽपि विवेच्यमानाः अविद्यादिपदव्यपदेश्यप्रत्ययतुल्या एव भवितुमर्हन्ति । ततश्च सर्वे प्रत्ययाः परमार्थतः मिथ्याप्रत्यया एवेति ॥

अत्र साङ्ख्याः---एवं प्रत्ययानां सर्वेषां मिथ्यात्वे अयथार्थत्वे प्रपञ्चश्शून्य एवेति सिद्ध्यतीति प्रत्यवस्थिताः अविद्यादिपदव्यपदेश्यं भ्रमलक्षणमज्ञानमेव प्रथममपलपन्ति स्म ॥

तथाहि—ज्ञानं नाम अन्तःकरणपरिणामः । अज्ञानं नाम अपरिणतमन्तःकरणम् । स एवाविवेकः अभिमान इत्यप्युच्यते ॥

विवेको नाम प्रकृतिपुरुषान्यताख्यातिः । चेतनाचेतनभेदज्ञानमित्यर्थः । स चान्तःकरणपरिणाम एव । परिणतमन्तःकरणमिति यावत् एवंचाज्ञानलक्षणभ्रमात्मकपरिणामस्यैवाभावात् तद्विषयत्वस्यावस्तुत्वप्रयोजकस्य मूलत एव च्छेदात् प्रपञ्चस्सत्य एव, स्वरूपेण ज्ञायमानत्वात् । ततश्च विवेकख्यात्यभावेनैव बन्धः । सत्यामन्यताख्यातौ मुक्तिरिति सिद्धान्तः ॥

तदेतन्मतमभिसन्धाय वात्स्यायनो न्यायभाष्ये एवमाह— (४-२-१) "मिथ्याज्ञानं वै खलु मोहः । न तत्त्वज्ञानस्यानुत्पत्तिमात्रम् । तच्च मिथ्याज्ञानं यत्र विषये प्रवर्तमानं संसारबीजं भवति

स विषयस्तत्त्वतो ज्ञेय इति । किंपुनस्तन्मिथ्याज्ञानम्? अनात्मन्यात्मग्रहः अहमस्मीति मोहः अहंकारश्च " इति ॥

तथाचाहोदयनाचार्योऽपि न्यायकुसुमाञ्जलौ साङ्ख्यसिद्धान्तानुवादसन्दर्भे—" भेदाग्रहाच्च निष्क्रियेऽपि तस्मिन् पुरुषे कर्तृत्वाभिमानः तस्मिन्नचेतने चेतनत्वाभिमानः " इति । अत्राभिमानशब्दप्रयोगोऽपि भेदाग्रहलक्षणाख्यातिवादपरिभाषानिबन्धनः । स्पष्टमेतत् शास्त्रदीपिकायां तर्कपादे प्राभाकरमतानुवादावसरे। एतद्दृष्ट्वैव " मिथ्याज्ञाननिमित्तस्सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिको लोकव्यवहारः " इत्यध्यासभाष्यं शाङ्करं प्रवृत्तम् । शेषमुत्तरत्र स्फुटीभविष्यति ॥

एवं च प्रपञ्चशून्यवादमूलभूताऽविद्यैव प्रथमं स्वरूपतस्साङ्ख्यैरपाकृता। अत एव साङ्ख्याः प्रथमे अख्यातिवादिनः । तदनुयायिनः प्रभाकरमीमांसका इति विवेकोऽवधार्यः । शून्यवादस्य साक्षात्प्रतिपक्षभूतः परमार्थवादः साङ्ख्यसिद्धान्त एवेति सर्वप्रकारेण प्राङ्निरूपितम् ॥

अत्रापि पुनरुच्यते—सर्वमसदिति सौगताः सदिति साङ्ख्याः । एवमनित्यं नित्यं, क्षणिकं स्थिरं, निस्स्वभावं सुखादिस्वभावं, असत्कार्यं सत्कार्यं, परतन्त्रं, स्वतन्त्रं असत्यं, सत्यं, अभावात्मकं भावात्मकमित्यादि ॥

अत एव लोकेऽपि विरोधोदाहरणाय सुगतकपिलयोरेवादरः । यथा—

**सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा ।**
**तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः ॥ इति ॥**

ततश्चार्हतपातञ्जलकौमारिलादयः माध्यस्थ्यमशिश्रयन्निति प्राक्सूचितम् । इदमत्र प्रकाश्यते—स्वरूपेणैव सर्वमसदिति सौगताः प्राहुः । स्वरूपेणैव सर्वं सदिति साङ्ख्याः । एते पुनः सर्वं स्वरूपेण सत् पररूपेणासदिति कथयन्ति—

**स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।**
**वस्तुनि ज्ञायते किंचिद्रूपं कैश्चित्कदा चन ॥ इति ॥**
**(श्लोकवा. ४७६)**

**दूषिता साधिता वाऽपि न च तत्र बलाबलम् ।**
**कदाचिन्निश्चितं कैश्चित्तस्मान्मध्यस्थता वरम् ॥ इति ॥**
**(श्लोकवा. ६३३)**

नैयायिकादयस्तु—वस्तु न द्व्यात्मकम्. भावः स्वरूपेणैव वस्तुभूतः । अभावोऽपि स्वरूपेणैव वस्तुभूत इति विभज्य निरूपयन्ति । अत्रान्यरूपेणासत्त्वं घटादेः व्यधिकरणधर्मावच्छिन्नाभावो भवति । स हि अनेकान्तवादिमतरीत्या निष्पन्नः । अत एव नव्यनैयायिकैः नोपगम्यते इति तत्त्वम् ॥

ततश्च नैयायिकादिमते स्वभाववादं प्रयत्नवादं च परिष्कर्तुं भावं अभावं नित्यं अनित्यं चेत्येवंरूपेण विभज्य विलक्षणः पन्थाः समाश्रित इत्यवगम्यते । इदमपरं विलक्षणं माध्यस्थ्यम् । एवं सर्वेऽप्येकान्तवादिनो दार्शनिकाः परस्परविलक्षणमाध्यस्थ्यनिष्ठा इति निर्णयः ॥

एतादृशानामभिप्रायाणामनादित्वस्य प्राङ्निरूपितत्वात् विचारावकाशाय पौर्वापर्यकथनमात्रेण वैदिकादिसिद्धान्ताः व्याकुलीकृता इति नार्हन्ति शङ्कितुं सुमनसः ॥

ततश्चैकान्तवादोऽनेकान्तवादश्चेति द्वैविध्यमवगतं भवति । तत्र न्यायवैशेषिकप्राभाकरादीनामैकान्त्यमभिमतम् । पातञ्जलार्हतभाट्टादीनामनैकान्त्यमभिमतम् ॥

पातञ्जलमनैकान्त्यमेवं विज्ञायते—(१-६) "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति सूत्रं ज्ञानविभागपरम् । एतेन—न्यायवाद, शून्यवाद, विज्ञानवाद, साङ्ख्यवाद, वेदान्तवादाः स्वीकृता इति विज्ञायते ॥

तथा—(३-१३) " अयमदोषः एकान्तानभ्युपगमात् । तदेतत्त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात् । अपेतमप्यस्ति विनाशप्रतिषेधात् । संसर्गाच्चास्य सौक्ष्म्यं सौक्ष्म्याच्चानुपलब्धिः" इति व्यासदेवभाष्यम् ॥

अत्रेत्थं तत्त्ववैशारदी—न त्वैकान्तिकीं नित्यतामातिष्ठामहे । किंतु तदेतत् त्रैलोक्यं न तु द्रव्यमात्रं व्यक्तेः अर्थक्रियाकारिणोरूपादपैति । प्रतिषेधात् प्रमाणेन । यदिह घटो व्यक्तेर्नापेयात् कपालशर्कराचूर्णादिष्वपि व्यक्तो घट इति पूर्ववदुपलब्ध्यर्थक्रिये कुर्यात् । तस्मादनित्यं त्रैलोक्यम् ॥

अस्तुतर्ह्यनित्यमेव उपलब्ध्यर्थक्रियारहितत्वेन गगनारविन्दवत् तुच्छत्वादित्यत आह—अपेतमप्यस्ति । नात्यन्ततुच्छता । नाशप्रतिषेधात् प्रमाणेन । तथाहि—यत्तुच्छं न तत्कदाचिदपि उपलब्ध्यर्थक्रिये करोति यथा गगनारविन्दम् । तस्मात् कथंचिन्नित्यं परिणामीति सिद्धं भवति संसर्गात् स्वकारणे लयात् सौक्ष्म्यं दर्शनानर्हत्वम् । ततश्च नानुपलब्धिरिति ॥

एवं—पुरुषार्थलक्षणः स्वभाव एव जगतः प्रवर्तक इति साङ्ख्याः। पुण्यापुण्यलक्षणं कर्म निमित्तपदवाच्यं प्रवर्तकमिति वैदिकाः। ईश्वरो निरपेक्षः प्रवर्तक इति शैवाद्यागमिकाः। पातञ्जलसिद्धान्ते तु पुरुषार्थ उद्देश्यतया प्रवर्तकः। निमित्तं प्रतिबन्धकनिरासकतया प्रवर्तकम्। ईश्वरः पुनस्सापेक्ष एवैतदुभयं समीकृत्य प्रवर्तक इत्यभ्युपगम्यते। ततश्च सर्वसमाहारः पातञ्जलदर्शनमिति स्पष्टम्॥

वेदान्तवादः.

अतः परं अद्ययावत् स्वभाववादनिःस्वभाववादयोरेव परिष्काराः। तत्र बादरायणीयवेदान्तवादोदयचिन्ता—यत एवमनुश्रूयते तन्त्रवार्तिके स्मृत्यधिकरणान्ते—(८१पु.)

"याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीताः तास्सर्वा मन्त्रार्थवादविज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन द्रष्टव्याः। प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम्। सर्गप्रलयोपवर्णनमपि दैवपुरुषकारभावप्रभावप्रविभागदर्शनार्थम्। सर्वत्रैव हि तद्बलेन प्रवर्तते तदुपरमे च उपरमतीति॥

विज्ञानमात्र क्षणभङ्गनैरात्म्यवादानामपि उपनिषत्प्रभवत्वं विषयेष्वात्यन्तिकं रागं निवर्तयितुमित्युपपन्नं सर्वेषां प्रामाण्यम्" इति॥

तदिदं जगदनादिवादिनां जैमिनिप्रभृतीनां सिद्धान्तरहस्यम्। एवंविधे ह्यभिप्राये कदाचिदाचार्यबादरायणात्प्राग्जगति प्रसृते सति बादरायणीयमुत्तरमीमांसादर्शनं किमर्थं प्रवृत्तमिति विचारयितुमवकाशस्सम्पद्यते॥

तत्रेदमादाववधारणीयम्—औपनिषदं दर्शनं प्राधान्येन नैरात्म्यवादस्य निराकरणार्थमेव प्रवृत्तम्। अत एवाध्यात्मशास्त्रमित्येतस्य

प्रसिद्धिः । तस्य तु नैरात्म्यशास्त्रमिति । ततश्चात्मनि कस्मिंश्चित्सिद्धे भेदाभेदतदुभयताद्विलक्षणवादलक्षणस्य कोलाहलस्यावसर इति विदितमेवैतत् ॥

न हि खलु न्यायवैशेषिकादिशास्त्रवत् प्रमाणप्रमेयपरिशोधनार्थमिदं शारीरकं शास्त्रं प्रवृत्तम् । अपितु जगत्कारणीभूतब्रह्मस्वरूपनिरूपणार्थम् । यतः प्राङ्निरूपिततत्रवार्तिकलेखनानुरोधेन सर्वेषां दर्शनानामुपनिषत्प्रभवत्वविज्ञाने सर्वोऽपि दार्शनिको विद्वान् स्वकीयमेव दर्शनमुपनिषदां तात्पर्यभूमिरिति कृत्वा स्वस्वसिद्धान्त एव औपनिषदस्सिद्धान्त इति प्रतिष्ठापयेत् । ततश्चाव्यवस्थादोषः ॥

एतादृशदोषपरिजिहीर्षयैव भगवान् बादरायणः सर्वोपनिषत्तात्पर्यनिर्णयाय विचाररूपं शारीरकमीमांसाशास्त्रं बहोः कालाद्विविधप्रस्थानप्रस्थितमेकमुखेन प्रवर्तयामास । एवं सत्यपि तस्मिन्नेव ब्रह्मकारणत्वसिद्धान्ते मतिभेदाः महतामप्याचार्याणां भाष्यकाराणां समुल्लसन्तीति स एवाव्यवस्थादोषो दुरात्मा समुज्जीवतीति सरलहृदयाः केचित् खिद्यन्ते । केचित्पुनर्मध्यस्थमनसः लोकपर्यायवृत्तान्तचिन्ताचतुराः—

**महतामपि केषांचिदतिवादाः पृथग्विधाः ।**
**तत्तदर्थप्रशंसादितत्परत्वादबाधिताः ॥**

इति विद्वन्मूर्धन्यवेदान्ताचार्योक्तरीत्या यथासंप्रदायं समादधति साधवः ॥

सर्वेषामपि दार्शनिकानां स्वंस्वं दर्शनमौपनिषदीकर्तुमापाततोऽवकाशप्रदानान्युपनिषद्वाक्यानि प्रदर्शयिष्यामः—"अस्तीत्येके नायमस्तीति चैके" (कठ. १-२०) इति वाक्यं चार्वाकदर्शनस्यावकाशं ददाति । "विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति

न प्रेत्य संज्ञाऽस्ति" (बृ. ६-५-१३) इति वाक्यं पूर्वस्य विज्ञानवादस्य च। "असद्वा इदमग्र आसीत्, अथात आदेशो नेति नेति" इत्यादि वाक्यं शून्यवादस्य। (तै. २-७) (बृ. ४-३-६)

साङ्ख्यादिदर्शनानां तु वाक्यानि सूत्राणां विषयवाक्यान्येव प्रसिद्धानीति दिक्॥

अत एव वेदान्तशास्त्रं बौद्धशास्त्रमेवेत्यभिप्रायसूचकं प्रबोध-चन्द्रोदयेऽपि (२-४) पद्यमिदं पठ्यते—

**प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः।**
**वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते॥ इति॥**

एकत्ववादः

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥**

इति वाक्यपदीये (१-१) भर्तृहरिणा विवर्तवादस्सूचितः। तथा तत्रैवाष्टमे पद्ये—

**तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः।**
**एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः॥**

इत्येकत्ववादः द्वैतवादश्च प्रदूषितः। अनेन व्यवहारेण तत्त्व-विषये प्राचीनसमये एकत्ववादः द्वैतवाद इति व्यवहार आसीदिति विज्ञायते। ततश्च विवर्तवादापेक्षया एकत्ववादो विलक्षणः भवितु-मर्हतीत्यन्वीक्ष्यते। तथाच एकत्ववादः एकतत्त्वपरिणामवादस्स्यात्। अयमेव वादः महाभाष्ये (१-१-१) "यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तदपि नित्यमित्येकं दर्शनम्" इत्यनूदितम्। पातञ्जलसूत्रेऽपि व्यासदेवीयभाष्ये (४-३३) इदं वाक्यं दृश्यते। व्याख्यातं चेदं

वाचस्पतिमिश्रेण न्यायवार्तिकतात्पर्यटीकायामेवम्—(४-१-१९) "ब्रह्मैव हि प्रपञ्चरूपेण परिणमते मृत्तिकेव घटशरावोदञ्चनप्रभृतिभावेन । नचैवं नित्यत्वव्याघातः, परिणामेऽपि तत्त्वाविघातात्, तल्लक्षणत्वाच्च नित्यतायाः" इति ॥

सोऽयं वाद एकतत्त्वलक्षणः वात्स्यायनीयन्यायभाष्ये (४-१-४०) अनूदितः "सर्वमेकं सदविशेषात्" इति । प्रायेणायं वादः निरुपाधिकनिषेधप्रतिपक्षतया प्रवृत्तो निरुपाधिकविधिवादः । "सदेव सोम्येदम्" इति श्रुतिरप्यत्र मानं स्यात् ॥

एतमपि सदेकतत्त्ववादं वाक्यपद्यां (३-३४) विवर्तवादसोदरीकृतं पश्यामः—

**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।**
**सत्यं यत्तत्र सा जातिः असत्या व्यक्तयो मताः ॥**
**सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।**
**जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥**
**तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥** इति ।

एष एव सर्वानुगतसामान्यात्मकसल्लक्षणब्रह्मवादः मण्डनमिश्रपरिगृहीत इति विज्ञायते । तथाहि ब्रह्मसिद्धौ—

**एकस्यैवास्तु महिमा यन्नानेव प्रकाशते ।**
**लाघवान्न तु भिन्नानां यच्चकास्त्यप्यभिन्नवत् ॥** इति ।

इदं पद्यं न्यायमकरन्दे आनन्दबोधाचार्यः ब्रह्मसिद्धिरित्याह ॥

तदेतन्मतं प्रकरणपञ्चिकायां तत्त्वालोके (१५२ पु.) एवमनूदितम्—"यदपि कैश्चित् प्रमेयविकल्पेन सामान्यमेव तत्त्वमिति स्थापयित्वा सत्ताया महासामान्यरूपत्वात् सन्मात्रमेव वस्तु" इति ॥

अयमेव ग्रन्थभागः न्यायमकरन्दे (२९० पुटे) अनूद्य—“ तदपि न सत्कल्पम् ” इत्यादिना दूषितः। अत एव आनन्दगिरिणापि बृहदारण्यकभाष्ये (२-१-१) “ निर्लुठितसामान्यविशेषभावम् ” इति ब्रह्म निरूपितम् ॥

एवं मण्डनमिश्रीयाद्वैतासिद्धान्तात् शांकराद्वैतसिद्धान्ते भावाद्वैतमभावाद्वैतं जीवाश्रितमज्ञानं ब्रह्माश्रितमित्यादयः भूयांसो भेदास्समुपलभ्यन्ते । तत्र विस्तरभिया इदमेकं मुख्यमुदाहरणम्—अद्वैततत्त्वसाक्षात्कारः चरमदेहावसानसमये ध्याननियोगादिना जायत इति मण्डनामिश्रीयः सिद्धान्त इति ज्ञायते । स एवेदानी ज्ञानानुत्पत्तिपक्ष इति व्यवह्रियते । परिशुद्धान्तःकरणस्य महावाक्यार्थश्रवणादेव यदा कदा वा जायत इति शाङ्करस्सिद्धान्तः । एष एव बाधितानुवृत्तिपक्षः । अत्र पक्षे तत्त्वसाक्षात्कारे जातेऽपि भेदज्ञानं छिन्नमूलमपि मात्रयाऽनुवर्तते इत्युच्यते । तत्र प्रथमः पक्षः जीवन्मुक्तो नास्तीति वादः । द्वितीयस्तु अस्तीति वादः । प्रथमपक्षे तत्त्वसाक्षात्कारवत उपदेष्टुरभावात् सम्प्रदायो नामान्धपरम्परैव स्यात् । द्वितीयपक्षे सम्प्रदायशुद्धिरिति विभागः । सम्प्रदायो नाम शिष्याचार्यसम्बन्धस्याविच्छेदेन शास्त्रप्राप्तिः ॥

अत्र प्रमाणमिदं शांकरं शारीरकभाष्यं—(४-१-१५) “ ननु वस्तुबलेनैवायमकर्त्रात्मबोधः कर्माणि क्षपयन् कथं कानि चित् क्षपयेत् कानिचिच्चोपेक्षेत । नहि समाऽनेऽग्निबीजसम्पर्के केषांचित् बीजशक्तिः क्षीयते केषांचिन्न क्षीयत इति शक्यमङ्गीकर्तुमिति ॥

उच्यते—न हि तावदनाश्रित्यारब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते । आश्रिते च तस्मिन् कुलालचक्रवत् प्रवृत्तवेगस्यान्तराले

प्रतिबन्धासम्भवात् भवति वेगक्षयप्रतिपालनम् अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबाधनेन कर्माण्युच्छिनत्ति । बाधितमपि मिथ्याज्ञानं द्विचन्द्रादिज्ञानवत् संस्कारवशात्किञ्चित्कालमनुवर्तत एव ॥

अपिच नैवात्र विवदितव्यम्—ब्रह्मविदः कंचित्कालं शरीरं ध्रियते न ध्रियत इति । कथं ह्येकस्य हृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्यते । श्रुतिस्मृतिषु च 'स्थितप्रज्ञनिर्देशेन एतदेव निरुच्यते । तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोः विद्यासामर्थ्यात् क्षय इति निर्णयः" इति ॥

अत्र मण्डनमिश्राभिप्रायेण स्थितप्रज्ञः साधक इत्यर्थः । शङ्कराचार्याभिप्रायेण स्थितप्रज्ञः सिद्धः जीवन्मुक्त इत्यर्थः । अधिकं भामतीकल्पतर्वोः द्रष्टव्यम् । तस्मात्तत्त्वदर्शिन एवोपदेष्टृतेति भावः ॥

अतएवेत्थं लिख्यते पञ्चपादिकायां—(२० पु) " ब्रह्मविदामेकपुण्डरीकस्य ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहस्य भगवतो भाष्यकारस्य मतमागमयितव्यम् " इति ॥

विशिष्टाद्वैतसिद्धान्तेऽपि परभक्तिरूपसाक्षात्कारस्य चरमदेहावसानसमय एवाभ्युपगमात् सम्प्रदायसिद्धिः कथमिति यद्यपि शङ्का समुदेति । तथापि निष्पन्नसमाधीनामपि प्रारब्धशेषाभ्युपगमात् सहजसाक्षात्कारवतो भगवतः, तादृशानामेव नित्यसूरीणां, प्रयत्नजसाक्षात्कारवतां मुक्तानां च जगदनुग्रहायानेकविधावताराभ्युपगमाच्च उपदेष्टृतोपपत्तेः सिध्यति सम्प्रदायपरिशुद्धिरित्यलं प्रसक्तानुप्रसक्त्या ॥

अथात्मैकत्वसिद्धान्ते उपदेष्टा उपदेशः उपदेशफलं च कथमिति शङ्कायां बृहदारण्यकभाष्ये भाषितमेवम्—(४-१-२०) " यदुक्तं

ब्रह्मात्मैकत्वे यस्मा उपदेशो यस्य च उपदेशग्रहणफलं तदभावादेकत्वोपदेशानर्थक्यमिति । तदपि न—अनेककारकसाध्यत्वात्क्रियाणां कश्चोद्यो भवति । एकस्मिन् ब्रह्मणि निरुपाधिके नोपदेशो नोपदेष्टा नोपदेशग्रहणफलम् । तस्मादुपनिषदां चानर्थक्यमित्येतदभ्युपगतमेव । अथानेकविषयानर्थक्यं चोद्यते? न—स्वतोऽभ्युपगमविरोधादात्मवादिनाम्" इति ॥

न्यायमकरन्दे (३३१ पु.)—"किन्तु विधूताखिलभेदमेकमेव चैतन्यमनाद्यविद्याविनिर्मितगुरुशिष्यविभागं काल्पनिकगुरुपरिच्छेदजनितविद्याविनिवर्त्यनिश्शेषाविद्यं मुच्यते" इति दृश्यते ॥

सिद्धान्तबिन्दौ मधुसूदनसरस्वतीवाक्यमिदम् (११७)–"अत्र जीव एव स्वाज्ञानवशात् जगदुपादानं निमित्तं च । दृश्यं सर्वं प्रातीतिकम् । देहभेदाच्च जीवभेदभ्रान्तिः । एकस्यैव च स्वकल्पितगुरुशास्त्राद्युपबृंहितश्रवणमननादिदार्ढ्यात् आत्मसाक्षात्कारे सति मोक्षः । शुकादीनां मोक्षश्रवणमर्थवादः" इति ॥

गौडपादकारिका(२-३२)यामपि परमार्थदशादृष्ट्या एवमुच्यते—

**न निरोधो न चोत्पत्तिः न बद्धो न च साधकः ।**
**न मुमुक्षुः न वै मुक्त इत्येषा परमार्थता ॥ इति ॥**

## द्वैतवादः.

साङ्ख्ययोगवैशेषिकादिभिः अनेकपदार्थवादिभिः बहुविधाः पदार्था निरूपिताः । प्रायस्सर्वैरपीदमुच्यते—प्रपञ्चस्य सत्यत्वेऽपि तत्सम्बन्धो बन्धः सम्बन्धविलयो मोक्ष इति ॥

अत एव न्यायमकरन्दे (३०३ पु.)—"न खलु सम्बन्धो नाम सम्बन्धिभ्यामतिरिक्तः तन्मात्रो वा निपुणनिरूपणपदवीमधिरोहति" इति लिखितम् । निपुणनिरूपणपदवीमधिरोहतीत्येवैतेषामनुभवः ॥

अत्रेदं—साङ्ख्यरहस्यम्—दृग्दृश्यभावलक्षणप्रकृतिदर्शनमेव बन्धः । पुनरदर्शनमेव मोक्ष इति । तथाहि—न हि पुरुष एव स्वभावतो विषयसम्बन्धी, अनिर्मोक्षप्रसङ्गात् । नापि प्रकृतिरेव स्वभावतः पुरुषसंसर्गवती, तस्या अपि नित्यत्वेनानिर्मोक्षप्रसङ्गात् । नापि शब्दादिविषयरूपस्य जगतः आत्मनश्च साक्षात्सम्बन्धः, दृष्टत्वादृष्टत्वव्यवस्थानुपपत्तेः । नापि श्रोत्रादीन्द्रियद्वारा, मनसि विषयान्तरव्यापृतेऽपि विज्ञानोदयप्रसङ्गात् । नापीन्द्रियमनोद्वारा, स्वप्नदशायां वराहोऽहं व्याघ्रोऽहमित्याद्यभिमानवत नरस्य नरत्वे सन्निकृष्टेऽपि नरोऽहमित्यभिमानविरहात् । अतो नियतविषयाभिमानव्यापारोऽहङ्कारोऽङ्गीकर्तव्यः । नाप्यहङ्कारपर्यन्तव्यापारेण । सुषुप्त्यवस्थायां प्रागुक्तसकलव्यापारविगमेऽपि श्वासप्रश्वासौपयिकप्रयत्नलक्षणव्यापारानुपपत्तेः । तस्माद्यदेतास्ववस्थासु सव्यापारमेकमनुवर्तते यदाश्रया सर्वाऽपि वासना तदन्तःकरणं बुद्धिलक्षणमाश्रित्य घटादिर्विषयः पुरुषस्योपधानी भवति अनुभवगोचरो भूत्वा संसारमावहतीति यावत् ॥

ततश्च आलोचनाख्यः निर्विकल्पकपदवाच्यः व्यापार इन्द्रियाणाम् । विकल्पो मनसः । अभिमानोऽहङ्कारस्य । प्रयत्नलक्षणोऽध्यवसायो बुद्धेरिति श्रोत्रादीनि बाह्येन्द्रियाणि मनोहङ्कारबुद्धिरूपाण्यन्तःकरणानि च स्वीकर्तव्यानि ॥

पुरुषबुद्ध्योः भेदाग्रहात् निष्क्रिये निरतिशये पुष्करपलाशवन्निर्लेपेऽपि पूरुषे कर्तृत्वाभिमानः । तस्मिन्नचेतनेऽपि बुद्धितत्त्वे चेत-

नाभिमानः । ततश्च सा बुद्धिः घटमिममहं करोमीत्याद्यनुभवादंश-त्रयवती भवति । पुरुषोपरागः विषयोपरागः व्यापारावेशश्चेति त्रयोंऽशाः। तत्र अहमित्यंशः पुरुषोपरागः दर्पणस्येव मुखोपरागोऽतात्त्विक । इद-मित्यंशः घटादिर्विषयोपरागः नि श्वासाभिहतस्य दर्पणस्येव मलिनिमा तात्त्विकः इन्द्रियद्वारा घटाकारेण परिणामः । एतदुभयायत्तो व्यापारा-वेशपदवाच्यः प्रयत्नाध्यवसायः ॥

एवं रूपांशत्रयवती बुद्धिपदाभिधेया । बुद्धेर्विषयोपरागलक्षणः घटाकारबुद्धिपरिणामः घटादिना सम्बन्धरूपः ज्ञानपदाभिधेयः । तेन सह यः पुरुषोपरागस्य सम्बन्धः सैवोपलब्धिपदाभिधेया दर्पणप्रतिबिम्बितस्य मुखस्य दर्पणमलिनिम्ना मलिनिमेव अतात्त्विकः । ततश्च बुद्धिः ज्ञानं उपलब्धिश्चेत्यर्थान्तरम् ॥

तत्र सत्त्वपुरुषान्यताख्यात्या बुद्धिपुरुषविवेकलक्षणया तत्त्वज्ञान-रूपया विवेकाभावनिबन्धनसर्वसम्बन्धपरिलोपे मुक्तो भवतीति । एवं प्रपञ्चसत्यतावादेषु सर्वेष्वनुसन्धेयं संसर्गविलय एव मोक्ष इति ॥

इदमत्रावधेयम्—मोक्षसाधनीभूतं ज्ञानं भावनाबलजं प्रत्यक्ष-विशेषरूपमिति केषाञ्चिदभिप्रायः । विपरीतवासनानिवृत्त्यनन्तरकालीनं शास्त्रजनितमेव ज्ञानमित्यन्येषामाशयः । शास्त्रजनितमेव ज्ञानं भावना-बलेन प्रत्यक्षसमानाकारं स्मृतिरूपमेव भवारम्भस्य निष्कृतिरित्यपरेषां सिद्धान्तः ॥

तत्राद्यस्य पक्षस्य पातञ्जलाः प्रवर्तकाः । द्वितीयस्य साङ्ख्याः । तृतीयस्य वाक्यकाराः ब्रह्मनन्द्यादयः । तदुक्तं महाभारते शान्तौ नारायणीये—"प्रत्यक्षसाधना योगाः साङ्ख्याश्शास्त्रविनिश्चयाः" इति ।

इदं च वचनं पाञ्चरात्राधिकरणश्रुतप्रकाशिकायामुदाहृत्य निरुक्तरीत्या व्याख्यातम् । "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष." इति वाक्यकार-वाक्यम् (श्रीभाष्ये १-१-१.) समुदाहृतम् ॥

इदम्पुनरत्रावधेयम्—परमात्मसेवालक्षणया भक्त्या ज्ञानरूपया ये मोक्षं परमात्मप्रसादेन साधयन्ति, तेषां सिद्धान्ते तादृशं साक्षात्काररूपं ज्ञानं मोक्षदशायां यावत्कालं फलरूपतया निरतिशयप्रियरूपमनुवर्तते । अयं ससम्बोधमुक्तिवादः ॥

साङ्ख्यादीनां प्रपञ्चस्य सत्यतावादिनां, सौगतादीनां शून्यतावा-दिनां, मिथ्यात्ववादिनामौपनिषदानां च मोक्षसाधनं ज्ञानं सम्बन्धं वा संबन्धिनं वा सर्वं विनाश्य स्वयं विनश्यतीत्येष निस्सम्बोधमुक्तिवाद इति विशेषोऽवगन्तव्यः ॥

### द्वैतैकत्ववादः.

सोऽयं द्वैतैकत्ववादः भर्तृप्रपञ्च भर्तृमित्र ब्रह्मदत्तादिभिः प्रव-र्तितः बृहदारण्यकभाष्ये शाङ्करेऽनूदितो दृश्यते । तथाहि (५-८-१२)—

"अत्र केचिदाचक्षते—परस्य महासमुद्रस्थानीयस्य ब्रह्मणोऽक्ष-रस्य अप्रचलितस्वरूपस्य ईषत्प्रचलितावस्था अन्तर्यामी । अत्यन्तप्रच-लितावस्था क्षेत्रज्ञः, यस्तं न वेदान्तर्यामिणम् । तथाऽन्याः पञ्चा-वस्थाः कल्पयन्ति । तथाचाष्टावस्थाः । (पिण्डो जातिः विराट् सूत्रं दैव-मित्येवं महाभूतसंस्थानलक्षणाः पञ्चावस्थाः, अव्याकृतं साक्षी क्षेत्रज्ञ-श्चेत्यष्टावस्थाः) अन्ये त्वक्षरस्य शक्तय एता इति वदन्ति अनन्त-शक्तिमदक्षरमिति । अन्ये त्वक्षरस्य विकारा इति वदन्ति । एता असत्याः सर्वाः कल्पनाः, भेदस्तूपाधिकृत इति ब्रूमः" इति ॥

सोऽयं वादः जरन्मायावाद इत्यनूद्यते नवीनैः । एतेषु जरन्मायावादिषु केचित् ध्याननियोगवादिनः । केचित्तु निष्प्रपञ्चीकरणनियोगवादिन इति विभागोऽपि श्रीभाष्ये समन्वयाधिकरणे परिदृश्यते । विस्तरस्तु तत्रैवानुसंधेयः ॥

भास्करभाष्ये तु (८३) "अन्ये प्राहुः—अपहतपाप्मादिरूपमात्मतत्त्वं कर्तव्यं श्रवणमननादिनियोगानुष्ठानेन । स च नियोगः प्रपञ्चप्रविलापनमापादयतीति श्रुतिसिद्धमेवेति । तदपेशलम्—यदुत्प्रेक्षितमात्मना तत्सर्वं नियोगमस्तके अध्यारोप्य व्यवह्रियते" इति ॥

अपरेऽपि भास्करभाष्ये एते विशेषाः—

एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते ।
नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥

यत्प्रमाणैः परिच्छिन्नमविरुद्धं हि तत्तथा ।
वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥

प्रतीयते चेदुभयं विरोधः कोऽयमुच्यते ।
विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥

एकरूपं प्रतीतत्वात् द्विरूपं तत्तथेष्यताम् ।
एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥ १६ पु. ॥

अतो भिन्नाभिन्नं ब्रह्मेति स्थितम् । अपि च—

कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा ॥

इति । भामत्यां समन्वयनये श्लोकोऽयमुदाहृतः । तथा—

नरभेदात् न हि ज्ञेया वस्तुनस्सदसत्यता ।
न हि रूपमनन्धानां सत्यमन्धेष्वसद्भवेत् ॥

न हि द्विचन्द्रः प्रागासीत् पश्चान्नास्तीति युज्यते ।
द्विचन्द्रज्ञानतुल्यत्वं प्रत्यक्षादेस्त्वयोच्यते ॥ १७ ॥ इत्यादि ॥

तथा—(७५) "जीवानां परस्परं भेद एव। परमात्मना चाभेदः फेनतरङ्गादीनामिव । तेन च बन्धमोक्षव्यवस्था" इति ॥

तथा (१६२) "तत्त्वमसीति श्रुतेः भिन्नाभिन्नो जीवः । स्वाभाविकं नित्यसिद्धमभिन्नं रूपम् । इतरदौपाधिकं प्रवाहनित्यमिति विवेकः" इति ॥

तथा—(३९) "तस्मात्तदंशभूतस्य अविद्याकामकर्मयोगात्संसारित्वम्" इति ॥

तथा—(१०५) "तदनन्यत्वमित्यत्र च अस्माभिरुक्तः शक्तिविक्षेपलक्षणः परिणाम इति । ईश्वरस्य द्वे शक्ती भवतः भोग्यशक्तिरेका भोक्तृशक्तिरपरा । भोग्यशक्तिश्च सा आकाशादिरूपेण परिणामोपपत्तेः । भोक्तृशक्तिस्सा चेतना जीवरूपेणावतिष्ठते" इति ॥

तथा—(१६०) "एकमेव वस्तु, न धर्मधर्मिभेदेन स्वरूपभेदः न हि गुणरहितं द्रव्यमस्ति। द्रव्यरहितो वा गुण इति स्थितिः" इति ॥

तथा (१६६)—

ब्रह्माप्येति प्रपञ्चोऽयं रूपं हित्वा तु वैकृतम् ।
जहाति कठिनावस्थां जलधौ लवणं यथा ॥

चेतने चेतनं क्षिप्तमभेदाच्चेतनो भवेत् ।
रुमायां वस्तु विन्यस्तं तत्सर्वं लवणं भवेत् ॥ इति ।

अपि च शब्दैकसमधिगम्ये वस्तुनि यथाशब्दं प्रत्येतव्यमिति सर्वो भारः श्रुतिशिरसि समारोप्यतेऽस्मिन् पक्षे । अत्रैव भाष्ये (२२१)

" न पुरुषकल्पनामनुरुध्यामहे । किं तु निर्दोषश्रुतिनिर्गतां वाणीमुदीक्षामहे " इत्यस्ति ॥

तथा—(२०८) " कर्म च केन द्वारेण मोक्षं प्रत्युपकरोतीति-चेत् को जानीयात् मातृतुल्या हि श्रुतिराह " इति ॥

तथा—(१४०) " निरवयवस्य कथमंशः? आगमादवगमात् " इति ॥

तथा—(२०७) " तमेतं वेदानुवचनेनेति श्रुतेः ज्ञानं प्रत्यपवर्गसिद्धौ यज्ञादयः तृतीयया विभक्त्याऽङ्गत्वेन प्रयाजादिवद्विधीयन्ते " इति ॥

तथा—(२४७) " मुक्तानां सर्वशक्तित्वात् सत्यसंकल्पत्वात् निर्माणशरीरेषु भोगसंपत्तिः तत्साधनभूतानि च मनांसि प्रादुर्भवान्ति । दर्शयति च शास्त्रम्—स एकधा भवतीत्यादि " इति ॥ अलं प्रसक्तानुप्रसक्त्या ॥

इदमेव भेदाभेददर्शनं प्राचीनैः बहुधा निरूपितमित्यवधारयामः । यथा कात्यायनकारिका सर्वार्थसिद्ध्युदाहृता (३--२८)—

**ईश्वराव्याकृतप्राणैर्विराट् सिन्धुरिवोर्मिभिः ।**
**यत्प्रनृत्यदिवाभाति तस्मै सद्ब्रह्मणे नमः ॥** इति ।

तथा—(३-३०) " अन्ये तु भेदाभेदवादिन आहुः निष्कलचिदानन्दजलधिः अपारस्वानन्दानुभवप्रीतिजनितनानाविकार एव स्वल्पमंशं जडरूपं संकल्प्य तमेवाजडेन चिदंशान्तरेण संयोज्यानन्तविचित्रसुखदुःखानुभवभागिनं कृत्वा तद्दर्शनेन प्रीयते " इति ॥

एतादृशमेव पन्थानमनतिभिदुरमाश्रित्य यादवप्रकाशाचार्यादयोऽपि भाष्याण्यभाषन्त । श्रीमान् रामानुजाचार्योऽप्यस्यैव मार्गस्य अदूरविप्रकर्षेण प्रक्रियाभेदेन प्रवर्तक इति स्पष्टमग्रे भविष्यति ॥

ब्रह्मसत्यजगन्मिथ्यासिद्धान्तविशुशुत्सया ।
जगत्सत्यत्वसिद्धान्ते सप्त वादा निरूपिताः ॥

लक्ष्मीपुरंश्रीनिवासविपश्चिच्चक्रवर्तिना ।
महामहोपाध्यायेन रत्नेन च विपश्चिताम् ॥

इति दर्शनोदये सत्यतापरिच्छेदो द्वितीयः.

———

# प्रपञ्चमिथ्यात्वदर्शनम्.

अद्वैतवादः.

**अथ प्रपञ्चमिथ्यात्वासिद्धान्तः बहुविश्रुतः ।**
**तत्स्वरूपं सुविशदं प्रपञ्चेन विचिन्त्यते ॥**

एकत्ववादो नामैकमेव तत्त्वम्, कार्यं कारणं चैकमेव इत्यभिप्रायसारः । यथा साङ्ख्यसिद्धान्तः । अद्वैतवादस्तु न तादृशः । अपितु द्वैतलक्षणभेदस्य निषेधमात्ररूपः ऐक्यानभ्युपगमात् । सोऽयं वादः अनन्यत्वं तादात्म्यमित्यादिपदैर्व्यवह्रियते । अत एव "तस्मात्कारणस्यात्मभूता शक्तिः । शक्तेरात्मभूतं कार्यम् । अतस्तादात्म्यमुपगन्तव्यम्" इति (२-१-१८) शारीरके भाषितम् । अत्र तादात्म्यं न स्वरूपैक्यं, नापि भेदाभेदः, अपितु अनन्यत्वम् । बृहदारण्यकभाष्येऽप्येवं निर्णयो दृश्यते—(४–१–२०) "आत्मनो याथात्म्यं क्रियाकारकफलभेदादिशून्यमत्यन्तमद्वैतम्" इति ॥

तथा—अनन्यत्वसूत्रभामती "न खलु अनन्यत्वमित्यभेदं ब्रूमः किं तु भेदं व्यासेधामः । ततश्च नाभेदाश्रयदोषप्रसंगः । किंत्वभेदं व्यासेधद्भिः वैशेषिकादिभिरस्मासु साहायकमेवाचरितं भवति" इति स्पष्टमुच्यते ॥

न्यायमकरन्देऽपि (३०२ पु.) "न हि वयं भेदप्रपञ्चस्य तत्त्वतश्चिदात्माभेदं वर्णयामः । किंतु न भिन्नो नाप्यभिन्नः नापि भिन्नाभिन्नः । अनाद्यविद्याविलसितम्" इति ॥

वेदान्ताचार्यैश्च सर्वार्थसिद्धौ (४-२२) बाह्याद्वैतं भिद्यमानापह्नवरूपम् । वेदान्ताद्वैतं भेदापह्नवरूपमित्यभिहितम् ॥

तथाच प्रपञ्चविषये अद्वैतवाद इत्येव व्यवहारस्समुचितः । जीव-ब्रह्मविषये तु एकत्ववाद इति व्यक्तमेव । अत एवैवमभाषि—"आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते" इत्यध्यासभाष्यान्ते ॥

अतएव आरम्भणाधिकरणे द्वैतैकत्वसिद्धान्तदूषणावसरे शारीरकभाष्ये—"नन्वेकत्वैकान्तवादिनां नानात्वाभावात्" इति परप्रक्रियासूचनायैकत्वैकान्तपदमेवोपात्तम्, नाद्वैतपदमिति रहस्यम् । सूत्रकृताऽप्याचार्यबादरायणेन अभेदादिपदमपहाय अनन्यत्वपदमेव प्रयुक्तमित्यपि वदन्ति ॥

एतादृशोऽद्वैतवादलक्षणोऽनन्यत्ववादः अपूर्वः विजातीयः परिष्कार इति न मन्तु मर्हन्ति सन्तः, यतः व्याकरणाचार्यसंप्रदायप्रवचनकर्तृभिः वररुच्याचार्यैः अनन्यत्ववादोऽनेकान्तवाद एव भवति इति निरूपितमस्ति । एवं निरूपणस्य प्रसक्त्यै "अनन्यत्ववादः एकत्ववादो वा भेदनिषेधमात्रवादो वा एकान्तलक्षण एव स्यात् इति केषांचिदभिप्रायः प्रागासीदिति निर्णीयते । तथाहि सति एतादृशः अनन्यत्ववादः संसारेऽस्मिन् प्रचलितपूर्व इति समुल्लिख्यते ॥

तथाहि—व्याकरणमहाभाष्ये प्रथमपादे नवमाह्निके (२३९) "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्, अनन्यत्वाच्च । अनेकान्तो ह्यनन्यत्वकरः" इति वार्तिकं प्रवृत्तमस्ति । तस्येदं पातञ्जलं महाभाष्यम्—"सवर्णेण्ग्रहणमपरिभाष्यम् । कुतः आकृतिग्रहणात् अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिरुवर्णाकृतिः । ननु चान्याऽऽकृतिरकारस्यान्याऽऽकृतिराकारस्य च? अनन्यत्वात् । अनन्याऽऽकृतिरकारस्याऽकारस्य च । अनेकान्तो ह्यनन्यत्वकरः । यो ह्यनेकान्तेन भेदः नासावन्यत्वं करोति । तद्यथा—न यो गोश्च

शोश्च भेधः सोऽन्यत्वं न करोति । यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति" इति ॥

अत्रात्यन्तभेद एवान्यतापादक इत्युक्तं भवति । अन्यतानिषेधस्तु अनन्यत्वलक्षणः अनेकान्तवाद एवेत्यभिप्रायः । एवं लेखनं तुरीय-कोटिलक्षणमद्वैतवादमपि प्रतिरुणद्धीति पूर्वपक्षरूपया प्रतियोगिनिरूपण दृष्टया समुत्प्रेक्ष्यते । एकान्तवादे तु अभेदानन्यत्वयोः न कश्चिद्विशेष इति भेदैकान्तवादस्य प्रतियोगितया समर्पणं न सहृदयहृदयङ्गमं भवतीति विमृशन्ति विद्वांसः ॥

एवं तत्त्वान्यत्वाभ्यां दुर्निरूपत्वलक्षणा युक्तिः शून्यवादिभिः वस्तुनः स्वरूपेणापलापे ब्रह्मास्त्रीकृता । सैषैव युक्तिः अपलापमसहमानैः विलक्षणमार्गावलम्बनाय हेतूकृतेत्युत्तरत्र विस्तरः ॥

## विवर्तवादः.

प्राचीनप्रबन्धेषु परामृश्यमानेषु विवर्तपदं परिणामपरं, विवर्त-परिणामपदयोः पर्यायता चेत्यवगम्यते । यथा शारीरकभाष्ये—रचनानुप-पंत्तिसूत्रे "प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुं स्वभावभेदेनैव विचित्रेण विकारात्मना विवर्तते" इति परिणामवादिसांख्यसमयानु-वादसमये विवर्तपदं प्रयुक्तमस्ति ॥

बोधिचर्यावतारेऽपि साङ्ख्यमतानुवादे—(५६२ पु.) "एवं किल प्रधानात् कार्यरूपेण जगद्विवर्तः प्रवर्तते" इत्यस्ति ॥

एवं तत्रैव औपनिषदमतोपन्याससमये—(४'१५) "उपनिष-द्वादिनस्तु समस्तप्राणिसन्तानान्तर्गतमेकमेव व्यापि नित्यं च ज्ञानमि-च्छन्ति । तद्विवर्तरूपतया सकलमिदं क्षितिजलपवनहुताशनादिकं

जगदवभासते । तत्स्वभाव एव चात्मा । न बाह्यं किमप्यवयविपर-माण्वादिकं ग्राह्यं प्रमाणसिद्धमस्ति । आह च—

**नित्यो ज्ञानविवर्तोऽयं क्षितितेजोजलादिकः ।**
**आत्मातदात्मकश्चेति सङ्गिरन्तेऽपरे पुनः ॥**

**ग्राह्यलक्षणसंयुक्तं न किंचिदिह विद्यते ।**
**विज्ञानपरिणामोऽयं तस्मात्सर्वं परीक्ष्यते ॥**

इति । अत्र सर्वं विज्ञानलक्षणात्मपरिणामः । स एव ज्ञानविवर्त इत्युच्यते । स्वतन्त्रं किमपि वस्तु नास्तीति ग्राह्यलक्षणेत्यादिनो-च्यते ॥

एष एव खलु प्राचीनो वेदान्तसिद्धान्तः सल्लक्षणब्रह्मपरिणाम-प्रपञ्च इति । अत एव हि भर्तृप्रपञ्चादिभिः ब्रह्मैवाव्याकृताद्यष्टावस्था-पत्त्या प्रपञ्चो भवतीत्यभिधीयते । तत्र हि सिद्धान्ते भ्रमविषयीभूतं रज्जु-सर्पादिकमपि तदानींतनः कश्चित्पारमार्थिकः दोषघटितसामग्रीनिबन्धनः परिणामविशेष इति तन्मार्गगामिनि भास्करभाष्ये विलक्षणसत्ख्यातिनि रूपणेनावधार्यते । दर्पणादिषु मुखादिप्रतिबिम्बमपि तात्कालिकः परि-णाम इत्येव ते प्रतिपेदिरे । अयं प्रतिबिम्बोदयसिद्धान्तः कुमारिलेन श्लोकवार्तिकेऽप्यनूद्य निराकृतोऽस्ति ॥

ततश्च विवर्तपदं परिणामपदं च पर्यायभूतं परमार्थभूतानेकवस्तु प्रतिपादकमिति व्यतिकरेण प्रयोगात् प्राचीनोऽयमौपनिषदः सर्वं सदिति वादः साङ्ख्यसिद्धान्तानुयायी ॥

तस्य चैतस्य वादस्य प्रतिपक्षभूतो वादः सर्वमसदिति वादः । असल्लक्षणाभावात्मकशून्योपादानवादः । तस्मिन् हि वादे विवर्तपदं परिणामपदं च भ्रान्तिसिद्धतुच्छरूपवस्तुपरमित्येव तेषां व्युत्पत्तिः । रज्जु-

सर्पशुक्तिरूप्यप्रतिबिम्बकृत्रिमादिशब्दजातं सर्वं तुच्छलक्षणनिरुपाधिक-शून्यपरमित्येव तेषां व्यवहारः । प्रपञ्चोऽस्य प्रागेव कृतः ॥

विवर्तवादपरिणामवादौ मिथो विलक्षणौ रुचिभेदेन प्राचीनैः प्रथमैः विद्वद्भिः वैयाकरणैः परिगृहीतौ । तावेतौ वादौ सौगतवासनया वा साङ्ख्यानुयायिवेदान्तवासनया वा तेषामागताविति शक्यते तर्कयितुम् । यद्वा सर्वाभिप्रायानादितावादिनामस्माकं किमनया चिन्तया ॥

तथा हि—(वाक्य. २४७) प्रतिभावाक्यार्थवादिनः वार्ताक्षौदम्बरायणादयः । तेषां शब्दार्थासंस्पर्शवादोऽभिमतः शब्दः अर्थः सम्बन्धश्च कल्पितः विकल्पः इति तेषामभिप्रायः । तदुच्यते—

**विकल्पयोनयश्शब्दाः विकल्पाः शब्दयोनयः ।**
**कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यमी ॥ इति ।**

व्यवहारस्तु लोके प्रातिभः वैज्ञानिकः सांवृत इति ते वदन्ति । अत एवैतान् शाब्दिकसौगता इति सर्वार्थसिद्ध्यदौ वैदिका व्यवहरन्ति । शाबरे भाष्ये सम्बन्धाक्षेपवादे वाक्यार्थवादे च एतेषां मतं सूचितमस्ति ॥

सोऽयमौदुम्बरायणः यास्केनापि निरुक्ते निरुक्तग्रन्थानारम्भ्यत्वशङ्काकर्तृत्वेन समुल्लिखितः । अयमतस्सर्वशून्यवादी । तस्य प्रतिपक्षतयाऽवस्थितश्शाकटायनः स्फोटवादी । शब्दतत्त्वमात्रस्य पारमार्थ्यमयमङ्गीकरोति । तन्मतमाश्रित्य औदुम्बरायणसिद्धान्तं निराकृत्य निरुक्तग्रन्थारम्भं समर्थयति यास्कः, शाकटायनमपि प्रमाणत्वेन समुल्लिखति । ततश्च वैयाकरणाः प्रथमे विद्वांसः सर्वशून्यवादिनो वार्ताक्षौदुम्बरायणादीन् स्फोटवादेन निराचक्रुर्यथा वेदान्तिनो ब्रह्मवादेन शून्यवादिनो माध्यमिकादीन् ॥

वार्तिककृता वररुचिनाऽपि सर्वानित्यतावादमूलं शब्दार्थसंस्पर्श-वादलक्षणं प्रतिभावादं शब्दशास्त्रानारम्भशङ्कामूलभूतं निराकर्तुं "सिद्धे शब्दार्थसम्बन्धे" इति वार्तिकं प्रणीतम् । तदेतद्वार्तिकं "शब्दे अर्थे सम्बन्धे च नित्ये" इति पतञ्जलिनाऽपि महाभाष्ये व्याख्यातम् । अमुमेवार्थं भर्तृहरिः वाक्यपद्यामेवं संदृब्धवान्—

**नित्याश्शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः ।**
**सूत्राणां सानुतन्त्राणां भाष्याणां च प्रणेतृभिः ॥ इति ॥१–२३॥**

जैमिन्यादयोऽपि वेदव्याख्यानरूपपूर्वमीमांसाशास्त्रानारम्भ्यत्व-शङ्काहेतुभूतप्रतिभावादाद्यपनोदनायैव एवमसूत्रयन् "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्यादि । तत्र हि वर्णा एव कूटस्थनित्याः अकारादयः शब्दः । आकृतिरेव गोत्वादिरर्थः । सम्बन्धस्तु स्वाभाविक इति औदुम्बरायणमतं शून्यवादं शाकटायनमतं स्फोटवादं च निराकृतवन्तः ॥

एष एव हि स्फोटवादः विवर्तवादरूपः परिणामविलक्षणः वाक्यपद्यारम्भे वैयाकरणदर्शनप्रवचनकर्त्रा भर्तृहरिणा समाश्रितः प्रतिज्ञातश्च—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ इति ॥**

स च भर्तृहरिः चन्द्राचार्यशिष्यस्य वसुरातस्य शिष्यः । एतेषां सम्प्रदायस्त्वेवं वाक्यपद्यामवगम्यते (२–४८४)

**प्रायेण संक्षेपरुचीन् अल्पविद्यापरिग्रहान् ।**
**संप्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते ॥**
**कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।**
**सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥**

**अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ।**
**तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः ॥**
**बैजिसौभवहर्यक्षैः शुष्कतर्कानुसारिभिः ।**
**आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥**
**यः पतञ्जलिशिष्येभ्यः भ्रष्टो व्याकरणागमः ।**
**कालेन स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥**
**पर्वतादागमं लब्ध्वा भाष्यबीजानुसारिभिः ।**
**स नीतो बहुशाखत्वं चन्द्राचार्यादिभिः पुनः ॥**
**न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।**
**प्रणीतो गुरुणाऽस्माकमयमागमसंग्रहः ॥**

इति । अत्र संग्रहो नाम व्याडिना प्रणीतः संग्रहनामको ग्रन्थः । तमनुसृत्यैव पतञ्जलिः महाभाष्यं प्रणीतवान् । तथा संग्रहनामकं व्याकरणागममनुसृत्य चन्द्राचार्यवसुरातादिभिः पुनस्संग्रहः कृतः । तैस्य-संग्रहः वाक्यपदीनामा प्रबन्ध इत्यर्थः ॥ इति ॥

अस्मिंश्च व्याकरणदर्शने शब्दात्मकस्फोटपर्यायं वा अर्थात्मक-भावलक्षणसत्तापर्यायं वा ज्ञानात्मकचित्पर्यायं वा ब्रह्म प्रपञ्चस्य मूल-कारणमिति मतभेदो विज्ञायते । तस्य च ब्रह्मणः कारणत्वं परिणाम-लक्षणविकाराश्रयत्वरूपमिति वार्ष्यायणिसिद्धान्तः । तमेतं सिद्धान्तं वार्ष्यायणिनामसंकीर्तनपूर्वकं यास्क एव निरुक्तप्रारम्भे षड्भावविकार-निरूपणेन निरूपितवान् । सोऽयं परिणामवादः । विवर्तवादस्तु भर्तृहारिणा स्वीकृतः । प्रत्यासापरपर्यायाध्यासरूपाविद्यावादः औदुम्बरायणसम्मतः ॥

अत एव विवर्तवादस्य वैयाकरणाः प्रथमप्रवर्तका इति सूच-यितुं संक्षेपशारीकारम्भे सर्वज्ञात्ममुनिरित्थं स्तौति—

**औत्पत्तिकी शक्तिरशेषवस्तु**
**प्रकाशने कार्यवशेन यस्याः ।**

**विज्ञायते विश्वविवर्तहेतोः**
**नमामि तां वाचमचिन्त्यरूपाम् ॥ इति ॥**

मतभेदेन त्रिविधं वैयाकरणदर्शनं स्फोटसिद्ध्यादिप्रबन्धप्रणेत्रा मण्डनमिश्रेण विधिविवेकनामके प्रबन्धे समुल्लिखितं पश्यामः । तथाहि—(२८७ पु) "एकस्य शब्दात्मनः प्रत्यासात्परिणामाद्विवर्तात्" इति ॥

अत्रेत्थं वाचस्पतिमिश्रीया न्यायकणिकाख्या व्याख्या "प्रत्यासः अध्यासः। यथा–स्वच्छधवले लाक्षारसावसेकतिरस्कृतधवलिम्नि स्थवीयसि स्फटिकमणौ तनीयस्तया लाक्षालक्षणद्रव्याग्रहणात् लाक्षागुणारोपेण अरुणः स्फटिकमणिरिति मतिरध्यासः । तथा नानापदार्थेषु तिरस्कृतभेदेषु तस्य स्फोटात्मनः तात्त्विकमेकत्वमारोप्य एको वाक्यार्थस्संसर्गात्मेति । समूहिषु च किंशुकादिषु तिरस्कृतभेदेषु वनमिति वा समूह इति वा पदस्य तात्त्विकमेकत्वमारोप्य एकत्वबुद्धिः । एवं शशविषाणादिषु असद्भूतेषु शशविषाणमित्यादिपदगतसत्त्वाध्यारोपेण प्रतीतिरिति प्रत्यासार्थः ॥

परिणामोऽपि यथा—एकं सुवर्णतत्त्वं कटकमकुटकर्णिकाङ्गुलीयादिभेदेन विपरिणमते तथा शब्दतत्त्वमपि नानापदार्थरूपेणेति । एतस्मिंश्च दर्शने भेदानां कथंचित् पदतत्त्वात् भिन्नानां पारमार्थिकत्वम् । एवं स्फुरणमात्रेण चास्य पक्षस्योपन्यासः ॥

विवर्तस्तु यथा—मुखमेकं अनेकेषु मणिकृपाणदर्पणादिषु सद्भूतेषु विवर्तमानं तच्छायापत्तौ विभिन्नवर्णपरिमाणदेशं चकास्ति । न तु तत्र तत्त्वतो भिन्नवर्णपरिणामदेशानि मुखानि सन्ति । एवमनाद्यविद्यावासनोपघातवशात् पदतत्त्वमेकं अनेकपदार्थात्मना प्रथते । नतु पदार्थाः ततो विभिद्यमानात्मानः परमार्थतस्सन्तीति । एते प्रत्यास-

परिणाम–विवर्ताः मतभेदेन मन्तव्या इति" इति। अत्र विभिद्यमानात्मान इति पदेन भेदनिषेध एव विवर्त इति स्फुटमुक्तं भवति॥

एवं भेदमवधार्यैव न्यायवार्तिकतात्पर्यटीकायां (४-१-१९= ४१७ पु) "मा भूदयं प्रपञ्चश्शून्योपादानः। अपितु ब्रह्मोपादानो भविष्यति। ब्रह्मैव हि प्रपञ्चरूपेण परिणमते मृत्तिकेव घटशरावादञ्चने-प्रभृतिभावेन। नचैवं नित्यत्वव्याघातः, परिणामेऽपि तत्त्वाविघातात्, तल्लक्षणत्वाच्च नित्यतायाः। यदाह—(महाभाष्यं १-१-१) यस्मिन् तत्त्वं न विहन्यते तदपि नित्यमित्येकं दर्शनम्" इति। अपरं च— ब्रह्मैवानिर्वचनीयानाद्यविद्योपधानात् नामरूपप्रपञ्चभेदेन विवर्तते मुखमिव एकमनेकमणिकृपाणादिभेदात् नैकविधप्रतिबिम्बभेदेन" इति॥

अनेन संदर्भेण विवर्तवादपरिणामवादयोर्भेद उक्तः। भामत्यां तु—परिणामशब्दोऽपि विवर्तपर एवेति सिद्धान्तितः। (१-४-२७) ततश्च वाचस्पतिमिश्राणां मते अद्वैते अविद्यावादमायावादभ्रान्तिवाद-विवर्तवादसंवृतिवादानमैक्याभिप्रायेण विवर्तवाद मनिर्वचनीयापरपर्यायं विक्षेपशक्तिविलासं प्रधानीकृत्य व्यवहारः प्रवर्तत इतिनिर्णयः। यतश्च तैः भामत्यामादावन्ते चैवमभिहितम्—

अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं
नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम्॥ इति॥

यन्न्यायकणिकातत्त्वसमीक्षातत्त्वबिन्दुभिः।
यन्न्याययोगसाङ्ख्यानां वेदान्तानां निबन्धनैः॥
समचैषं महत्पुण्यं तत्फलं पुष्कलं मया।
समर्पितमथैतेन प्रीयतां परमेश्वरः॥ इति॥

एवं च प्राचीनो विवर्तवादः विश्वापह्नवलक्षणः । नवीनः पुनः अनिर्वचनीयद्वारेण तादृश एवेति विवेकोऽवगन्तव्यः ॥

विवरणग्रन्थे तु विवर्तपरिणामविवेकः एवं दृश्यते–(२१२ पु) "एकस्य तत्त्वादप्रच्युतस्य पूर्वविपरीतासत्यानेकरूपावभासः विवर्तः । एकस्य पूर्वरूपपरित्यागेन सत्यरूपान्तरापत्तिः परिणामः" इति ॥

भास्करभाष्ये तु परिणामपदार्थ एवं निरूपितः (९६)—

**अप्रच्युतस्वभावस्य शक्तिविक्षेपलक्षणः ।**
**परिणामः यथा तन्तुनाभस्य पटतन्तुवत् ॥** इति ॥

अत्र पूर्वरूपस्य परित्यागो नास्तीति गम्यते । एष एव प्राचीनः परिणामवादः भर्तृप्रपञ्चादिसम्मतस्स्यात् ॥

एवं च विवर्तवादो नाम निरन्वयोदयविनाशार्हवस्तुवादः । परिणामवादस्तु—सान्वयोदयविनाशार्हवस्तुवादः । सान्वयनिरन्वयविवेकस्त्वयम्, सर्वार्थसिद्धौ (१-३१)—

**स निरन्वयनाशस्स्यात् धर्मो धर्म्यपि वा पुनः ।**
**पूर्वसङ्घातभावो वा यद्भावे नानुवर्तते ॥**

**उत्पत्तिश्च तथाभूता निरन्वयसमुद्भवा ।**
**तावुभौ सर्वभावानां नियताविति सौगताः ॥** इति ॥

श्रीशंकराचार्यैस्तु परिणामवादः अपरमार्थभूतः व्यवहारव्यवस्थया सूत्रकृताऽऽचार्यबादरायणेनैव सूत्रितः । परमार्थावस्थया तु अद्वैतवादलक्षणोऽनन्यत्ववादः सूत्रित इति भाष्यते आरम्भणाधिकरणे । तमेतं भेदनिषेधलक्षणमनन्यत्ववादमेव विवर्तवाद इति वाचस्पतिमिश्रा निरूपयन्ति । तत्राचार्यस्य कारणदृष्टिः प्रधानभूता । मिश्रस्य तु कार्यदृष्टिः प्रधानभूता इति विवेकः ॥

एवं च विवर्तवादः भेदनिषेधलक्षणः अनन्यतावादरूपः परिणाम-वादनिषेधवादयोः मध्यमावस्थारूपः अधिकारिभेदतात्पर्येण निरूपित इति संक्षेपशारीरिके स्पष्टमवगम्यते । तथा हि—

आरम्भवादः कणभक्षपक्षः
  संघातवादस्तु भदन्तपक्षः ।
सांख्यादिपक्षः परिणामवादः
  वेदान्तवादस्तु विवर्तपक्षः ॥ २-६३ ॥

विकारवादं कपिलादिपक्षं
  उपेत्यवादेन तु सूत्रकारः ।
श्रुतिश्च संजल्पति पूर्वभूमौ
  स्थिता विवर्तप्रतिपादनाय ॥

अभेदिनस्सावयवस्य सत्य-
  विचित्ररूपान्तरदर्शकत्वम् ।
वदन्ति धीराः परिणाममस्या
  वसुन्धराया इव सस्यसृष्टिम् ॥

अभेदिनो निर्विकृतेरनेक-
  मृषास्वरूपान्तरदर्शकत्वम् ।
विवर्तशब्दार्थ इह प्रसिद्धः
  तरङ्गभेदादिव चन्द्रभेदः ॥

आरोपदृष्टिरुदिता परिणामदृष्टिः
  द्वैतोपशान्तिरपवादकदृष्टिरन्या ।
मध्ये विवर्तविषया द्वयमिश्रदृष्टिः
  व्यामिश्रदृष्टिरधरोत्तरभूमिभावात् ॥ ८२ ॥

कृपणधीः परिणाममपेक्षते
  क्षपितकल्मषधीस्तु विवर्तनाम् ।
स्थिरमतिः पुरुषः पुनरीक्षते
  व्यपगताद्वितयं परमं पदम् ॥ ८९ ॥

इति । एतेन सर्वेषां शास्त्रकाराणां कथंचित्समन्वये तात्पर्यमित्यवगम्यते । तत्र प्राधान्याप्राधान्यसूचने परं दृष्टिः । अत एव गौडपादाचार्यस्योत्तमाधिकारिकमुख्यपक्षनिरूपण एव तात्पर्यमित्यवधार्यते ॥

विवरणादिप्रबन्धपरामर्शे—मायाविद्यादिपदवाच्यमावरणशक्तिविलासमज्ञानं प्रधानीकृत्य विचारः प्रवृत्त इति विज्ञायते । अत्र सत्तात्रैविध्यं व्यवहारसौकर्याय निरूपितम् । अत्र व्यावहारिकं सत्त्वं अर्थक्रियाकारित्वलक्षणम् । तेन च प्रपञ्चस्यासत्त्वलक्षणशून्यतावादात् महद्वैलक्षण्यमभिप्रेतं भवति ॥

ततः इष्टसिद्धिन्यायमकरन्दखण्डनखाद्यादिप्रबन्धेषु युक्तिप्राधान्येन अनिर्वचनीयवाद एव बहुधा विचार्य प्रतिष्ठापितः । ततः परमपि अद्वैतसिद्धिब्रह्मानन्दीयादिप्रबन्धेषु अनिर्वचनीयत्वलक्षणं मिथ्यात्वं कर्कशतर्कपरिष्कारैः समर्थितम् ॥

एवं प्रबन्धप्रणेतॄणां प्रयत्नः युक्त एवेत्युत्पश्यामः, यतः भाष्यकारैरेवमुच्यते—"दृष्टसामान्येनादृष्टमर्थं समर्थयन्ती युक्तिरनुभवस्य सन्निकृष्यते । विप्रकृष्यते तु श्रुतिरैतिह्यमात्रेण स्वार्थाभिधानात् । अनुभवावसानं च ब्रह्मविज्ञानमविद्याया निवर्तकं मोक्षसाधनं च दृष्टफलतया इष्यते" इति ॥ (२–१–४)

अनेन भाष्येण पूर्वपक्षगतेनापि युक्तेः श्रुत्यपेक्षयाऽभ्यर्हितत्वमुक्तं विज्ञायते । श्रुतेरेव युक्त्यपेक्षया प्राधान्यं बहुवारमुक्तम् । एवं च विभागोऽत्रावधेयः—ब्रह्मस्वरूपं श्रुत्येकसमधिगम्यमित्यत्र न विवादः । प्रपञ्चमिथ्यात्वं ज्ञानैकनिवर्त्यत्वं ज्ञानस्यैव मोक्षहेतुत्वमित्यादिकं श्रुत्यपेक्षया युक्त्यैव प्रतिपाद्यमानं हृदयारूढं भवतीति युक्तेः प्राधान्यम् । तथाच ब्रह्म सत्यं जगन्मिथ्या इत्यंशद्वये द्वितीयो युक्त्यवलम्बनः । प्रथ-

मस्तु सत्यरूपब्रह्मलक्षणः श्रुत्यैकावलम्बन इति । तदुच्यते "तस्माच्छब्दमूलैवातीन्द्रिययाथात्म्योपलब्धिरिति" । इति ॥ (२-१-२७)

## असद्वादः

शास्त्रदीपिकायां तु सम्बन्धाक्षेपपरिहारे आत्मपरिणामवादनिरूपणप्रकरणे -- "ये च पुनः प्रपञ्चविषयाः असत्त्ववादा अविद्यावादा भ्रान्तिवादा मायावादाश्च । ते सर्वे प्रपञ्चस्यानित्यत्वादौपचारिकाः" इति लिखितमस्ति । तेन विज्ञायते प्रपञ्चविषये पृथगेवैते स्वतन्त्रा वादाः प्रबन्धभेदेन आसन्निति । अधुना पुनरद्वैतसिद्धान्तदृष्ट्या मीमांसायां कृतायामेतद्वादचतुष्टयमपि विश्वापवादाय परिष्कृतमित्यवधारयामः ॥

तत्राविद्यावादभ्रान्तिवादयोरैक्यं व्यक्तमेव अविद्याध्यासयोरभेदात् भ्रान्तिलक्षणाध्यासस्य अविद्याकार्यत्वाद्वा । मायावादोऽप्यविद्यामाययोरैक्ये मायाया अविद्यामूलत्वेऽपि वा भ्रान्तिवाद एवान्तर्भूतः । प्रपञ्चयते च पुरस्तात् ॥

असद्वादस्तु माध्यमिकसम्मतः भामत्यामुदाहृतः—

**इदं वस्तुबलायातं यद्वदन्ति विपश्चितः ।**
**यथायथाऽर्थाश्चिन्त्यन्ते विविच्यन्ते तथातथा ॥ इति ॥**

न क्वचिदपि पक्षे व्यवतिष्ठते इत्यर्थश्च प्रोक्तः । (२-२-३१) तथाच विचारासहत्ववाद एव असद्वाद इति फलति । अत एवोच्यते—

**पदार्थानां स्वतोरूपं न किंचिद्व्यवतिष्ठते ।**
**यथायथा निरूप्यन्ते विशीर्यन्ते तथातथा ॥ इति च ॥**

तथाच विचारासहत्वलक्षणमनिर्वचनीयत्वमेवासद्वादश्चेत् प्रपञ्चविषये सोऽप्यङ्गीकृत एव । पञ्चम्यां कोटौ विश्रान्तिरेवासद्वादश्चेत्तुरीयायां कोटौ विश्रान्तिरनिर्वचनीयवाद इति भिदा ॥

अथ पुनः—

**बुध्या विविच्यमानानां स्वभावो नावधार्यते ।**
**अतो निरभिलप्यास्ते निःस्वभावाश्च देशिताः ॥**

इत्यार्यलङ्कावतारादिषु दृश्यमानः निरुपाख्यनिरुपाधिकस्वभावाभावाद्य परपर्यायः तुच्छ एवासत्पदार्थश्चेत् कार्यदृष्ट्या प्रपञ्चविषये सोऽङ्गीकृत एव । तथाहि—प्रपञ्चे कार्यदृष्टिः कारणदृष्टिश्चेति द्वयी गतिरवधार्यते । कारणदृष्ट्या तत्त्वान्यत्वाभ्यां दुर्निरूपत्वम् । अतः कारणदृष्टिः कार्यस्य दुर्निरूपत्वे पर्यवस्यति परिशिनष्टि कारणम् । कार्यदृष्टिस्तु—"स्वरूपेणानुपाख्यत्वात्" इत्यारम्भणाधिकरणभाष्यात् "ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसानः" इति प्रकृतैतावत्वसूत्रभाष्याच्चाभाव एव पर्यवस्यति । तथा—"न ह्यात्मव्यतिरेकेण किंचिदस्त्यन्यत् । यद्यस्ति न तद्विदितं स्यात् । न त्वन्यदस्ति । आत्मैव तु सर्वम्" इति बृहदारण्यके भाषिततत्वाच्चाभावलक्षणो निषेध एव ॥

तथापि सौगतसम्मतोऽसत्पदार्थः निरधिकरणकनिष्प्रतियोगिकनिषेधलक्षणः । औपनिषदसम्मतस्तु सोपाधिकः । तदुच्यते मण्डनमिश्रेण ब्रह्मसिद्धौ—

**लब्धरूपे क्वचित्किंचित्ताद्दगेव निषिध्यते ।**
**विधानमन्तरेणातो न निषेधस्य संभवः ॥ इति ॥**

प्रपञ्चितं चैतत् प्रागेव सौगतसिद्धान्तोदयेऽभावनिरूपणे (२१) । प्रकृते साधिकरणको निषेध एव असत्पदार्थः । सौगतसम्मतासत्त्वानभ्युपगम एव तन्मतदूषणम् । स्वस्वोपलम्भ एव सर्वेषां प्रमाणम् ॥

इदमत्रावधेयम्—असद्वादः सामान्यनिषेधलक्षणः । अनिर्वचनीयवादः यावद्विशेषनिषेधलक्षण इत्यनयोरविशेषेऽपि भावपर्यवसायित्वाभावपर्यवसायित्वाभ्यां परकीयासत्त्ववादात् विशेषः सारार्थ इति ॥

अविद्यावादः.

अविद्यावादोऽपि त्रिविधो विज्ञायते । शैववैष्णवाद्यागमेषु परमेश्वरस्य द्वे शक्ती जडाजडात्मिके स्तः । तत्र जडशक्त्या वियदादिप्रपञ्चपरिणामः । अजडशक्त्या ब्रह्मादिस्तम्बपर्यन्तचेतनपरिणामः । तदेतत् शक्तिद्वयं ज्ञानशक्तिक्रियाशक्तिरूपमिति चेतनाचेतनरूपमिति परापरप्रकृतिरूपमित्येवंप्रकारैः व्यवहारैः व्यवहरन्ति बहुष्वागमादिषु प्रबन्धेषु सुधियः । एतदेवानूद्यते संक्षेपशारीरके (३-२२८)—

**चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते**
**सत्यैवास्य जडाऽपरा भगवतः शक्तिस्त्वविद्योच्यते ।**
**संसर्गाच्च मिथस्तयोर्भगवतश्शक्त्योर्जगज्जायतेऽ-**
**चिच्छक्त्या सविकारया भगवतश्चिच्छक्तिरुद्रिच्यते ॥**

इति । एवं प्रमाणेष्वनेकेषु सत्स्वपि सर्वशास्त्रसारभूतायां भगवद्गीतायां परिदृश्यमानं मानमेकमुपदर्शयामः—

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥**
**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥**

अत्र मे मदीया मच्छेषभूता प्रकृतिरित्यर्थः ॥

तत्र स्वतन्त्रां जडशक्तिमविद्यात्मिकां केवलमाश्रित्य चार्वाकाः भूतवादिन आसन् । विद्यारूपामजडशक्तिं केवलमाश्रित्य जीवपरिणामब्रह्मपरिणामवादिनो वेदान्तिनो वाऽऽसन् । वादिनो हैरण्यगर्भा वा सङ्ख्यायास्तु शक्तिद्वयं स्वतन्त्रमङ्गीकृत्य जगद्व्यवहारं निरवहन् । आगमिकास्तु परमेश्वरपरतन्त्रं शक्तिद्वयमिच्छन्तीत्ययमेको विचारः । ततश्चाविद्याशब्दः विद्याशब्दप्रति पक्षभूतः निरुक्त्या शिक्षया जडशक्तिपर इति कश्चिन्निष्कर्षः ॥

अजडशक्तिलक्षणायां चितिशक्तिरूपायां विद्यायामेव ख्याति-भ्रान्तिभेदेन द्वैविध्यमुपगम्य समीचीनसामग्र्या सम्पद्यमानां विद्यां दोषघटितसामग्र्या सम्पद्यमानामविद्यामाहुः—"इन्द्रियदोषात्संस्कार-दोषाच्चाविद्या। तद्दुष्टं ज्ञानम्। अदुष्टं विद्या" इति वैशेषिकाः (९-२-१०) सूत्रयन्ति। प्रत्यक्षलैङ्गिकस्मृत्यार्षभेदेन विद्यां संशयविप-र्ययस्वप्नानध्यवसायभेदेन चाविद्यां चतुर्धा विभजन्ते॥

न्यायसूत्रकारोऽपि "तेषां मोहः पापीयान् नामूढस्येतरोत्पत्तेः। विद्याविद्याद्वैविध्यात्संशयः" (४-१-६. ४-२-४) इत्यादिना सूत्रेण विद्याविद्ययोः स्वरूपमनुकीर्तयति। तत्र भाष्यमिदम्—"सदसतोरुप-लम्भात् विद्या द्विविधा। सदसतोरनुपलम्भादविद्याऽपि द्विविधा" इति। अत्राविद्याऽभावरूपेत्यापाततः प्रतीयते। तथाप्यनुपलम्भपदेन यथावदनुप-लम्भार्थविवक्षया नानुपपत्तिः॥

तथा प्रज्ञाकरेणापि (३४२) "अविद्या मोहः विपर्यास इति पर्यायाः। अविद्या हि असत्पदार्थस्वरूपारोपिका स्वभावदर्शनावरणा-त्मिका च सती संवृतिरुच्यते" इति पञ्चितम्। प्रायः पातञ्जलकौमा-रिलप्रभृतिभिरयं वैशेषिकनैयायिकादिसम्मत एव मार्गः बहुधा क्षुण्णः॥

न्यायमकरन्देऽपि (१०२) "स्वप्रत्ययासादिताद्दृष्टान्तसिद्ध-स्वभावभेदं विज्ञानमेव असतः प्रकाशनम्। तथाचास्यासत्प्रकाशन-शक्तिरेवाविद्येति गीयते" इति प्रागुक्त एवार्थः अनूदितः। अत्र स्व-प्रत्ययः स्वकारणमित्यर्थः॥

न्यायमञ्जर्यामपि—(२४) "यथोक्तं सांव्यवहारिकस्यैवेतत् प्रमाणस्य लक्षणमुक्तम्। वस्तुतस्तु—अनाद्यविद्यावासनारोपितग्राह्यग्रा-

हकादिभेदप्रपञ्चं ज्ञानमात्रमेवेदमिति किं प्राप्यते को वा प्रापयति" इति सौगताभिप्रायः सम्यगनूदितः ॥

एवमविद्यापदस्य मतभेदेन अनेकार्थत्वे सति कचित् अध्यास-भाष्ये भ्रमपरत्वं कचित्प्रपञ्चकारणप्रकरणे शक्तिपरत्वं कचिच्च विद्या-विनाश्यनिरूपणप्रकरणे अनिर्वचनीयपरत्वमित्येवं बहुधाऽभिप्रेत्याचार्येण प्रयुक्तमिदमविद्यापदम् । ततश्चाविद्यापदार्थः यथासन्दर्भं विनियोजित इत्यवधार्यते । अविद्यां कचिद्दोषस्थाने विनिवेश्य भ्रान्तिं तज्जन्यामि-त्यपि नवीनाः निरूपयन्ति । एवमविद्या आच्छादिका विक्षेपिका चेति विभज्यते । तत्र स्वरूपतः स्वभावतश्चेति केचिद्वदन्ति । आकारभेदा-दित्यन्ये । अवस्थाभेदादित्यपरे । शक्तिभेदादितीतरे । "अविद्या च संवृतिः विकल्पश्च सर्व एवायमविद्यास्वभावः" इति बाह्या आहुः । माण्डूक्यकारिका (४--१७) भाष्ये संवृतिपदमविद्यापरत्वेनाचार्यैः व्याख्यायते । विस्तरस्तु अत्रैव (४८) अविद्याविचारे द्रष्टव्यः । ततश्च सर्वविधस्यापि निरूपणस्य मूलभूतेयमविद्या कल्पवृक्षस्थानीयेत्यद्वैत-विदामभिप्रायः ॥

**तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।**
**अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥**

इति स्मृतिरपि विवरणे (२०७) समुदाहृता ॥

एवमविद्यापदं पुण्यपापलक्षणकर्मपरमिति वैष्णवादिपुराणेभ्योऽ-वगम्यते । उपनिषत्सु विद्यालक्षणब्रह्मज्ञानस्य सहकारितया वा विरोधि-तया वा यज्ञयागादिकर्मपरतया प्रयोगः अविद्यापदस्य दृश्यते । तस्मा-दविद्यावादो विद्यावादादपि महत्तर इत्यवधेयम् । "नह्येकविंशतिविध-

दुःखव्यतिरिक्ताऽविद्या नाम" इत्यात्मतत्त्वविवेके औदयनं वचनम् ॥ (१३०)

अत्र प्रसङ्गात् अविद्यावादवाक्यार्थविषयकं श्रीवात्स्यवरदाचार्य-प्रणीतं तत्त्वसारगतं श्रुतप्रकाशिकाचार्यादिभिरुदाहृतं पद्यमिदमवधार्य-ताम्—

**स्वरूपानादित्वस्वपरघटने दुर्घटनता**
**प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।**
**असत्याविद्याया गदितुमनवस्थापरिहृतौ**
**मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥ इति ॥**

कुमारिलेन तु सोऽयमविद्यावादः श्लोकवार्तिके सम्बन्धाक्षेपपरि-हारवादे एवमुल्लिखितोऽस्ति—

**स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः ।**
**स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥**
**अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते ।**
**स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति ॥**

इति । शास्त्रदीपिकायामविद्यादूषणमेवं कृतम्—"अथाविद्याकृतोऽयं प्रपञ्च इति । का पुनरियमविद्या ? किं भ्रान्तिः किं वा भ्रान्तिज्ञानकारणीभूतं वस्त्वन्तरम्? यदि भ्रान्तिः? सा कस्य? न ब्रह्मणः, तस्य स्वच्छवि-द्यारूपत्वात् । भ्रान्त्यसम्भवादेव च तत्कारणभूतं वस्त्वन्तरमप्यनुपपन्न-मेव" इति सम्बन्धाक्षेपपरिहारवादे ॥

तथा कुमारिलेन श्लोकवार्तिके मोक्षस्वरूपादिकमप्येवमुक्तम्—

**ज्ञानं मोक्षनिमित्तं च गम्यते नेन्द्रियादिना ।**
**आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् ॥**
**तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ।**
**न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥**

न च क्रियायाः कस्याश्चिदभावः फलमिष्यते ।
तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ॥
उत्तरप्रचयाभावाद्देहो नोत्पद्यते पुनः ।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥

इत्यादि ॥

शालिकनाथोऽपि तत्त्वालोकेऽमुमर्थमाह—"आत्यन्तिकस्तु देहोच्छेदः निश्शेषधर्माधर्मपरिक्षयनिबन्धनः मोक्षः" इति ॥

एतत्सर्वमभिप्रेत्य (१-१-४) शारीरकभाष्ये—"शरीरसम्बन्धस्य धर्माधर्मयोः तत्कृतत्वस्य च इतरेतराश्रयत्वात् अन्धपरम्परैवैषाऽनादित्वकल्पना" इति भाषितम्। परिणामलक्षणस्वभाववादेऽयं दोषः। अविद्यालक्षाध्यासवादे नायं दोष इत्यभिप्रायः। अत एव सर्वत्रोच्यते—"पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वात् मोक्षशास्त्रवैयर्थ्यम्" इति ॥

मायावादः.

सोऽयं मायावादः विज्ञानवादिनां योगाचाराणां सिद्धान्ते प्रपञ्चविषये अभ्युपगत इति प्रतीयते। तेन मायावादः बाह्यार्थशून्यवादश्चाभिन्न इति बाह्यानामाशयः। तत्र सर्वशून्यवादिनं प्रति बाह्यार्थशून्यवादी एवमाक्षिपति। यथा—"सर्वं जगत् मायात्मकतया स्वभावशून्यमुपगतं मध्यमकवादिभिः तदा मायास्वभावसंवृतिग्राहिणी बुद्धिरपि भवतां नास्ति बाह्यवत्, तथाच माया केनोपलभ्यते ग्राहकवस्तुसज्ज्ञानमन्तरेण। यस्य तु विज्ञानमेव परमार्थसत् ग्राह्यरूपतया भ्रान्तं तथा प्रतिभासते न तस्यायं दोषः। तदुच्यते—

यदा न भ्रान्तिरप्यस्ति माया केनोपलभ्यते ।

इति। अत्रोत्तरम्—

यदा मायैव ते नास्ति तदा किमुपलभ्यते ॥

इति । अयमर्थः—यदा मायैव ग्राह्यतया हस्त्याद्याकारप्रवृत्त्या ते विज्ञानवादिनो नास्ति विज्ञानमात्रं जगदभ्युपगच्छतः बहिरर्थाभावात्। तदा किमिह प्रतिभासते । देशादिविच्छेदेन प्रतिभासो न युक्त इति भावः ॥

अपि च—

**चित्तमेव यदा माया तदा किं केन गृह्यते ।**
**उक्तं च लोकनाथेन चित्तं चित्तं न पश्यति ॥ इति ।**

अयं भावः—विज्ञानमेव ग्राह्यतया ग्राहकतया च भवतोपगतं, वेदकव्यतिरिक्ता वेद्यभूता माया नाम यदा काचिन्नास्ति, तदा किं केन प्रतीयते दृश्यमन्तरेण दर्शनमपि न स्यात् दृश्यापेक्षत्वात्तस्य । ननु दर्शनं विज्ञानलक्षणं स्वसंवेदनस्वभावतया स्वरूपं संवेदयत् तदभिन्नं मायादिकमपि वेदयेदिति चेत्, नैतद्भद्रम्, ज्ञानस्य परमार्थतयाऽभ्युपगमे लोकानुरोधेन ज्ञेयस्यापि पारमार्थ्यमभ्युपगन्तव्यं स्यात्, सर्वशून्यवादपक्षे सर्वं सांवृतमुपपद्यते इति न दोष इति" ॥ (३९०)

एवं बोधिचर्यावतारे योगाचारमाध्यमिककलहे दर्शनात् मायावादः सौगतैरप्यभ्युपगतो विज्ञायते । अनूद्यते च भास्करभाष्ये (८५) "माहायानिकबौद्धगाथितं मायावादम्" इति। तत्रायं विशेषः–नास्तितासाधर्म्येण मायामयत्वं बाह्यस्याभ्युपगम्यते विज्ञानवादिना । दृष्टनष्टस्वरूपतासाधर्म्येण मायामयत्वं सर्वस्योपेयते माध्यमिकेन । तेन च विज्ञानसत्यता सिद्ध्यतीति योगाचारस्याभिप्रायः । माध्यमिकस्याभिप्रायस्तु सर्वस्य सांवृतता सिध्यति, दर्शनस्याप्यत्रान्तर्भावात् ॥

इदं च रहस्यं लङ्कावतारे प्रकाशितं भवति तथाहि—(१००) "पुनरपरं महामते न माया नास्ति साधर्म्यदर्शनात्सर्वधर्माणां मायोप-

मत्वं भवति । महामतिराह—किंपुनर्भगवन् विचित्रमायाभिनिवेश-लक्षणेन सर्वधर्माणां मायोपमत्वं भवति? उत वितथाभिनिवेशलक्षणेन? तद्यदि भगवन् विचित्रमायाभिनिवेशलक्षणेन सर्वधर्माणां मायोपमत्वं भवति हन्त तर्हि भगवन् न भावाः मायोपमाः । तत्कस्य हेतोः? रूपस्य विचित्रलक्षणाहेतुदर्शनात् । न हि भगवन् कश्चिद्धेतुरस्ति येन रूपं विचित्रलक्षणाकारं ख्यायेत मायावत् । अतएव तस्मात्कारणान्न भगवन् विचित्रमायालक्षणाभिनिवेशसाधर्म्याद्भावाः मायोपमाः ॥

भगवानाह—न महामते विचित्रमायालक्षणाऽभिनिवेशसाधर्म्यात्सर्वधर्माः मायोपमाः । किन्तर्हि महामते वितथाशुविद्युत्सदृशसाधर्म्येण सर्वधर्मा मायोपमाः । तद्यथा—विद्युल्लताक्षणभङ्गदृष्टनष्टदर्शनं पुनर्बालानां ख्यायते । एवमेव महामते सर्वभावाः स्वविकल्पसामान्यलक्षणाः प्रविचयभावान्न ख्यायन्ते रूपलक्षणाभिनिवेशतः । तत्रेदमुच्यते—

**न माया नास्ति साधर्म्याद्भावानां कथ्यतेऽस्तिता ।**
**वितथाशुविद्युत्सदृशाः तेन मायोपमास्स्मृताः ॥**

इति । अयं विभागः योगाचारमाध्यमिकमतभेदतस्स्यात् । इममेव मार्गमाश्रित्य विज्ञानाद्वैतवेदान्ताद्वैतयोर्वैलक्षण्यं वैदिकैः प्रदर्शितमित्यग्रे प्रकाश्यते ॥

एतेन मायाशब्दस्य विचित्रत्वेन नास्तित्वं वितथत्वेन दृष्टनष्टस्वरूपत्वं चेति प्रवृत्तिद्वयमस्तीत्यवगम्यते । प्रपञ्चस्य मिथ्यात्ववादिभिः द्वितीयमङ्गीक्रियते । सत्यत्ववादिभिस्तु प्रथमे विचित्रत्वमात्रम् । मध्यस्थैः प्राचीनैस्तु यास्कप्रभृतिभिः विज्ञानवादवासनया मायापदस्य ज्ञानपरत्वमुपगतं स्यादिति वितर्क्यते । तथाहि—यास्कनिरुक्ते निघण्टुकाण्डे (३-९) "केतः केतुः चेतः चित्तम् क्रतुः असुः धीः शचीः

माया वयुनम् अभिख्या इत्येकादश प्रज्ञानामानि" इति पठ्यते ॥

वात्स्यायनभाष्ये तु (४-२-३५) "प्रज्ञापनीयसरूपञ्च द्रव्यमुपादाय साधनवान् परस्य मिथ्याध्यवसायं करोति सा माया" इत्युच्यते। अनेनापि मिथ्याध्यवसायः मायाशब्दार्थ इत्युक्तं भवति। अत्रापि ज्ञानत्वमेव प्रवृत्तिनिमित्तमिति सूचितम् ॥

गौडपादकारिकाभाष्ये श्रीशाङ्करे (४-५८)—"माया नाम वस्तु तर्हि। नैवम्, सा च माया न विद्यते। मायेत्यविद्यमानस्याख्येत्यभिप्रायः" इति दृश्यते ॥

तथा(३-२४)—"इन्द्रो मायाभिरित्यभूतार्थप्रतिपादकेन मायाशब्देन व्यपदेशात्। ननु प्रज्ञावचनो मायाशब्दः? सत्यम्, इन्द्रियप्रज्ञायाः अविद्यात्वेन मायात्वाभ्युपगमाददोषः" इति चोच्यते ॥

भगवद्गीताभाष्ये श्रीरामानुजीये(४-६)—"आत्ममायया आत्मीयया मायया" "माया वयुनम्" इति ज्ञानपर्यायोऽत्र मायाशब्दः। तथाचाभियुक्तप्रयोगः 'मायया सततं वेत्ति प्राणिनाञ्च शुभाशुभम्' इति। आत्मीयेन ज्ञानेन सङ्कल्पेनेत्यर्थः' इति ॥

श्रीभाष्ये (१-१-१)—प्रमाणानुपपत्तिप्रकरणे—"मायाशब्दस्य मिथ्यापर्यायत्वेन अनिर्वचनीयवाचित्वमिति चेत्, तदपि नास्ति। न हि सर्वत्र मायाशब्दो मिथ्याविषयः आसुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात्, यथोक्तं (विष्णुपुराणे प्रह्लादचरिते)—

**तेन मायासहस्रं तच्छम्बरस्याशुगामिना।**
**बालस्य रक्षता देहमेकैकश्येन सूदितम्॥** इति।

अतो मायाशब्दः विचित्रार्थसंर्गकराभिधायी। प्रकृतेश्च मायाशब्दाभि-

धानं विचित्रार्थसर्गकरत्वादेव" इति। एतेन यथायथं शब्दान् व्याकुर्वन्तीति निर्णयः॥

प्रकृते मायाविद्ययोरैक्ये वा मायाया अविद्यातुल्यत्वे वा अविद्याकल्पितत्वे वा न कश्चिद्विशेषः, तद्वा तादृग्वा न कश्चिद्विशेष इति न्यायात्। परं तु प्रपञ्चस्य निवृत्त्युपपत्तये प्रक्रियामात्रमिति निर्णयः। तदनूद्यते यामुनाचार्यैः आत्मसिद्धौ (१९ पु.)—

**शुद्धतत्त्वं प्रपञ्चस्य न हेतुरनिवृत्तितः।**
**ज्ञातृज्ञेयविभागस्य मायैव जननी ततः॥** इति।

## अध्यासवादः.

एवंविधस्वभाववादपरिष्कारेषु सर्वेष्वपि जगत्सत्यतावादापरपर्यायेषु दर्शनेषु अन्ततः परिणामवादपर्यवसायिषु प्रयत्नवादलक्षणपुरुषकारस्यावकाशाभावेन आत्यन्तिकदुःखोपशमलक्षणः मोक्षः नैवावकाशं लब्धुमर्हति। तदर्थं निःस्वभाववादसमाश्रयणं तु शून्यवादपर्यवसायि भवत् वृश्चिकभयात्पलायमानस्याशीविषमुखनिपातमनुकरोति। तस्मात् मार्गान्तरमाश्रयितव्यम्। तदेतन्मार्गान्तरम्—प्रथमं तावत्सूत्रभाष्येऽध्यासो निरूपितः। यथा "युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः तमःप्रकाशवद्विरुद्धस्वभावयोः इतरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः तद्विपर्ययेण विषयिणः तद्धर्माणां च विषयेऽध्यासः मिथ्येति भवितुं युक्तम्॥

तथापि अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य इतरेतराविवेकेन अत्यन्तविविक्तयोः धर्मधर्मिणोः मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्य अहमिदं ममेदमिति नैसर्गिको लोकव्यवहारः" इति॥

अयमत्राभिप्रायः—प्रपञ्चसत्यतावादिनां सर्वेषां सिद्धान्तेषु आत्मा सत्यः प्रपञ्चोऽपि सत्यः, अनयोः सम्बन्धेन संसारः। सम्बन्धविलये मोक्ष इत्यभिप्रायः। अत्र तु सम्बन्धस्य सम्बन्धिनश्च परमार्थस्य निरन्वयेन शमं सम्पादयितुं विद्यया न शक्यत इत्यविद्यया सम्बन्धस्सम्बन्धी चापारमार्थिक इति प्रसाधयितुं अविद्यालक्षणः भ्रान्तिपदवाच्योऽध्यासः प्रथमं समर्थनीयः ॥

तत्र साङ्ख्याः भ्रान्तिलक्षणं ज्ञानरूपमविद्यापदवाच्यं वस्त्वेव नास्ति। भ्रान्तिसामग्र्यैव भ्रान्तिकार्यसिद्धिरित्यभ्युपगच्छन्ति। तन्मतमभिप्रेत्य शङ्का—युष्मदस्मदिति। इतरेतरभावलक्षणे तादात्म्ये सत्येव मृदेयं घटः तन्तुरयं पट इति प्रत्ययः। इदं रजतं अयं सर्पः इत्यादयः विशिष्टप्रत्ययाः न सन्त्येव, असंसर्गाग्रहात्तथाऽभिमान इति भावः ॥

अबाधितसार्वलौकिकानुभवेन वस्तुतस्तादात्म्याभावेऽपि कल्पित तादात्म्यनिबन्धनविभ्रमोदयस्सिध्यतीति तथापीत्यादिसमाधानभाष्याभिप्रायः। तत्र साङ्ख्येतरसर्वदार्शनिकानां सम्मतिरुच्यते—"तमेवंलक्षणमध्यासं पण्डिताः प्रमाणकुशला अविद्येति मन्यन्ते। तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः" इति। तथा माण्डूक्यकारिकाभाष्येऽपि (३–५) "सर्ववादिभिरप्यविद्याकृतव्यवहाराभ्युपगमात् परमार्थेऽनभ्युपगमाच्च "इति लिख्यते ॥

अयमेव भ्रान्तिवादः, अध्यासो मिथ्याप्रत्ययरूप इति हि भाषितम्। एवं भाषणस्य मूलम्—"अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति पातञ्जलं सूत्रम्। तथा—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति न्यायसूत्रं च ॥

अत्र भाष्ये प्रमाणकुशला इति पदं मूलकोशेषु न दृश्यते। पञ्चपादिकाटीकायामुपात्तमस्ति। तेन च पदेन कणादाक्षपादवात्स्यायन शबरादयोऽभिप्रेताः जरन्मायावादिनश्च। यतः तैः सर्वत्राविद्यालक्षणः मिथ्याप्रत्ययः प्रतिपादितोऽस्ति ॥

तथा हि वात्स्यायनभाष्ये—(४–२–३५) "स्थाणौ पुरुषोऽयमिति व्यवसायः मिथ्योपलब्धिः। अतस्मिन् तदिति ज्ञानम्। स्थाणौ स्थाणुरिति व्यवसायः तत्त्वज्ञानम्। तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्तते" इति स्फुटमस्ति। तथा मायागन्धर्वनगरमृगतृष्णिकानामपि या बुद्धयः अतस्मिन् तदिति व्यवसायाः तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्" इत्यध्यासः निरूपितः ॥

तथा शाबरभाष्ये—"यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः" इति चोदनासूत्रे। "बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवम्मिथ्याज्ञनमिति तदन्यसम्प्रयोगे। इन्द्रियार्थसंनिकर्षो हि सम्यज्ज्ञानस्य हेतुः। असति तस्मिन् मिथ्याज्ञानम्। तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः" इत्यौत्पत्तिकसूत्रे। एवं सर्वत्र ॥

ततश्चैते सर्वे भ्रान्तिज्ञानवादिनः अन्यथाख्यातिविपरीतख्यात्यनिर्वचनीयख्यातिवादिनो वा। एवं सर्वमतानुसारेणाविद्यालक्षणोऽध्यासस्साधितः। विद्यया चाविद्यानिवृत्तौ अविद्या तत्कार्यं सर्वमेकहेलया निवर्तत इति भावः ॥

एवमभिप्रायस्य पूर्वपक्षतया प्रतिपक्षभूतोऽभिप्रायः साङ्ख्यसिद्धान्त इति प्राक्सूचितम्। (७९) तस्येदमुपव्याख्यानम्—यद्यपि साङ्ख्याः स्वभाववादस्थापनेन निःस्वभाववादं निराचक्रुः। तथापि संसारलक्षणस्य प्रपञ्चस्य परमार्थस्य सम्बन्धरूपं बन्धमविवेकनिबन्धन-

माहुः । अविवेको नामाख्यातिः भेदाग्रहः । स हि ख्यातिरूपेणापारिणतमन्तःकरणमेव । एतादृशेनाविवेकेन संसारे सति अन्ततः प्रकृतिरूपस्याविवेकस्य निरन्वयविनाशासम्भवादनिर्मोक्षप्रसङ्गः तदवस्थ एव । तस्मान्निरन्वयविनाशार्हः अन्धकारवदविद्यारूपो भ्रान्त्यध्यासादिपदवाच्यः भ्रमः निरूपितः । स चाध्यासः अनिर्वचनीयख्यातिरित्याधुनिकानां परिष्कारः । मूलतत्त्वं तु साङ्ख्यमतप्रतिपक्षभाव एव । तथा अज्ञानमविद्या वा भावरूपमेव न त्वभावरूपमिति विवरणकारादिसिद्धान्तस्यापि साङ्ख्यदृष्टिरेव मूलमिति विदांकुर्वन्तु ॥

अनिर्वचनीयवादः.

एवं च शाङ्करसिद्धान्तं जिज्ञासमानैः विमर्शकवरैः कार्यकारणभावविषये प्रथमं साङ्ख्यवैशेषिकार्हतसौगतसिद्धान्तान् क्रमेण चतसृषु दिक्षु निक्षिप्य मध्ये शाङ्करमततत्त्वं जिज्ञासितव्यम् । तथाहि—अभिव्यक्तिवादिनः खलु साङ्ख्याः कार्यकारणयोरत्यन्तमभेदेन कार्यं कारण तत्त्वेन सुनिरूपमाहुः । आरम्भवादिनो वैशेषिकाः कार्यकारणयोरत्यन्तभेदाभ्युपगमेन कारणादन्यत्वेनैव सुनिरूपमाहुः । आर्हताः कौमारिलाः जरदौपनिषदाः भर्तृप्रपञ्चादयः नव्यौपनिषदा भास्करयादवप्रकाशादयश्च तत्त्वं तदन्यत्वं च समुच्चित्य प्रतीतिबलेन विरोधं परित्यज्य भिन्नाभिन्नं कार्यस्वरूपं निरूपयन्ति । सर्वत्र तत्र विरोधमभ्युपगम्य सौगताः कार्यकारणं सर्वं निरभिलप्यं निस्स्वभावमिति च निरुपाधिकेऽभावे परिशेषयन्ति ॥

एतत्सकलमतकटाक्षेण सर्वत्र विरोधमभ्युपगम्य कारणीभूतब्रह्मापेक्षया तत्त्वतदन्यत्वाभ्यां दुर्निरूपमित्यभ्यासेन सूत्रभाष्ये भाषितम् ॥

आरम्भणाधिकरणे—"सर्वज्ञस्येश्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वेश्वरस्य माया शक्तिः प्रकृतिरिति श्रुतिस्मृतिभिरभिलप्येते । ताभ्यामन्यस्सर्वज्ञः ईश्वरः । एवमविद्याकृतनामरूपोपाध्यनुरोधीश्वरः भवति" इति भाषितमस्ति ॥

तथा (२-१-२७ सूत्रे)—"अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते" इति ॥

तथा (१-४-३ सू.)—"अव्यक्ता हि सा माया, तत्त्वान्यत्वनिरूपणस्याशक्यत्वात्" इति च ॥

तथा—(२-२-१७) भामती—"तस्मादुपपत्त्यनुभवाभ्यां न कारणस्य कार्यादन्यत्वं, किंतु कारणस्यैवायमनिर्वाच्यः परिणामभेदः । तस्मात्कारणादनतिरेकात् किं केन सम्बद्धम्" इति ॥

अयमत्राभिसन्धिः—कार्यावस्था न कारणात्मिका । नाप्यन्यात्मिका । नोभयात्मिका । नापि शून्या । किंतु विलक्षणा । अत्र अनतिरिक्तत्वं अनन्यत्वं अनिर्वचनीयत्वं तादात्म्यमित्यादिकं पर्यायपदम् ॥

तत्रोभयात्मकमित्यन्वयदृष्टिः । अनुभयात्मकमिति व्यतिरेकदृष्टिः । आद्या दृष्टिरनेकान्तवादः स्याद्वाद इति गीयते । द्वितीया तु अनिर्वचनीयवाद इति ॥

सैषा व्यतिरेकदृष्टिः "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञम्" इत्यादिश्रुतिसिद्धा । शाबरे भाष्ये आत्मवादे यथा—"केन पुनरु-

पायेनायमन्यस्मै कथ्यत इति । तत्राप्युपाये ब्राह्मणं भवति । स एष नेतिनेत्यात्मेति होवाचेति । असावेवंरूप इति न शक्यते निदर्शयितुं, यच्च परः दृश्यति तत्प्रतिषेधः तस्योपदेशोपायः । शरीरं परः पश्यति तेनात्मोपदिश्यते, शरीरं नात्मा, अस्ति शरीरादन्य इति । स आत्मेति शरीरप्रतिषेधेनोपदिश्यते । तथा प्राणादयो नात्मानः तत्प्रतिषेधेन तेभ्योऽन्य उपदिश्यके । तथा परस्थास्सुखदुःखादयः परेण लिङ्गैरुपलभ्यन्ते । तेऽपि नात्मान इति तत्प्रतिषेधेनान्य उपदिश्यते" इति ॥

सैषा व्यतिरेकदृष्टिरेव सूत्रकाराभिप्रेतेत्याह—भाष्ये (२-१-१४) "सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभिप्रायेण तु स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति । अप्रत्याख्याय हि कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यते इति" । इति ॥

तथा—एतादृशीमेव व्यतिरेकदृष्टिमवलम्ब्य व्याकरणाचार्यो वररुचिः नित्यस्य सर्वस्य शब्दस्य स्वत एव सिद्धत्वात् व्याकरणशास्त्रेण किं प्रयोजनमिति शङ्कां कृत्वा एवं समाहितवान् (१-१-४) "यदि तर्हि-नित्याश्शब्दाः किमर्थं शास्त्रमिति चेत्—निवर्तकत्वात्सिद्धम्" इति । असाधुतालक्षणदोषनिवर्तकत्वज्ञापनेन शास्त्रप्रयोजनं सिद्धमिति तदर्थः ॥

इयमेव व्यतिरेकदृष्टिलक्षणा युक्तिः ब्रह्मणः नित्यस्य निर्विशेषस्य स्वतस्सिद्धस्य शास्त्राविषयतया उपनिषल्लक्षणं वेदान्तशास्त्रं व्यर्थमिति शङ्कायामपि समाधानायोपात्ता समन्वयाधिकरणे—"अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेन्न—अविद्याकल्पितभेदनिवृत्तिपरत्वात् शास्त्रस्य । न हि शास्त्रमिदंतया विषयीभूतं ब्रह्म प्रतिपिपादयिषति । किं

तर्हि प्रत्यगात्मत्वेनाविषयतया प्रतिपादयत् अविद्याकल्पितं वेद्यवेदितृवेदनाभेदमपनयति । तथा च शास्त्रं—यस्यामतामिति" ॥

तथा माण्डूक्यकारिकायां वैतथ्यप्रकरणे (३२) "न निरोधो न चोत्पत्तिः" इतिश्लोकभाष्ये एवं दृश्यते—"तस्मिन्निर्विशेष एवात्मनि सुखित्वादयो विशेषाः कल्पिताः । यत्तु असुखित्वादिशास्त्रं, आत्मनस्तत्सुखित्वादिनिवृत्त्यर्थमेवेति सिद्धम् । सिद्धं तु निवर्तकत्वात् इत्यागमविदां सूत्रम्" इति ॥

अत्रानन्दगिरीया टीकेयम्—उक्तेऽर्थे द्रमिडाचार्यसम्मतिमाह—सिद्धं त्विति । ब्रह्मणि पदानां व्युत्पत्त्यभावेऽपि सिद्धमेव शास्त्रप्रामाण्यम्, अभावबोधनव्युत्पन्ननञ्पदसंसृष्टैः स्थूलादिव्युत्पन्नपदैः स्वाभाविकद्वैताभावबोधनेन अध्यस्तनिवर्तकत्वादिति सूत्रार्थः इति ॥

एतेन विज्ञायते व्यतिरेकदृष्टिरियं बहोः कालात् बहुभिरूरीकृतेति । एतामेव हि सरणिं समाश्रित्य समन्वयसूत्रे "इदं तु पारमार्थिकं कूटस्थं नित्यं व्योमवत्सर्वव्यापि सर्वविक्रियारहितं नित्यतृप्तं निरवयवं स्वयंज्योतिस्स्वभावम्" इति भाषितम् ॥

तदर्थस्तु—मिथ्यात्वस्य विकार्यत्वस्य उत्पाद्यत्वस्य आप्यत्वस्य संस्कार्यत्वस्य दुःखित्वस्य सातिशयत्वस्य जडत्वस्य च व्यावृत्तिलक्षण इति संप्रदायः ॥

तथैव भामत्यामपि "अयमभिसंधिः—कूटस्थो हि कार्यजननस्वभावो वा स्यादतत्स्वभावो वा । स चेत्कार्यजननस्वभावः ततो यावदनेनकार्यं कर्तव्यं तावत्सहसैव कुर्यात् । समर्थस्य क्षेपायोगात् । अतत्स्वभावत्वे तु न कदाचिदपि कुर्यात् ॥

यद्युच्येत समर्थोऽपि क्रमवत्सहकारिसचिवः क्रमेण कार्याणि करोतीति । तदयुक्तम् । विकल्पासहत्वात् । किमस्य सहकारिणः कंचिदुपकारमादधति न वा? अनाधाने अनुपकारितया सहकारिणो-नापेक्ष्येरन्। आधानेऽपि भिन्नमभिन्नं वा उपकारमादध्युः? अभेदे तदेवा-हितमिति कौटस्थ्यं व्याहन्येत । भेदे तूपकारस्य तस्मिन् सति कार्यस्य भावात् असति चाभावात् सत्यपि कूटस्थे कार्यानुत्पादात् अन्वयव्यति-रेकाभ्यामुपकार एव कार्यकारी न भाव इति नार्थक्रियाकारी भावः । तदुक्तम्—

**वर्षातपाभ्यां किं व्योम्नः चर्मण्यस्ति तयोः फलम् ।**
**चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः ॥ इति ॥**

एवं कूटस्थस्य कारणत्वासंभवः क्षणवादिभिराशङ्कितः । तस्योत्तरं तत्रैव "स्थिरो हि भावः क्रमवत्सहकारिसमवधानात् क्रमेण कार्याणि करोति । न चानुपकारिणस्सहकारिणः । न चास्य सहकारिभिराधीय-मानो ह्युपकारः न भिन्नो नाप्यभिन्नः किंत्वनिर्वाच्य एव । अनिर्वाच्याच्च कार्यमनिर्वाच्यमेव जायते । नचैतावता स्थिरस्याकारणत्वं तदुपादानत्वा-त्कार्यस्य । तथाच श्रुतिः—मृत्तिकेत्येव सत्यम्, इति ॥ (२-२-२६)

एवं आत्मव्यतिरिक्तस्य सर्वस्यापारमार्थ्यलक्षणासद्रूपाभावरूपत्वे अध्यासलक्षणायां भ्रान्तौ च सत्यां जीवेश्वरादिव्यवस्था प्रमाणप्रमेय-प्रमातृप्रमादिव्यवस्था लौकिकवैदिकव्यवहारविषयभूता कथमुपपद्यता-मित्याशङ्कायाम्—व्यवहाराविरोधाय शास्त्रार्थोपपत्तये च अवस्थाद्वयं ब्रह्मणोऽङ्गीकृतम् । अत्रेदं प्रमाणम् "द्विरूपं हि ब्रह्मावगम्यते नाम-रूपविकारभेदोपाधिविशिष्टं तद्विपरीतं च सर्वोपाधिविवर्जितम्" इति (१-१-११) शारीरकभाष्यम् ॥

तथा—"परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते। न स्वतन्त्रा। सा चावश्यमभ्युपगन्तव्या। अर्थवतीह सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति। शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः। मुक्तानां च पुनरनुत्पत्तिः, विद्यया तस्या बीजशक्तेर्विनाशात्। अविद्यात्मिका हि सा बीजशक्तिः अव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः। यस्यां स्वरूपप्रतिबोधरहिताश्शेरते संसारिणो जीवाः। सा चाकाशाक्षरमायादिशब्दैः श्रूयते। अव्यक्ता हि सा माया तत्त्वान्यत्वाभ्यां निरूपणस्याशक्यत्वात्" इत्यादि च॥ (१–४–३)

अस्याश्च व्यवहारावस्थाया उपपादनप्रकाराः क्रियमाणाः विद्वद्भिः विविधा विज्ञायन्ते। अतो व्यवहारप्रक्रिया यथायथोपपद्यते तथातथाऽस्तु प्रकारभेदः नाभिनिवेशार्हः। ब्रह्मव्यतिरिक्तस्य सर्वस्य विचारानन्तरकालीनवाक्यार्थज्ञाननिवर्त्यत्वं परं सिषाधयिषितमिति रहस्यम्। अत एव व्यावहारिकप्रपञ्चविषये विचित्रा वादाः प्रवर्तन्ते यथाबलं विपाश्चिताम्। अत्रानेकेषूदाहरणेषु सत्स्वपि विस्तरभिया एकमुदाहरणमुपदर्शयामः। सिद्धान्तबिन्दौ (११२ पु.)—

जीवात्मविषये आभासवादः प्रतिबिम्बवादः अवच्छेदवादः एकजीववादश्चेति चत्वारः पक्षाः। प्रथमः सुरेश्वराचार्यसम्मतः प्रतिबिम्बं स्वरूपतो मिथ्येति वादः। द्वितीयः विवरणकारसंक्षेपशारीरककारयोरभिमतः प्रतिबिम्बं स्वरूपतस्सत्यं प्रतिबिम्बत्वेनासत्यमिति वादः। तृतीयः अवच्छेदवादो वाचस्पतिमिश्रसिद्धान्तः। तुरीयः एकजीववादः दृष्टिसृष्टिवादः मुख्यो वेदान्तसिद्धान्त इति पक्षाः॥

एतेषामुपव्याख्यानम्—तत्र प्रथमः पक्षः–अज्ञानोपहित आत्मा अज्ञानतादात्म्यापन्नस्वचिदाभासाविवेकात् अन्तर्यामी साक्षी जगत्कारण-

मिति कथ्यते । बुद्ध्युपहित आत्मा तत्तादात्म्यापन्नस्वचिदाभासाविवे-
कात् जीवः कर्ता भोक्ता प्रमातेति कथ्यते । प्रतिदेहं बुद्धि (अहंकार)
भेदात् तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते ।
अज्ञानस्य तु सर्वत्राभिन्नत्वात् तद्गतचिदाभासभेदाभावात् तदविविक्त-
साक्षिचैतन्यस्य न कदाचिदपि भेदभानमिति । प्रतिबिम्बमसत्यमिति
पक्षः ॥

व्याख्यानम्—स्वचिदाभासः प्रतिबिम्बः । अन्तर्यामी प्रेरक-
स्सर्वेषाम् । साक्षी सर्वव्यवहारहेतुभूतज्ञानस्वरूपः । अज्ञानप्रतिबिम्बत्वं
साक्षित्वम् । स्वरूपतो मिथ्याभूतं प्रतिबिम्बमिति यावत् । शुद्ध-
चैतन्यरूपस्यात्मनः आभासो बन्धः तन्निवृत्तिः मोक्ष इति सिद्धान्तः ॥

द्वितीयः— अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अन्तःकरण-
तत्संस्कारावच्छिन्नज्ञानप्रतिबिम्बितं चैतन्यं जीव इति विवरणकार-
मतम् ॥

अज्ञानप्रतिबिम्बितं चैतन्यमीश्वरः । बुद्धिप्रतिबिम्बितं चैतन्यं
जीवः । अज्ञानोपहितं बिम्बचैतन्यं शुद्धमिति संक्षेपशाररिककारमतम् ।
अनयोः पक्षयोः बुद्धिभेदाज्जीवभेदः । प्रतिबिम्बं सत्यमिति पक्षः ॥

तृतीयः—अज्ञानविषयीकृतं चैतन्यमीश्वरः । अज्ञानाश्रयीभूतं
चैतन्यं जीव इति वाचस्पतिमिश्रमतम् । अत्राज्ञानभेदात् जीवभेदः ।
प्रतिजीवं च प्रपञ्चभेदः । जीवस्यैव स्वाज्ञानोपहिततया जगदुपा-
दानत्वम् । प्रत्यभिज्ञा चापि सादृश्यात् । ईश्वरस्य सर्वाधिष्ठातृत्वेन
कारणत्वोपचारः ॥

चतुर्थस्तु—अज्ञानोपहितं बिम्बचैतन्यमीश्वरः । अज्ञानप्रति-
बिम्बचैतन्यं जीव इति वा, अज्ञानानुपहितं शुद्धचैतन्यमीश्वरः, अज्ञानो-

पहितं जीव इति वा पक्षः एकजीववादः । अत्र जीव एव स्वाज्ञान-वशात् जगदुपादानं निमित्तं च । दृश्यं सर्वं प्रातीतिकम् । देहभेदाज्जीवभेदभ्रान्तिः । इति ॥

एवं यथाकथंचित् सृष्ट्यादिव्यवहारव्यवस्थायां सत्यां प्रतिषेधस्य प्रतिषेध्यप्रसक्तिमात्रे दृष्टिरिति विचित्रा वादाः । तदुक्तम्, वार्तिके— (३-४-४०२)—

**यया यया भवेत्पुंसः व्युत्पत्तिः प्रत्यगात्मनि ।**
**सा सैव प्रक्रिया ज्ञेया साध्वी सा चानवस्थिता ॥ इति ॥**

एवं मार्गाणां विचित्रत्वेऽपि परमार्थदृष्ट्या व्यवहारविप्लवशङ्कानवसरः, यतः एवं भाषितं शारीरके (३-२-४)—"प्राक्तु ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चः व्यवस्थितरूपो भवति । सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यते इत्यतो वैशेषिकमिदं सन्ध्यस्य मायामयत्वमुदितम्" इति । अत्र दर्शनपदप्रयोगात्तदारम्भभूतविचारकालीनविज्ञानमात्रेण व्यवस्थाविप्लवस्य नावकाशलाभः ॥

## तुरीयकोटिविश्रान्तिः.

**सत्त्वे न मिथ्या शून्यत्वे दुर्निरूपं प्रकाशनम् ।**
**सदसद्भ्यामनिर्वाच्यां तामविद्यां प्रचक्षते ॥**
**सत्त्वे न भ्रान्तिबाधौ स्तो नासत्त्वे ख्यातिभाधने ।**
**सदसद्भ्यामनिर्वाख्याऽविद्या वेद्यैस्सह भ्रमः ॥**

इति विभ्रमविवेकेष्टसिद्ध्याद्युक्तरीत्या चतुर्थी कोटिरविद्या । तन्मयं च जगत् चतुर्थकोटौ विश्रान्तमिति कश्चिन्निष्कर्षः । तस्येदमुपव्याख्यानम्—

यथा सुखदुःखतदुभयतद्विलक्षणा उदासीनावस्था ।

रागद्वेषतदुभयतद्विलक्षणावस्था उपेक्षा ।

शीतोष्णतदुभयतद्विलक्षणोऽनुष्णाशीतः स्पर्शः ।

भूतभविष्यत्तदुभयतद्विलक्षणः वर्तमानः कालः ।

संचितागामितदुभयतद्विलक्षणं प्रारब्धं कर्म ।

चेतनाचेतनतदुभयतद्विलक्षणः परमेश्वरः ।

उत्पत्तिविनाशतदुभयतद्विलक्षणा स्थितिः ।

इत्यादयः तुरीयकोटिस्थिताः पदार्थाः तैस्तैर्वादिभिराद्रियन्ते तथा प्रपञ्चस्वरूपमपि न सत् नासत् नोभयम्, किन्तूभयविलक्षणमित्युक्तौ को दोषः। अत एव प्रतिकक्षिभिरेवमुच्यते सर्वार्थसिद्धौ (३-४८) "न ह्यनुष्णाशीतवद्गतिः, कोट्यन्तरस्यात्यन्तमनुपलम्भात्" इति । एवं तुरीयकक्ष्यायां निक्षेपस्येदमेव प्रयोजनम्, यत् विद्याविरोधित्वेन विद्ययोपशम इत्येको मार्गः ॥

सोऽयं पक्षः नैयायिकैरप्यनूदित इत्यवधार्यते। यथा—न्यायदर्शने गौतमः तुरीयाध्याये फलपरीक्षाप्रकरणे एवमसूत्रयत्—"नासत् न सत् न सदसत् सदसतोर्वैधर्म्यात्" इति ॥ (४-१-४८)

अस्यायमर्थः स्वरसतः सम्पद्यते । यथा उत्पत्तिव्ययधर्मकं परिदृश्यमानमिदं कार्यं न सत् नाप्यसत नोभयं च । तत्र हेतुः सर्वत्र, सदसतोर्वैधर्म्यादिति । सदसतोर्विरुद्धत्वेन प्रतीतेरित्यर्थः । एवं पक्षत्रयप्रत्याख्यानेन तुरीयः पक्षः सदसदनिर्वचनीयनामकः पूर्वपक्षिणोऽभिप्रेत इति शक्यते वक्तुम् ॥

एवं पूर्वपक्षं सूत्रयित्वा सिद्धान्तमेवं सूत्रयामास—"प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा" इति । अनेन सूत्रेण कार्यस्योत्पत्तेः प्रागसत्त्वपक्षः अङ्गीकृत इति सिद्धः ॥

अत्र पूर्वपक्षमतरीत्या कार्यं सदसद्विलक्षणं दुर्निरूपानिर्वचनीयाद्यपरपर्यायमिति सिद्धे सति इदानीं कार्यस्य मिथ्यात्ववादिभिः मिथ्यात्वं परिष्कुर्वद्भिः सदसद्विलक्षणतापक्ष एव परिगृह्यते इत्यवधार्यते । ततश्च सोऽयमभिप्रायोऽनादिरिति सिद्ध्यति । प्रपञ्चविषये एष तुरीयकोटिविश्रान्तिपक्षः । माध्यमिकपक्षस्तु सर्वस्मिन्नपि विषये पञ्चमकोटिविश्रान्तिरिति विवेकः । ततश्च अलीकवाद एष इति गीयते । स तु शून्यवाद इति ॥

एवं परमार्थं ब्रह्मरूपं तत्त्वमपि कोटिचतुष्टयविलक्षणमुच्यते । ताश्च कोटयः विलक्षणाः । यथोच्यते—

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।**<br>
**चलस्थिरोभयाभावैः आवृणोत्येव बालिशः ।**<br>
**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदाऽऽवृतः ।**<br>
**भगवानाभिरस्पृष्टो येन दृष्टस्स सर्वदृक् ॥ ४-८४ ॥**

इति माण्डूक्यकारिका । अत्र चलत्वं स्थिरत्वं उभयत्वं अनुभयत्वं च कोटयः आपाततः प्रतीयन्ते। यासां ग्रहैः कोटीनामभिनिवेशैरित्यर्थः ॥

## अविश्रान्तिः.

अथाविश्रान्तिपक्षः । अयमेव वाचस्पतिमिश्रसिद्धान्तः । तथा हि—नसत् नासत् नापि सदसत् नचैव सदसद्विलक्षणम्, इति वाचस्पतिमिश्रेण ब्रह्मतत्त्वसमीक्षायामुक्तमित्यानन्दबोधाचार्यः प्रमाणमालायां कथयति । अनूद्यमानो ग्रन्थभागस्त्वेषः—" नचैतादृशमुभयवैलक्षण्यमपि तात्त्विकमभ्युपगच्छामः, येन प्रसञ्जयेम विरोधम्। वैलक्षण्यवाचोयुक्तिर्हि प्रतियोगिनिरूपणात् यौक्तिकत्वप्रकटनफला । न त्वेवंरूपतायाः सामञ्जस्यसम्पादनायेत्यवोचाम । न हि स्वरूपत एवातात्त्विकस्य

तात्त्विकं किमपि रूपं भवति। अत एवोक्तमाचार्यवाचस्पतिना ब्रह्मतत्त्वसमीक्षायाम्—

सदसदुभयानुभयादिप्रकारैरनिर्वचनीयत्वमेव ह्यविद्याया अविद्यात्वमिति । सा चाधिष्ठानविद्याविरोधादविद्येति गीयते । तदेकार्थतया चाज्ञानमिति । प्रमाणं पुनरत्र विवादपदमनिर्वाच्यं बाध्यत्वात् यदुक्तसाध्यं न भवति तदुक्तसाधनं न भवति यथाऽऽत्मा । एतदेवोपजीव्यप्रतीतिबाधान्यथानुपपत्तिः प्रवृत्तिबाधान्यथानुपपत्तिश्चेत्यर्थापत्तिद्वयमपि तद्वादिनं प्रत्यभिधातव्यमिति" इति ॥

एवं प्रमाणमालायामेवान्यत्रेत्थमुच्यते—"परस्परविरुद्धानां निषेधेऽपि विधाविव समुच्चयविरोधः गीर्वाणैरप्यवारणीयः । एतेन चतुष्कोटिविनिर्मुक्तो भेद इति परास्तम् । सदसद्विलक्षणत्वाभ्युपगमोऽप्येवं जडस्यानुपपन्न इति चेत्सत्यम् । तात्त्विकत्वे तथैव । अत एव तत्त्वतो युक्त्या निश्चित्य वक्तुमशक्यत्वात् अनिर्वचनीयमेव जडमुच्यते । सदसद्वैलक्षण्यादिवाचोयुक्तिरपि तत्तद्रूपनिरूपणासहिष्णुत्वमात्रप्रकटनाय। न तु तद्विरहसमुच्चयात्मनो रूपान्तरस्य तात्त्विकत्वप्रकटनायेति न किंचनास्माकं दुष्यतीति" इति ॥

अत्र विश्रान्तिपक्षे शून्यवादसत्यवादयोः माध्यस्थ्येन प्रपञ्चस्य स्थितिः । स एव मायावादः मायाविद्ययोरैक्यपक्षश्चेति सूच्यते । अविश्रान्ति पक्षे तु स्वरूपतः प्ररमार्थतः प्रतिषेध एव । ततश्चानिर्वचनीयत्वलक्षणः दुर्निरूपतावादः द्विविधस्सम्पन्नः। तत्रैको माध्यस्थ्यरूपः। द्वितीयः अपलापलक्षणप्रत्याख्यानरूपः । द्वयोरपि सामञ्जस्यं कारणदृष्टिकार्यदृष्टिरूपाभ्यां ब्रह्मदृष्टिप्रपञ्चदृष्टिभ्यां अस्माभिरध्यवसितं प्रागेव निरूपितम् ॥

ततश्च टीकाकारविवरणकारादीनां मार्गः कारणदृष्टिप्रधानः । वार्तिककारभामतीकारादीनां मार्गः कार्यदृष्टिप्रधानः । एवं सत्योः खलु-भयविधयोः दृष्ट्योः शारीरकभाष्ये परिदृश्यमानानि सर्वाणि वाक्यानि सङ्गतानि भवन्तीत्यद्वैतसिद्धान्तसारार्थः । अयमत्रसंग्रहः—

सर्वान् प्रबन्धानालोच्य विचार्य च पुनःपुनः ।
मार्गद्वयं सुनिष्पन्नमद्वैताचार्यसंमते ॥

तुरीयकोटौ स्थित्वैका विचारस्य व्यवस्थितिः ।
दुर्निरूपत्वसिद्धान्ते स्थित्वैवान्या व्यवस्थितिः ॥

सर्वथा निर्विशेषस्य परिशेषोऽभिसंहितः ।
भावस्य न त्वभावस्येत्येष सिद्धान्तसंग्रहः ॥

इति । आरोपदृष्टिः अपवाददृष्टिः मध्यस्थदृष्टिश्चेति संक्षेपशारीरकवि-भागः प्राङ्निरूपितोऽप्यस्य प्रपञ्च इति संक्षेपः ॥

## दुर्निरूपत्वोद्देशः.

न सतः कारणापेक्षा व्योमादेरिव युज्यते ।
कार्यस्यासंभवी हेतुः खपुष्पादेरिवासतः ॥

कार्यकारणभावापलापकारिकेयम् । अयमर्थः—यदि कार्यं कारकव्यापारा-त्पूर्वमस्ति तदा पूर्वसिद्धगगनादिवत् किमपि कार्यं न स्यात् । अथ तदा नास्ति तथापि खपुष्पवत् न कार्यं, नचासतस्सत्त्वापादनसम्भवः । न हि नीलं शिल्पिसहस्रेणापि पीतीकर्तुं शक्यमिति । तथा—

कार्यत्वं कारणत्वञ्च सम्बन्धस्सोऽसतां कुतः ।
सच्चेत्कारणवैयर्थ्यमसच्चेदनवस्थितिः ॥

कुर्वत्कार्यमकुर्वद्वा कारणं तत्कुतो भवेत् ।
कुर्वच्चेदनवस्थानमकुर्वत्त्वव्यवस्थितिः ॥

किञ्च कारणात्कार्यं भिन्नमभिन्नं वा? आद्ये गवाश्वयोरिव कार्यकारणता न स्यात्। अनन्तरे कथं सिद्धस्य साध्यता। तथा—भावस्य कूटस्थस्य कारणत्वं न सम्भवतीत्यत्र—

वर्षातपाभ्यां किं व्योम्नः चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः॥ इति॥

अयमर्थः—कूटस्थो हि कार्यजननस्वभावो वा स्यादतत्स्वभावो वा? स चेत्कार्यजननस्वभावः ततो यावदनेन कार्यं कर्तव्यं तावत्सहसैव कुर्यात्, समर्थस्य क्षेपायोगात्। अतत्स्वभावत्वे तु न कदाचिदपि कुर्यात्। यद्युच्येत समर्थोऽपि क्रमवत्सहकारिसचिवः क्रमेण कार्याणि करोतीति। तदयुक्तम्—विकल्पासहत्वात्। किमस्य सहकारिणः कञ्चिदुपकारमादधति न वा? अनाधानेऽनुपकारितया सहकारिणो नापेक्ष्येरन्। आधानेऽपि भिन्नमभिन्नं वा? उपकारमादध्युः? अभेदे तदेवाहितमिति कौटस्थ्यं व्याहन्येत। भेदे तूपकारस्य तस्मिन् सति कार्यस्य भावात् असति चाभावात् सत्यपि कूटस्थे कार्याऽनुत्पादात् अन्वयव्यतिरेकाभ्यामुपकार एव कार्यकारी न भाव इति नार्थक्रियाकारी भावः। एवं कूटस्थस्य नित्यस्य कारणत्वासम्भवः क्षणवादिभिरुपपादितः॥

तथा—गुणकर्मसामान्यादिपदार्थन्तरापह्नवेऽप्येतादृश्येव युक्तिः श्लोकवार्तिके प्रत्यक्षे (१४० श्लोकः)—

जात्याद्यर्थान्तरं यस्मादतद्रूपेऽपि वस्तुनि।
भवत्यध्यस्य धीः तस्मात् मृगतृष्णादिभिस्समा॥

इति। अत्र व्यक्तिभ्यः अन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वमेव गुणकर्मजात्याद्यपह्नवे युक्तिः सौगतसम्मताऽनूदिता॥

तथा वाक्याधिकरणे (७ श्लोके)—

**वाक्यवाक्यार्थयोर्नापि वस्तुत्वमुपपद्यते ।**
**स्पष्टं पदतदर्थाभ्यां अन्यानन्यानिरूपणात् ॥**

इत्येषैव युक्तिः वाक्यवाक्यार्थयोरपह्नवेऽनूदिता ॥

तथा—योगाचारसिद्धान्ते बाह्यर्थापह्नवेऽप्यभिधीयमाना युक्तिस्सूत्रभाष्ये श्रीशाङ्करेऽनूदिता। (२-२-२८) यथा—"बुध्यारूढेन रूपेणान्तःस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यतेऽसत्यपि बाह्येऽर्थे, बुध्यारोहमन्तरेण प्रमाणादिव्यवहाराऽनवतारात् ॥

कथं पुनरवगम्यतेऽन्तःस्थ एवायं सर्वो व्यवहारः न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति? तदसम्भवादित्याह । स हि बाह्योऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युः तत्समूहा वा स्तम्भादयः । तत्र न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति, परमाण्वाभासज्ञानानुपपत्तेः । नापि तत्समूहाः स्तम्भादयः, तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात् । एवं जात्यादीन्यपि प्रत्याचक्षीत" इति ॥

एतादृशैरुदाहरणैः अन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वमेवापलापयुक्तिः ब्रह्मास्त्रस्थानीया सौगतानामिति स्पष्टमवगतं भवति ॥

अत्र कौमारिलादीनामेवं समाधानम्—वनवादे श्लोकवार्तिके (६३२)—

**तस्मादत्यन्तभिन्नत्वं न स्यादवयवैस्सह ।**
**कैश्चिदव्यतिरिक्तत्वं कैश्चिच्च व्यतिरिक्तता ॥**
**दूषिता साधिता वाऽपि न च तत्र बलाबलम् ।**
**कदाचिन्निश्चितं कैश्चित् तस्मान्मध्यस्थता वरम् ॥**
**ततोऽन्यानन्यते तस्य स्तो न स्तश्चेति कीर्त्यते ॥ इति ।**

तत्रैवोपमानवादे (४४३)—

**न हि शक्त्यात्मना किञ्चिद्सत् जन्म प्रपद्यते ।**
**धर्माणां न च नानात्वमस्ति चावान्तरस्थितिः ॥ इति ।**

तत्रैव शून्यवादे (२९७)—

**अत्यन्तभिन्नताऽस्माभिः नैव कस्य चिदिष्यते ।**
**सर्वं हि वस्तु रूपेण भिद्यते न परस्परम् ॥ इति ।**

एवमन्यत्रापि द्रष्टव्यम् ॥

एवञ्च कारणापेक्षया आश्रयापेक्षया वा भेदाभेदरूपाभ्यामन्यत्वानन्यत्वाभ्यां दुर्निरूपत्वेन सौगतैरपह्नवे आपादिते भेदाभेदयोरविरोधेन तादात्म्यमभ्युपगम्य कुमारिलादिभिः अपलापमपाकृत्य सर्वस्य सत्त्वं प्रसाधितम् । श्रीशङ्कराचार्यैः पुनः ब्रह्ममात्रपरिशेषाय व्यतिरिक्तस्य सर्वस्य निरन्वयोपशमाय च प्रपञ्चस्वरूपस्य कारणापेक्षया तत्त्वान्यत्वाभ्यां दुर्निरूपत्वात् अनन्यत्वाद्वैतापरपर्यायं विलक्षणं तादात्म्यमुररीकृत्य भ्रान्तिसिद्धं अविद्यात्मकं मायामयं अनिर्वचनीयं अनृतं मिथ्या बाध्यं अळीकं अन्यद्वा यत्किञ्चिदुच्यमानं तादृशसर्वात्मकत्वेऽपि नापलापः, अपि तु निरन्वयो विनाशः । विनाशात्परं ब्रह्म केवलं परिशिष्यते इति प्रसाधितमित्यद्वैतसिद्धान्तः ॥

एवञ्च तादात्म्यमितिपदस्य स्वरूपैक्यमिति भेदवादिसम्मतोऽर्थः । भेदाभेद इति अनेकान्तवादिसम्मतोऽर्थः अनन्यत्वमद्वैतमिति च श्रीशङ्कराचार्यसम्मतोऽर्थः । पारतन्त्र्यपराकाष्ठेति श्रीरामानुजाचार्यसम्मतोऽर्थ इति विशेषः ॥

इदमत्रावधारणीयम्—अद्वैतसिद्धान्ते प्रधानभूता युक्तिरेषा सर्वैरनुसृतेति विज्ञायते, या खलु तैस्तैर्वादिभिः यस्य येन येन रूपेण

निरूपणेऽनुपपत्तिरुद्भाव्यते, तस्य तेन तेन रूपेण निरूपणीयत्वस्य परित्यागमात्रम्। सैषा व्यतिरेकदृष्टिः प्रागेव सूचिता। तच्च कुत्र विश्राम्यतीति चेत्केवले दुर्निरूपत्वे । तदपि कुत्र विश्राम्यतीति चेत् बाध्यत्वे तदपि निर्विशेषे भावरूपे ब्रह्मणीति हृदयम् ॥

एवं स्थितायां वस्तुगतौ खण्डनकृता श्रीहर्षेण वितण्डाकथामालक्ष्य दुर्निरूपत्वोद्देशः एवं प्रदर्शितः। यथा—“अथ सर्वासत्त्वे सदसत्पक्षदोषाणामप्यसत्त्वात् अनिर्वचनीयताऽप्यसती स्यादिति चेत्, न वयमेवं पर्यनुयोज्याः, साऽपि कृत्स्नप्रपञ्चपरसर्वशब्दाभिधेयमध्यविनिविष्टैव । परस्यैव तु व्यवस्थया एवं पर्यवस्यति निर्वचनप्रतिक्षेपादानिर्वचनीयत्वम् । विधिनिषेधयोरेकतरनिरासस्येतरपर्यवसितायास्तेनाभ्युपेतत्वात् । ततः परकीयरीत्येदमुच्यते अनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति ॥

वस्तुतस्तु वयं प्रपञ्चसत्यत्वव्यवस्थापनाविनिवृत्ताः स्वतस्सिद्धे चिदात्मनि ब्रह्मतत्त्वे केवलं भरमवलम्ब्य चरितार्थास्सुखमास्महे । ये तु स्वपरिकल्पितसाधनदूषणव्यवस्थया विचारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमः कृपया तेषां भ्रान्तिमपनेतुं तेऽपि कृतार्था भवन्त्विति न साध्वीयं भवतां विचारव्यवस्था भवत्कल्पितव्यवस्थयैव व्याहतत्वादिति । अत एवास्मदुपन्यस्यमानदूषणस्थितिविषयाः पर्यनुयोगाः निरवकाशाः त्वद्व्यवस्थयैव त्वद्व्यवस्थाया व्याहत्युपन्यासात्” इति ॥

अनेन सन्दर्भेण स्वपक्षस्थापनाहीनां परपक्षविदलनमात्रावसानां वितण्डामाश्रित्यानिर्वचनीयत्वस्य उद्देशः परानुग्रह इति सूचितो भवति। तस्यैव स्वप्रयोजनत्वात् तस्यैव स्वपक्षत्वसम्भवात् नेयं वितण्डा कथा भवतीति वात्स्यायनभाष्ये व्यक्तमुक्तम् ॥

सौगतसाङ्कर्यनिरासः.

अथ सर्वेषां वेदान्तानां ब्रह्म सत्यं जगन्मिथ्या इति तात्पर्यवर्णनरूपस्याद्वैतसिद्धान्तस्य साक्षात्प्रतिपक्षभूतं दर्शनं सौगतदर्शनम्। तत्र माध्यमिकदर्शनभूतस्सर्वशून्यवादः ब्रह्म सत्यमित्यंशेन निराचिकीर्षितः। जगन्मिथ्येत्यंशेन बाह्यार्थशून्यवादरूपः विज्ञानवादः निराचिकीर्षितः। अतस्तदुभयवैलक्षण्यं निरूपणीयम्। तत्र सर्वशून्यवादवैलक्षण्यमेवम्—यादृशं शून्यत्वं निरुपाधिकाभावलक्षणं सौगतसम्मतं न हि खलु तादृशं शून्यत्वमद्वैतसम्मतम्। अपि तु सोपाधिकं साधिकरणकं निषेधलक्षणं ब्रह्मपर्यवसानफलम्। तदुच्यते ब्रह्मसिद्धौ श्रीमता मण्डनमिश्रेण—

**लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते।**
**विधानमन्तरेणातो न निषेधस्य सम्भवः॥ इति।**

निरधिकरणकः निष्प्रतियोगिकश्चाभावो नास्तीत्यर्थः॥

तथा शारीरकभाष्ये (३-२-२२) "तस्मात् ब्रह्मावसानोऽयं प्रतिषेधः नाभावावसान इत्यध्यवस्यामः" इति। तत्रैव "तस्मात् ब्रह्मणः रूपप्रपञ्चं प्रतिषेधति परिशिनष्टि ब्रह्मेत्यवगन्तव्यम्" इति। तत्रैव "कल्पितरूपप्रत्याख्यानेन ब्रह्मस्वरूपावेदनमिति निर्णीयते" इति च॥

शून्यवादनिराकरणप्रकरणे (२-२-३१)—"न ह्ययं सर्वप्रमाणसिद्धो लोकव्यवहारः अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्, अपवादाभावे उत्सर्गप्रसिद्धेः" इति॥

गौडपादकरिकाभाष्ये (२-३२) "तथा च सत्यद्वैतस्य वस्तुत्वे प्रमाणाभावात् शून्यवादप्रसङ्गः, द्वैतस्य चाभावात्, न—रज्जुसर्पादिकल्पनाया निरास्पदत्वानुपपत्तिरित्युक्तमेतत्" इति॥

पञ्चपादिकायां (१२ पु) "नाप्यध्यस्तमसदेव, तथात्वे प्रतिभासायोगात् । ननु सर्वमेवेदमसदिति भवतो मतम्? क एवमाह । अनिर्वचनीयानाद्यविद्यात्मकमित्युद्घोषितमस्माभिः । अथ पुनर्विद्योदये अविद्याया निरुपाख्यत्वमङ्गीकृत्यासत्त्वमुच्येत काममभिधीयताम्" इत्यस्ति ॥

भामत्याम् (२-२-३१) "अपि चारोपितं निषेधनीयम् । आरोपश्च तत्त्वाधिष्ठानो दृष्टः, यथा शुक्तिकादिषु रजतादेः । न चेदस्ति किञ्चित्तत्त्वं कस्य कस्मिन्नारोपः । तस्मान्निष्प्रपञ्चं परमार्थसत् ब्रह्म अनिर्वाच्यप्रपञ्चात्मनाऽऽरोप्यते । तच्च तत्त्वं व्यवस्थाप्य अतात्विकत्वेन सांव्यवहारिकत्वं प्रमाणानां बाधकेनोपपाद्यते इति युक्तमुत्पश्यामः" इति ॥

अवैदिकदर्शनसंग्रहे गङ्गाधरवाजपेयिनिर्णयोऽयम्—"विचारासहत्वलक्षणशून्यतैव तत्त्वम्" इति शून्यवादसिद्धान्तः निरूपितः । अत्र अद्वैतसिद्धान्ते तु विचारासहत्वलक्षणशून्यतयाऽन्यत्तत्वं निर्धार्यते इति शून्यतैव तत्त्वमिति पदेन सूचितमिति हृदयम् ॥

न्यायमकरन्दे आनन्दबोधैरेवमुच्यते—(२९२ पु) "न हि निषेधवाक्येषु कस्य चिदात्यन्तिको निषेधः । किन्तु किञ्चित्क्वचित्" इति ॥

श्रीहर्षस्तु खण्डने एवं लिखति प्रथमपरिच्छेदे "एवञ्च सति सौगतब्रह्मवादिनोः को विशेष इति चेदयं विशेषः, यदादिमः सर्वमेवानिर्वचनीयं वर्णयति, यदुक्तं भगवता लङ्कावतारे (११६)—

**बुध्या विवेच्यमानानां स्वभावो नावधार्यते ।**
**अतो निरभिलप्यास्ते निःस्वभावाश्च वर्णिताः ॥ इति ॥**

विज्ञानव्यतिरिक्तं पुनरिदं विश्वं सत्त्वासत्त्वाभ्यामनिर्वचनीयं ब्रह्मवादिन-स्संगिरन्ते, इति । तथा—तदेतत्संवृतिसत्यमिति गीयते" इति ॥

तथा काशीपुस्तके (१०६८ पुटे)—

**गुरुर्धियमभावस्य स्थानेस्थानेऽभिषिक्तवान् ।**
**प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः ॥**

इति पद्यं पठितमस्ति । अभावस्य ज्ञानरूपत्वे भावस्यापि तथा प्रसङ्गा-द्विज्ञानवादान्तःपातस्यादित्यभिप्रायः । एवं शून्यवादवैलक्षण्यमिति दिक्॥

अथ विज्ञानवादवैलक्षण्यं प्रदर्श्यते—विज्ञानवादिना मिथ्या जागरितोपलब्धिः उपलब्धित्वात् स्वप्नोपलब्धिवदित्यनुमानरूपायां युक्तावुक्तायां "वैधर्म्याच्च न स्वप्नादिवत् (२-२-२९)" इत्याचार्येण बादरायणेन युक्तिः प्रदूषिता । वैधर्म्यं च बाधकप्रत्ययलक्षणम् । ततश्चानुमानस्योपाधिरुक्तो भवति । यत्रयत्रोपलब्धौ मिथ्यात्वं तत्रतत्र बाधकप्रत्ययः वर्तते, गगनतलमालिन्याद्युपलब्धिष्वपि यौक्तिको बाधक-प्रत्ययो वर्तत इति साध्यव्यापकत्वम् । व्यवहारदशायां जागरितो-पलब्धीनामबाधितत्वात् पक्षे साधनाव्यापकत्वं च इति बाधकप्रत्ययस्यो-पाधेस्सत्त्वादनुमानरूपमुपलब्धित्वं दुष्टमिति विज्ञनवादः प्रदूषित इति प्रथम वैलक्षण्यं शारीरकभाष्यसम्मतम् ॥

तथाऽत्रैवाधिकरणे "साक्षिणोऽवगन्तुः स्वयंसिद्धतामुपक्षिपता स्वयं प्रथते विज्ञानमित्येष एव मम पक्षः त्वया वाचोयुक्त्यन्तरेणाश्रित इति चेन्न—विज्ञानस्य उत्पत्तिध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात् अतः प्रदीपवद्विज्ञानस्यापि व्यतिरिक्तावगम्यत्वमस्माभिः प्रसाधितम्" इति भाषितमस्ति ॥

गौडपादकारिकाभाष्ये (४-९९) ज्ञानज्ञेयज्ञातृभेदरहितं पर-

मार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम् । यद्यपि बाह्यार्थनिराकरणं ज्ञान-मात्रकल्पना चाद्वयवस्तुसामीप्यमुक्तम् । इदन्तु परमार्थतत्त्वमद्वैतं वेदा-न्तेष्वेव विज्ञेयमित्यर्थः" इति । अत्रानन्दगिरिः—"सौगतमेव भव-ताऽपि संगृहीतमित्याशङ्क्याह— ज्ञानमिति ॥

इमं संदर्भं मनसि कृत्वा आत्मसिद्ध्यादौ यामुनाचार्यादिभिः "अतो वासनाभिधानसमनन्तरप्रत्ययसामर्थ्यादनाद्यविद्यावशाच्च समारो-पितावास्तवग्राह्यग्राहकविकल्पोल्लेखिनी स्वयंप्रकाशा संविदेव परमार्थ-सती । सैवात्मेति प्रकटाः प्रच्छन्नाश्च" इत्यादयः वाक्यविशेषाः प्रयुज्यन्ते ॥

अत्रात्मनो निर्विशेषत्वात् क्षणिकत्वानेकत्वादिविरुद्धानित्यत्वैक-त्वाद्यभावात् को विशेष इत्याशङ्कायामिदं समाधानवाक्यं भवितुमर्हति । यदेतत् पञ्चपादिकायां (४ पु.) "आत्मनो निर्धर्मकत्वेऽपि आनन्दो विषयानुभवः नित्यत्वमिति सन्ति धर्माः, अपृथक्त्वेऽपि चैतन्यात् पृथ-गिवावभासन्ते" इति ॥

तत्रैव (२५ पुटे) ननु नीलादिविषयोऽपि चेदपरोक्षस्वभावः नीलात्मिका संविदित्युक्तं स्यात् । अतस्स एव माहायानिकपक्षस्सम-र्थितः । मैवं—परस्परव्यावृत्तौ नीलपीतावववभासेते । अपरोक्षता तु न तथा, एकरूपावगमात्. विच्छेदावभासेऽप्यतो न तत्स्वभावा" इति ॥

तत्रैव (२८ पु.) "तदेवमहंकर्तुः सदैकरूपावगमात् स्थायित्वेऽ प्यर्थक्रियासम्भवान्न नीलस्य स्वगतापरोक्षत्वमात्रेण माहायानिकपक्षस्सम-र्थ्यते" इति ॥

अत्रेत्थ विवरणम् (७३ पु.) "अस्ति च महान् सिद्धान्तभेदः क्षणिकाद्विज्ञानाद्भेदेन अर्थक्रियासामर्थ्यसत्त्वशून्यं विषयमाहुर्विज्ञानवा-

दिनः । तत्त्वदर्शिनस्तु अद्वितीयात्संवेदनादभेदेऽपि विषयस्य भेदेन अर्थक्रियासामर्थ्यसत्त्वं स्थायित्वं चाऽबाधितमस्तीति वदन्ति " इति ॥

तत्रैव (८४ पु.) " यत्किञ्चित्साधर्म्यमात्रेण सिद्धान्तसाङ्कर्ये मन्त्रार्थवादेतिहासपुराणप्रामाण्यानभ्युपगमात् देवतास्वर्गेश्वरमोक्षानभ्युपगमात् क्षणिकप्रमाणसंबन्धस्य क्षणिकस्यैव सत्त्वाऽभ्युपगमात् लोकायतबौद्धांशद्वयपरिणतः प्राभाकरः । भेदाभेदाभ्युपगमात् मन्त्राद्यप्रामाण्याच्च लोकायतक्षपणकांशद्वयपरिणतो बार्तिककारः ॥

यस्तु कश्चित् क्षपणकपादावनतशिरोबिम्बः तत्त्वदर्शनतन्निष्ठपरमहंसप्रद्वेषतीव्रवायुविक्षिप्तविवेकविज्ञानलवः स्वपरपक्षगुणदोषविभागदूरीकृतविज्ञानः भेदाभेदाभ्यां बन्धमोक्षादिसङ्करमिव कुर्वन् दुर्जनरमणीयां वाचं जल्पति सुगतविज्ञानवादसमानोऽयं वेदान्तवाद इति, सः संप्रदायश्रवणपरिचयशून्यतया दर्शनविवेकमनवबुध्यमानः नापवाद्यः । किन्तु शोचनीय इत्युपेक्षणीयो विद्वाद्भिः " इति ॥

(१६) " अत्र कश्चित् भेदाभेदाभ्यां सर्वसंकरवादी वेदार्थगहनसंप्रदायहीनः दुर्जनरमणीयां वाचं जल्पति " इति ॥

(१७) " अन्यथा सर्वसंकरवादितया क्षपणकशिष्यता चिरकालसमुपार्जिता बाध्येत " इति ॥

(९९) " कर्तृत्वभोक्तृत्वरागद्वेषसुखदुःखादयोऽप्यात्मनि स्वयं प्रकाशा इति बौद्धप्राभाकराः कल्पयन्ति " इति ॥

(१६२) " अत्र सर्वसङ्करवादी पुरस्तात् यज्ञोपवीतत्यागस्यानिर्दिष्टत्वात् ब्राह्मणः कथं अयज्ञोपवीतीति प्रश्नस्य प्रसङ्गाभावात् प्रक्षिप्तमिदं वाक्यमिति जल्पति तस्य तत्त्वदर्शनतन्निष्ठपरमहंसपरिव्राजकद्वेष एवापराध्यति " इति ॥

(२२३) "अत्र सर्वसङ्करवादी न निर्गुणं द्रव्यमस्तीति जल्पति तस्मात् तत्त्वज्ञानप्रद्वेषमात्रमेतत् न निर्गुणं ब्रह्मेति" इति ॥

(२२६) "तस्मान्मन्दमतिसंतोषमात्रप्रयोजनतया बहुवेणुभार-पीडितचेतसाऽयं भेदाभेदपक्षः समादीयते" इति ॥ अत्र बहुवेणुपदेन त्रिदण्डं विवक्षितम् ॥

यस्तु इत्यादयः ग्रन्था एते भास्करभाष्यं हृदि निधाय प्रवृत्ताः। यतस्तदीयभाष्ये एवं वाक्यान्युपलभ्यन्ते (४९ पु.) 'केचित्तु श्रुत्यर्थ-माचार्योक्तिं च पृष्ठतः कृत्वा मायामात्रं स्वबुद्ध्या कल्पयित्वा अन्यदेव दर्शनं रचयन्ति। (८५ पु.) विगीतं छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति" इति (१२४ पु.) ये तु बौद्धमतावलम्बिनो मायावादिनः तेऽप्यनेनैव न्यायेन सूत्रकारेण निरस्ता वेदितव्याः" इत्यादयः वाक्यविशेषाः दृश्यन्ते ॥

एतमेव पन्थानमवलम्ब्य यादवप्रकाशाचार्योऽपि एवं लिखति। यथा—

वेदोऽनृतो बुद्धकृतागमोऽनृतः
प्रामाण्यमेतस्य च तस्य चानृतम्।
बोद्धाऽनृतो बुद्धिफले तथाऽनृते
यूयं च बौद्धाश्च समानसंसदः ॥ इति ॥

इदं हि वचनं श्रुतप्रकाशिकायां महासिद्धान्ते शास्त्रप्राबल्यविचारोपसं-हारे, शतदूषण्यां च चतुर्दशे वादे यादवप्रकाशवाक्यमित्युदाहृतमस्ति ॥

तथैव रामानुजाचार्येणापि श्रीभाष्ये (२-२-२७) "एवं रूपेण सकर्मकेण सकर्तृकेन ज्ञाधात्वर्थेन सर्वलोकसाक्षिकमपरोक्षमवभासमाने-

नैव ज्ञानमात्रमेव परमार्थ इति साधयन्तः सर्वलोकोपहासोपकरणं भवन्तीति वेदवादच्छद्मप्रच्छन्नबौद्धनिराकरणे निपुणतरं प्रपञ्चितम्" इति भाषितमित्यलमनया प्रसक्तानुप्रसक्त्या ॥

"अथ एव प्रपञ्चस्य परमार्थसत्त्वाभावेऽप्यर्थक्रियाकारित्वलक्षणं सत्त्वमभ्युपगतं विवरणकारैः" इति (११८ पु.) न्यायमकरन्दे कथितम् ॥

संक्षेपशारीरके तु परिणामवाद एव साङ्कर्यमुक्त्वा अद्वैतमते साङ्कर्यमेवं परिहृतमस्ति । यथा ब्रह्मपरिणामवादे सौगतमतसाङ्कर्यमापद्यते, विज्ञानस्यैवमाकारश्चतुर्विध इति हि तन्मतम्, तदेतदाह—

**मातृप्रमाणमिति-मेय विभागभिन्नं**
**ब्रह्मैव चेद्भवति तत्र च वर्णयामः ।**
**कूटस्थताऽपहतिरेकरसत्वहानिः**
**शाक्यैश्च सन्धिरिति दूषणमन्यदत्र ॥** इति । १–११७ ॥

ब्रह्मविवर्तवादेऽपि ब्रह्मव्यातिरिक्तस्य सर्वस्यापलापात्सौगतसाङ्कर्यं स्पष्टमेवेत्याशङ्क्यते—

**ननु शाक्यभिक्षुसमयेन समः**
**प्रतिभात्ययं च भवतस्समयः ।**
**यदि बाह्यवस्तु वितथं नु कथं**
**समयाविमौ न सदृशौ भवतः ॥** २–२५ ॥

**यदि बोध एव परमार्थवपुः**
**न तु बोध्यमित्यभिमतं भवति ।**
**ननु चाश्रितं भवति बुद्धमुनेः**
**मतमेव कृत्स्नमिह मस्करिभिः ॥** २–२६ ॥

समाधयिते—

**ननु मातृमानविषयावगतीः**
**अपरस्परं प्रति विभागवतीः ।**

**उपयन् भदन्तमुनिना सदृशः**
**कथमेष वैदिकमुनिर्भवति ॥ २-२७ ॥**

विशदयति—

**परमात्मसंश्रयतमोजनितं**
**प्रविभक्तमेव तु परस्परतः ।**
**स्थिरमभ्युपेतमिह नस्समये**
**ननु मातृमानविषयप्रभृति ॥ २-२८ ॥**

मिथ्यात्वाभ्युपगमात् असत्त्वानभ्युपगमात्, स्थिरत्वाभ्युपगमात् क्षणिकत्वानभ्युपगमात्, लेशतोऽपि न साम्यमिति भावः ॥

भामत्यां तु (२–२–२८) "एवं च न सिद्धसाधनम्, न हि ब्रह्मवादिनो नीलाद्याकारां वित्तिमभ्युपगच्छन्ति, किन्तु अनिर्वचनीयं नीलादीति" इति वैलक्षण्यमुक्तम् ॥

न्यायमकरन्दे (३०५ पु.) "न हि वयं नीलाद्याकारां वित्तिमभ्युपगच्छामः, येन माहायानिकपक्षानुप्रवेशः । किन्तु अनाद्यविद्याविक्रीडितमलीकनिर्भासमाकारं प्रपञ्चमाचक्ष्महे" इति ॥

तथा तत्रैव (१२९) "न खलु नभःस्थलकमलायमानं प्रपञ्चमाचक्ष्महे, येनायमाश्रयो न स्यात्" इति ॥

तत्रैव (६१ पु.) "प्रतिभासमानाकारस्य बहिरपलापे विज्ञानाकार एवायमाश्रितः स्यात् । तथा च माहायानिकपक्षानुप्रवेशो दुर्निवारः स्यात्" इत्यप्युक्तम् ॥

ततश्च बाह्यार्थस्यापलापो नास्तीति निर्णयः । विद्योदयादनन्तरं ब्रह्मव्यतिरिक्तस्य सर्वस्य असत्त्वलक्षणमपलपनमिष्टमेवेति प्रागेवोक्तम् ॥ (१३९)

तत्रैव (२९५ पु.) "तस्मादेषोऽपि माहायानिकपक्षानुप्रवेशो ब्रह्मवादिनां मोह एव । कथमात्यन्तिकमसन्तमविद्याऽपि दर्शयितुमलम्" इति॥

प्रकरणपञ्चिकायां तत्त्वालोके "तस्मादित्यादि, मोह एव" इत्यन्तं वाक्यमस्ति । तदेवानूद्यते मकरन्दे ॥

एवञ्च (१०८)—"अनाद्यविद्याविनिर्मितालीकाकारविज्ञान-विकल्पोदयमन्तरेणाखिलसामर्थ्यविरहिणः असतः तत्र प्रकाशगोचरभा-वानिरूपणात् । तथा च शब्दज्ञानानुपाती वस्तुशून्यो विकल्प इति तद्विदः" इति दर्शनात्,

**सत्त्वे न भ्रान्तिबाधौ स्तः नासत्त्वे ख्यातिबाधने ।**
**सदसद्भ्यामनिर्वाच्याऽविद्या वेद्यैस्सह भ्रमः ॥**

इतीष्टसिद्धौ वेद्यैस्सह भ्रमस्याविद्यारूपत्वकथनाच्च ज्ञानं ज्ञेयमुभयमावि-द्यात्मकमुपगम्यते वेदान्तिभिः । बाह्यैस्तु ज्ञानं परमार्थं ज्ञेयमपरमार्थ-मित्युपगम्यते । तन्नोपपद्यत इत्यर्थस्सिद्ध्यति ॥

**इन्द्रियैरुपलब्धं यत्तत्तत्त्वेन भवेद्यदि ।**
**जातास्तत्त्वविदो बालाः तत्त्वज्ञानेन किं तदा ॥**

इति प्रागुदाहृतम् (५०) वचनम्,

**अस्तित्वं सर्वभावानां यथा बालैर्विकल्प्यते ।**
**यदि ते स्युर्यथा दृष्टाः सर्वे स्युस्तत्त्वदर्शिनः ॥**

इति लङ्कावतारवचनं च (२८२) अत्रानुसन्धेयम् । अलौकिकेनैव तत्त्वदर्शनेन भवितव्यमिति संस्कारः एतेषाम् । इतरेषां तु अलौकिकां-शसंसृष्टेन लौकिकेनैवेति संस्कारः ॥

सर्वास्तिवादिवैभाषिक—सौत्रान्तिक--मतवैलक्षण्यं स्थिरत्वादिकं क्षणभङ्गनिराकरणादिकं च सर्वत्र सर्वैः प्रतानितमिति नास्माकमत्र निरू-पणीयमधिकमस्ति ॥

**इत्थं प्रपञ्चमिथ्यात्वसिद्धान्तो विशदीकृतः ।**
**लक्ष्मीपुरंश्रीनिवासविपश्चिच्चक्रवर्तिना ॥**

इति दर्शनोदये प्रपञ्चमिथ्यात्वदर्शनपरिच्छेदः तृतीयः.

———

# सेश्वरमीमांसा विशिष्टाद्वैतभूमिका.

---

विशिष्टाद्वैतसिद्धान्तं ग्रन्थेऽस्मिन् दर्शनोदये ।
वक्ष्ये सेश्वरमीमांसाऽऽधारं प्राचां वचश्चयैः ॥

प्रतिज्ञा.

अभिवन्द्य महोदारामस्मद्गुरुपरम्पराम् ।
वक्ष्ये सेश्वरमीमांसां विशिष्टाद्वैतभूमिकाम् ॥
आचार्यकृतिसंसर्गः वचोऽस्माकं पवित्रयेत् ।
जाह्नवीजलसंबन्धः रथ्यायास्सलिलं यथा ॥
श्रीमद्रामानुजमतं श्रीबोधायनसम्मतम् ।
एष सेश्वरमीमांसासिद्धान्त इति निर्णयः ॥
पुरा सेश्वरमीमांसापक्ष एव समर्थितः ।
आचार्यजैमिनिमुखैरुपवर्षादिभिस्तथा ॥
ततश्च शबरस्वामिप्रमुखैः ग्रन्थकर्तृभिः ।
निरीश्वरीकृता सैषा मीमांसेति विनिश्चिता ॥
यतः कार्यैकनिष्ठानां व्याख्यातॄणां च काचन ।
वेदोपराश्च वेदान्ता इत्युक्तिः परिदृश्यते ॥
ततः कुमारिलगुरुप्रमुखैः सेश्वरीकृता ।
श्रूयतां वार्तिकारम्भे पद्यं कौमारिलं यथा ॥
प्रायेणैव हि मामांसा लो॰े लोकायतीकृता ।
तामास्तिकपथे कर्तुं मयं यत्नः कृतस्त्विति ॥
वृत्तिकारस्तु यः पूर्वोत्तरमीमांसयोरपि ।
एष एवोपवर्षाख्यः बोधायन इति श्रुतः ॥

अयमंशः स्फोटवादे वेदान्तार्यैर्विनिश्चितः ।
श्रीभाष्यतत्त्वटीकायां विदितं विदुषामिदम् ॥
तत्र कौमारिले ग्रन्थे तथा प्राभाकरेऽपि च ।
एष सेश्वरमीमांसापक्षः स्पष्टं प्रकाश्यते ॥
परमात्मप्राप्त्यवस्थं पुनरावृत्तिवर्जितम् ।
मोक्षं बोधायनमतं साक्षात्प्राह कुमारिलः ॥
तथा मोक्षोपायमपि ज्ञानं कर्मसमुच्चितम् ।
वृत्तिकृन्मतमेवैतत् स्वीचक्रे तन्त्रवार्तिके ॥
जीवोऽप्यात्मा श्रुतः सर्वकामाप्त्यर्हस्स्वभावतः ।
तथैवाङ्गीकृतोऽपूर्वाधिकृतौ तन्त्रवार्तिके ॥
ज्ञानैकाकारवत्त्वेन जीवानामैक्यगीरिति ।
तत्रैव स्पष्टमाख्यातं भट्टाचार्येण धीमता ॥
पुराणवचसामात्माऽद्वैतापातप्रतीतिनाम् ।
अर्थो निरूपितः प्रायः प्रकाराद्वैतसम्मतः ॥
ब्रह्मणा परमं साम्यं मुक्तानामित्यपीरितम् ।
भट्टप्रबन्धतत्त्वज्ञैः पार्थसारथिसूरिभिः ॥
स्वयं प्रकाशत्वमपि जीवानां वृत्तिकृन्मतम् ।
शाबरोऽप्यनुवादोऽत्र स्वसंवेद्य इति श्रुतः ॥
जीवात्मनो नित्यधर्मभूतैकज्ञानयोगिता ।
शब्दनित्यत्वाधिकृतौ मुक्तकण्ठं निरूपिता ॥
अन्तर्यामिब्राह्मणार्थः ग्रहसम्मार्गनिर्णये ।
परमात्मा ब्रह्म सर्वशरीरीत्यपि वर्णितः ॥
सांवृतापरपर्यायव्यावहारिकसत्यता ।
मिथ्यात्वलक्षणा सैषा प्रपञ्चस्य निवारिता ॥
असत्यतोऽपि सत्यस्य प्रतिपत्तिरपाकृता ।
निरालम्बनवादेऽत्र महतो हि निबन्धतः ॥
तथा ब्रह्मपरिणामवादोऽपि प्रतिषेधितः ।
भर्तृप्रपञ्चादिमतस्तथा भास्करसम्मतः ॥

तथाऽविद्यावादमपि प्रत्याख्याति कुमारिलः ।
स एव वादः प्रायेण संस्कृतोऽद्य प्रवर्तते ॥
भावान्तराभावमुखाः प्रमेयाश्चोररीकृताः ।
तथा प्राभाकरमतेनोपजीव्यांशनिर्णयः ॥
संस्थानजातिपक्षश्च प्रभाकरगुरोर्मतः ।
एष शालिकनाथोक्तः तथा श्रीभाष्यकृन्मतः ॥
यस्सत्ताद्वैतसिद्धान्तः श्रीमन्मण्डनसम्मतः ।
यथा शालिकनाथेन दूषितोऽनूदितस्तथा ॥
ब्राह्मणत्वादिजातीनां सन्ततिप्रभवात्मता ।
या च शालिकनाथोक्ता सैषा यामुनसम्मता ॥
सैव सेश्वरमीमांसादिष्वाचार्यैर्निरूपिता ।
निर्विकल्पाध्यक्षधीरप्यनुवृत्त्यग्रहात्मिका ।
धर्मधर्मिद्वयग्राहिणीत्यपि प्रतिपादिता ॥
यथार्थख्यातिपक्षश्च योऽसावख्यातिलक्षणः ।
प्रपञ्चसत्यतावादिसाङ्ख्यैरङ्गीकृतः पुरा ॥
प्रभाकरैरङ्ग्यकारि स एव हि परिष्कृतः ।
स एवानुगता मार्गः मीमांसागुरुगौरवात् ॥
इत्थमर्था बहुविधाः मिथस्साधारणाः स्थिताः ।
विस्तरस्त्वस्य पुरतः प्रमेयः परिदृश्यताम् ॥
तथात्र संमतो मोक्षोन्यायभाष्येऽप्यनूदितः ।
परमात्मस्वरूपेऽपि संवादः परीदृश्यते ॥
कार्यकारणभावांशेऽप्यनुवादोऽवधार्यते ।
न्यायाचार्यानुवादोऽपि सिद्धान्तस्यास्य दृश्यते ॥
भक्तिमार्गो मोक्षहेतुः पातञ्जलसमादृतः ।
पर्यग्राहीह सिद्धान्ते इत्यप्यत्र प्रदर्श्यते ॥
श्रीशाङ्करानुवादाश्च सिद्धान्तांशार्थगोचराः ।
सूच्यन्ते प्रायशो मुख्याः ग्रन्थविस्तरभीतितः ॥

तथा भास्करभाष्यादिग्रन्थस्थांशाश्च सूचिताः ।
विचित्राण्युदयन्त्येवं दर्शनानीह भूयसा ॥
इत्थं सेश्वरमीमांसासिद्धान्ते किल भूयसाम् ।
स्यात्सधर्मत्वमित्यर्थ मुपदेष्टुमुपक्रमः ॥

तत्र केचिद्ग्रन्थकृतः संप्रदायप्रसिध्यर्थं स्वीयपूर्वाचार्यप्रबन्धान् तद्वाक्यविशेषांश्च समुदाहृत्य प्रबन्धान् प्रणयन्ति । अपरे त्वेनं पन्थानं नाद्रियन्ते । नैतावता तेषां प्रबन्धाः स्वोत्प्रेक्षितमात्रार्था इति युक्तं न मन्तुम् । प्रपञ्चेऽस्मिन् तादृशस्य प्रबन्धस्य कस्याप्यनवगमात् । अन्ततः प्राचीनच्छायामाश्रित्येव प्रवृत्ता इति विमर्शकप्रवराणामतिरोहितम् । तस्मादनुकूलं प्रतिकूलं वा बिम्बं समाश्रित्यैव प्रतिबिम्बावतारः । परिष्कारांशस्तु सर्वत्रास्ति । कवीनामपि महतामेष एव न्यायः ॥

वृत्तिकारः.

तत्र प्रारम्भे श्रीभाष्ये "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति प्राथमिकी प्रतिज्ञा ॥

वेदार्थसंग्रहे तु "भगवद्बोधायन टङ्क द्रमिड गुहदेव कपर्दि भारुचि प्रभृत्यविगीतशिष्टपरिगृहीतपुरातनवेदान्तव्याख्यानसुव्यक्तार्थश्रुतिनिकरनिदर्शितोऽयं पन्थाः" इति विशिष्टाद्वैतसम्प्रदायः प्रकाशितः ॥

अत्र भगवान् बोधायनाचार्यः पूर्वोत्तरभागविभक्तस्य विंशतिलक्षणस्य कृत्स्नस्य मीमांसाशास्त्रस्य वृत्तिकार इति, स एवोपवर्षाचार्य इत्यपि प्रसिद्ध इति प्रदर्शयिष्यामः—तस्य चैतस्य भगवतो बोधायनाचार्यस्य सम्मतः सेश्वरमीमांसापक्ष इत्यत्र "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति वृत्तिकारवाक्यं श्रीभाष्योदाहृतं मुख्यं प्रमाणम् ॥

स एव उपवर्षापरनामा बोधायनाचार्य इत्यत्र श्रीभाष्यतत्त्वटीकायां श्रीवेदान्ताचार्यप्रणीतायां जिज्ञासाऽधिकरणे स्फोटवादे—"अत्र शाबरं—गौरित्यत्र कश्शब्दः? गकारौकारविसर्जनीया इति भगवानुपवर्ष इति । वृत्तिकारस्य बोधायनस्यैव हि उपवर्ष इति स्यान्नाम" इति वाक्यं मानम् । अत्र स्यान्नामेति निर्देशात् संभावनामात्रमिति केचिदुल्लिखन्ति । तर्हि बोधायनस्यैव हीति निर्देशोऽपरिचिन्तितस्स्यात्, नाम स्यादेवहीति योजना ॥

अपि च सौगतसिद्धान्तप्रवचनरूपेषु क्रिस्तशक द्वितीयशतके प्रवृत्तेषु मणिमेखलाप्रभृतिषु द्राविडभाषाप्रबन्धेषु कृतकोटिपदनिर्देशोऽस्ति । तथा अनन्तशयनमुद्रिते प्रपञ्चहृदयाख्यप्रबन्धे (३१ पुटे,) "तस्य विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन प्रणीतम्" इति लिखितमस्ति । स च प्रपञ्चहृदयप्रबन्धः अद्वैतसिद्धान्ताभिमानशालिना भास्करभाष्यादनन्तरं प्रणीत इति स्फुटं विज्ञायते । श्रीरामानुजभाष्यात्प्राग्वा पश्चाद्वेति निर्धारयितुं न शक्यते । तथापि बोधायनो भगवान् वृत्तिकर्तेत्यंशः परं परैरप्यङ्गीकृत इति युक्तं वक्तुम् ॥

"उपवर्षो हलभूतिः कृतकोटिरयाचितः" इति निघण्टुः त्रिकाण्डशेषे केशवनिघण्टौ च दृश्यते । तथा च बहोः कालात् उपवर्षकृतकोट्योरैक्ये कृतकोटिबोधायनयोरैक्ये च व्यवहारमवलोक्यैव भगवान् रामानुजाचार्यः श्रीमान्निगमान्ताचार्यश्च पूर्वोक्तरीत्या प्रतिपादयामासतुः ॥

श्रीमान् रामानुजाचार्योऽप्येतादृशोपवर्षवृत्तिरूपाया एव बोधायन वृत्तेस्साक्षात्करणार्थं बहुविधं श्रममन्वभवदिति तच्चारित्रविद्वांसः अद्यापि कथयन्ति, यस्मात् वृत्तिकारसम्मतस्य पूर्वाचार्यपरिगृहीतस्य सेश्वरमीमांसापक्षस्य प्रवचनायैवाचार्योऽसौ अवातरदिति भूयसी प्रसिद्धिः ॥

सोऽयमुपवर्षः पूर्वमीमांसाया वृत्तिकार इति औत्पत्तिकसूत्रे "वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयांचकार तस्य निमित्तपरीष्टिरित्येवमादिम्" इत्यादिना शाबरभाष्येण स्पष्टमवगम्यते । अत्र वृत्तिकारमतानुसारेण सूत्रत्रयमन्यथा व्याख्यातीति पार्थसारथिमिश्राद्याः आहुः ॥

अत्र वृत्तिकारमतानुसारी ग्रन्थभागः तृतीयसूत्रव्याख्यानमारभ्य "कर्मैके तत्र दर्शनात्" इत्यन्तस्य षष्ठस्य सूत्रस्य व्याख्यानप्रारम्भपर्यन्तः । आत्मवादसमाप्त्यन्त इति निर्णयः । तदन्तरे निरालम्बवादः शून्यवादः अनुमानं शब्दः उपमानं अर्थापत्तिः अभावः चित्राक्षेपः सम्बन्धाक्षेपः स्फोटवादः आकृतिवादः वनवादः सम्बन्धाक्षेपपरिहारः चित्राक्षेपपरिहारः आत्मवादः इत्येते पञ्चदश प्रधानभूता अर्था निरूपिताः ॥

भाष्यकारमतरीत्या एकसूत्रत्वेनाभिमतं औत्पत्तिकसूत्रं पञ्चधा प्रविभज्य वृत्तिकारमतरीत्या आत्मवादसमाप्त्यन्तेन ग्रन्थेन व्याख्यातम्। तस्मात् वृत्तिग्रन्थः आत्मवादसमाप्त्यन्त इति सिद्धान्तः । ततश्चात्रोपवर्षसम्मता बहवोऽर्थाः शबरस्वामिनाऽनूदिताः श्रीभाष्यपरिगृहीता इत्यावेदयितुं ग्रन्थविभागपरिष्कारः ॥

यद्यपि मध्ये स्फोटवादे "अथ गौरित्यत्र कश्शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः" इति पाठो दृश्यते । तत्र पूर्ववाक्यं सिद्धान्तवादिवचनम् । आस्तां तावत्सम्बन्धः शब्दस्वरूपमेव तावत्कीदृशमिति पृच्छाम इति तस्यार्थः । तस्योत्तरमिदं गकारेत्यादि द्वितीयं वाक्यम्। अत्रोपवर्ष इति पदमस्ति औपवर्षे ग्रन्थे उपवर्षग्रहणं नानुवादो भवितुमर्हतीति शङ्क्येत । तथापि बादरायणबोधायनादिग्रन्थेषु "भगवान् बादरायणः, भगवान् बोधायनः" इत्यादिनिर्देश-

वद्युज्यत इति पराशरमाधवीये पराशरप्रयुक्तपराशरपदप्रयोगसमर्थनसंदर्भ-संस्कृतमतयः प्राहुः। मीमांसकास्तु—नायं ग्रन्थः अक्षरशः वृत्तिग्रन्थानुवादः, किंतु तन्मतेन व्याख्यानान्तरमिति व्याख्यातृभिः स्फुटमभिधानात् न शङ्कावकाश इति प्राहुः ॥

तथाचोपवर्षाचार्यः कृतकोट्यभिधानां पूर्वमीमांसाशास्त्रस्य वृत्तिं चकारेत्यत्र न विप्रतिपत्तिः। एष एवोत्तरमीमांसाशास्त्रस्य शारीरकनाम्नोऽपि वृत्तिं चकारेत्यत्र प्रमाणं प्रदर्शयामः। श्रीशाङ्करशारीरकभाष्ये (३-३-५३) "एक आत्मनश्शरीरे भावात्—इह देहव्यतिरिक्तस्यात्मनः सद्भावस्समर्थ्यते बन्धमोक्षाधिकारसिद्धये। न ह्यसति देहव्यतिरिक्तात्मनि परलोकफलाश्चोदना उपपद्येरन् कस्य वा ब्रह्मात्मत्वमुपदिश्येत ॥

ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनः अस्तित्वमुक्तम्। सत्यमुक्तं भाष्यकृता। न तु तत्रात्मास्तित्वे सूत्रमस्ति। इह तु स्वयमेव सूत्रकृता तदस्तित्वं आशङ्कापूर्वकं प्रतिष्ठापितम्। अत एवाचार्येण शबरस्वामिना प्रमाणलक्षणे निर्णीतम्। अत एव भगवता उपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्यामः इत्युद्धारः कृतः। (अपकर्षस्य निवृत्तिरुद्धारः) इह चेदं चोदनालक्षणेषु विचार्यमाणेषु आत्मास्तित्वं विचार्यते कृत्स्नशास्त्रशेषत्वप्रतिपादनायेति" इति पाठः दृश्यते ॥

भास्करभाष्येऽपि "अत एवोपवर्षाचार्येणोक्तं प्रथमे पादे आत्मवादन्तु शारीरके वक्ष्यामः" इति च पाठः ॥

श्रुतप्रकाशिकायां "शारीरके वक्ष्याम इति वृत्तिकारोक्तिस्तु न देहातिरेकमात्राभिप्राया। किं तु जडत्वज्ञानात्मकत्वस्थूलत्वविभुत्वाणुत्वाभिप्राया मन्तव्या" इति निर्देशोऽस्ति, तेनास्मिन् अधिकरणे श्रीभाष्यस्य

वृत्तिग्रन्थस्य चापाततः प्रतीयमानोऽननुगमः परिहृतः । यतः नेदमधिरणं वृत्तिकृतोऽपि देहात्मभेदसमर्थनपरमित्यभिमतमित्यभिप्रायः प्रदर्श्यते। शारीरके वक्ष्याम इति वाक्यस्य नेदमेवाधिकरणं स्थलमिति भावः। अनेन सन्दर्भेण भगवानुपवर्षः कृत्स्नस्य मीमांसाशास्त्रस्य वृत्तिकार इति निर्णीतोऽयमंशः ॥

शारीरकशास्त्रस्योपवर्षाचार्यवृत्तौ अथातो ब्रह्मजिज्ञासा इतिसूत्रवृत्तिः एवं स्यादित्यपि तर्कयामः । यथा—"तत्राथातश्शब्दौ प्रथम एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्य अनन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः । अत इति पूर्वनिर्दिष्टस्यैवार्थस्य हेतुतामाचष्टे ब्रह्मजिज्ञासां प्रति" इति । अयं ग्रन्थः टीकायां पञ्चपादिकायां तृतीयवर्णकेऽनूदितो दृश्यते। तथा "वृत्तात्कर्माधिगमात्" इत्यंशस्यार्थस्तत्रैवानूदितोऽस्ति। "वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति हि वृत्तिवाक्यं श्रीभाष्येऽनूदितं दृश्यते । तस्माद्वृत्तिकारः उपवर्षापराभिधानः बोधायनाचार्यः सेश्वरमीमांसापक्षं प्राकाशयत्। तमेव पक्षमवलम्ब्य संप्रदायपरम्परया श्रीमान् रामानुजाचार्यः विशिष्टाद्वैतसिद्धान्तं प्रवर्तयामासेति सिद्धान्तः स्फुटीक्रियते ॥

इदमपि प्रसङ्गादत्रावधारणीयम्—उत्तरमीमांसाशास्त्रस्य शारीरकपदेन व्यवहारः बोधायनोपज्ञमित्यपि विज्ञायते । तथाहि—"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति बोधायनवाक्यं श्रीभाष्येऽनूदितमस्ति । "शारीरके वक्ष्यामः" इत्युपवर्षवाक्यं च शाङ्करेऽनूदितमस्ति । तमेव संप्रदायमवलम्ब्य "वथमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः" इत्यप्यध्यासभाष्यान्ते भाषितम् ॥

तस्य पदस्य विवरणं तु श्रीभाष्ये आनन्दमयनये "अत एवेदं

परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारीरकमित्यभियुक्तैरभिधीयते" इति भाषितम्। शारीरपदं च "शारीर आत्मा" इति श्रुतौ ब्रह्म परतया श्रुतमिति सर्वसम्मतोऽर्थः। अतः बोधायनवृत्तिः सर्वोपजीव्येति॥

मोक्षः

अथ चैतादृशीमाचार्योपवर्षप्रणीतां वृत्तिमवलम्ब्य पूर्वमीमांसासूत्राणामाचार्यशबरस्वामिना भाष्यं प्राणीयत। तस्य च भाष्यस्य सत्सु बहुषु व्याख्यानेषु श्रीमता कुमारिलभट्टाचार्येण वार्तिकं व्यरचि। वार्तिकं नाम—

**उक्तानुक्तदुरुक्तादिचिन्ता यत्र प्रवर्तते।**
**ग्रन्थं तं वार्तिकं प्राहुः ग्रन्थभेदं विपश्चितः॥**

इति प्रसिद्धवार्तिकव्याख्यानारम्भेषु लिखितं पश्यामः। तस्मिंश्च वार्तिके प्रथमलक्षणे प्रथमपादे श्लोकवार्तिकाभिधाने अहमर्थस्यैवात्मत्वं प्रसाध्यते प्रत्यभिज्ञाप्रत्यक्षसिद्धं चार्वाकादिसकलमतनिरासपूर्वकं यथाभाष्यम्। आत्मवादान्ते श्लोकोऽयं च पठ्यते—

**इत्याह नास्तिक्यनिराकरिष्णुः**
**आत्मास्तितां भाष्यकृदत्र युक्त्या।**
**दृढत्वमेतद्विषयश्च बोधः**
**प्रयाति वेदान्तनिषेवणेन॥**

इति। अत्र वेदान्ताभ्यासेन देहातिरिक्तात्मनिश्चयः दृढः संशयविपर्ययाद्यसहः भवतीत्युक्तम्। एतावता वेदान्तानां प्रामाण्याभ्युपगमस्सूचितः। प्राधान्यं च॥

वैशेषिकैस्तु युक्तिप्राधान्यवादिभिः—आत्मनि मानसप्रत्यक्षेण गृहीते अनुमानेन युक्तिलक्षणेन प्रत्ययः दृढो भवतीत्युच्यते। वैदिकैस्तु युक्त्या गृहीते आत्मनि श्रुत्या प्रत्ययो दृढो भवतीत्युच्यते। वैशेषिकसूत्रं तु—"दृष्टे आत्मनि लिङ्गे एक एव दृढत्वात्प्रत्यक्षवत्प्रत्ययः (२–२–११) इति। अयमर्थः—दृष्टे मनसा गृहीते आत्मनि लिङ्गे अनुमाने सति

दृढत्वात् प्रत्यक्षवत् अप्रामाण्यादिशङ्काकलङ्करहितचाक्षुषादिप्रत्यक्षवत् प्रत्ययः भवतीति ॥

ननु वेदान्तश्रवणादिना देहातिरिक्तात्मनिश्चयदार्ढ्यकथनमात्रेण वेदान्तानां परस्मिन् ब्रह्मणि तात्पर्यं अभ्युपगतमिति कथं निश्चीयते । कार्यवाक्यार्थवादिभिरेव कैश्चिन्मीमांसकैः जरद्वैदिकैः "वेदोषराः वेदान्ताः" इत्यभिहितत्वादिति चेत्, न—तन्त्रवार्तिके (२४० पु.) व्याकरणाधिकरणे तैरेव भट्टाचार्यैः स्वाभिमतस्य परंपरासमागतस्य सिद्धान्तस्य एवमभिधानात् । तथाहि—

**"सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।**
**पराङ्ग चात्मविज्ञानादन्यत्रेत्यवधारणात् ॥**

आत्मज्ञानं हि संयोगपृथक्त्वात् क्रत्वर्थं पुरुषार्थत्वेन ज्ञायते । तेन विना परलोकसाधनेषु कर्मसु प्रवृत्तिनिवृत्त्यसम्भवात् ॥

तथा—य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः । तथा—मन्तव्यो बोद्धव्यः । तथा—आत्मानमुपासीत इति कामवाद-लोकवाद वचनविशेषैः जिज्ञासामननसहितात्मज्ञानकेवलावबोधपर्यन्त-स्पष्टात्मतत्त्वज्ञानविधानापेक्षितवाक्यान्तरोपात्तद्विविधाभ्युदय[1] निश्श्रेयस-रूपफलसम्बन्धः ॥

स सर्वांश्च लोकानाप्नोति । तरति शोकमात्मवित् । तथा–स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ते तेन पितृलोकेन सम्पन्नो महीयते इत्यादिना योगजन्याणिमाद्यष्टैश्वर्यफलानि वर्णितानि । तथा–स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते, इत्यपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थाफलवचनम्" इति ॥

---

[1] द्विविधस्याभ्युदयस्य निःश्रेयसस्य च इति न्यायसुधाव्याख्या ।

अत्रात्मज्ञानपदेन केवलजीवात्मज्ञानं वा, उत अन्तर्यामिपर्यन्तात्मज्ञानं वा विवक्षितमिति विचारस्समुदेति । तत्र केवलकर्मकाण्डप्रामाण्यवादिनो निरीश्वरमीमांसका परलोकसाधनेषु कर्मसु देहातिरिक्तात्मज्ञानं विना प्रवृत्त्यसम्भवात् जीवात्मज्ञानमेव विवक्षितमिति यद्यपि प्राहुः ॥

उपनिषदामपि प्रामाण्यवादिनः सेश्वरमीमांसकास्तु—निखिलजगदेककारणभूतं सर्वज्ञं सर्वशक्तं परमकारुणिकं सर्वान्तर्यामिणं सर्वशरीरिणं परमात्मानमभ्युपगच्छन्तीति अन्तर्यामिपर्यन्तमात्मज्ञानमेव विवक्षितमिति प्राहुरित्यभ्युपगन्तव्यम् । यतः—"य आत्माऽपहतपाप्मा" इत्यादिकं छान्दोग्यवाक्यमुपादित्सतां "स खल्वेवं वर्तयन् यावदायुषम्" इति तस्या एवोपनिषदः समाप्तिवाक्यं च निर्दिष्टवतां "ब्रह्मलोकमभिसम्पद्यते" इत्यस्य वाक्यस्य ब्रह्मैव लोको ब्रह्मलोक इत्यर्थमभिप्रेत्य परमात्मप्राप्त्यवस्थाफलपदं प्रयुक्तवतां भट्टाचार्याणां विपरीताभिप्रायकल्पनमनवकाशमित्यवधेयम् ॥

ततश्चानेन व्याकरणाधिकरणवचनेन अणिमाद्यष्टैश्वर्यसिद्धिः सत्यसङ्कल्पत्वं सत्यकामत्वं ब्रह्मलोकाभिसम्पत्तिपूर्वकं अपुनरावृत्तिलक्षणं परमात्मप्राप्तिरूपं निश्श्रेयसपदवाच्यं मोक्षस्वरूपं च स्फुटमङ्गीकृतमित्यवधार्यते ॥

## मोक्षसाधनम्.

ततश्चात्रैव—एतेषामुपनिषद्वाक्यानामर्थवादत्वशङ्कां निराकृत्य मोक्षसाधनं च ज्ञानं कर्मसमुच्चितमिति स्पष्टमाह—"अप्रकरणगतत्वेनैकान्तिकक्रतुसम्बन्धाभावाच्च नाञ्जन—खादिर—स्रुवादिफलश्रुतिवदर्थवादत्वम् । न च ज्ञानविधानेन कर्मसम्बन्धवारणम् । प्रत्याश्रमवर्णनियतानि नित्यनैमित्तिककर्माण्यपि पूर्वकृतदुरितक्षयार्थं अकरणनिमित्तानागतप्रत्यवायपरिहारार्थं च कर्तव्यानि । न च तेषां भिन्नप्रयोजनत्वात् भिन्नमार्गत्वाच्च बाध-विकल्प-परस्पराङ्गाङ्गिभावास्सम्भवन्ति" इति ॥

अनेन वचनेन समुच्चयवादोऽङ्गीकृत इति ज्ञायते । स एव हि यादवप्रकाशादिसम्मतः जरन्मायावादिभर्तृप्रपञ्चमण्डनमिश्रादिसंमतश्च । स्पष्टीकृतं चैतत् राणकाभिधाने न्यायसुधाभिधाने च तन्त्रवार्तिकव्याख्याने सोमेश्वरभट्टाचार्येण बृहट्टीकावचनैः । यथा—

**ननु निश्श्रेयसं ज्ञानात् बन्धहेतोर्न कर्मणः ।**
**नैकस्मादपि तत्किं तु ज्ञानकर्मसमुच्चयात् ॥**
**नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।**
**ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥**
**वैराग्यात्पक्वविज्ञानः कैवल्यं लभते नरः ।**
**न च ज्ञानविधानेन कर्मसम्बन्धवारणम् ॥ इति ॥**

अनेन ग्रन्थेन परमात्मप्राप्तिरूपपरमपुरुषार्थं प्रति कर्मसमुच्चितमुपासनात्मकं ज्ञानं साधनमिति स्पष्टम्। अयं सिद्धान्तः श्रीमद्रामानुजसिद्धान्तादनतिभिदुरमिति सुव्यक्तमेतत्सिद्धान्तपरिश्रमशालिनां विपश्चिदपश्चिमानां सारासारविवेकविदाम् ॥

आक्षेपपरिहारः.

ननु श्लोकवार्तिकग्रन्थे ह्येतद्विरुद्धं मतमवगम्यते । तथाहि—संबन्धाक्षेपपरिहारवादे १०२ श्लोकतः—

**कर्मक्षयो हि विज्ञानादित्येतच्चाप्रमाणकम् ।**
**फलस्याल्पस्य वा दानं राजपुत्रापराधवत् ॥**
**कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ।**
**आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् ॥**
**विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः ।**
**साऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरम् ॥**
**तस्मात्कर्मक्षयादेव हेत्वभावेन मुच्यते ।**
**न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् ॥**

तत्र ज्ञातात्मतत्त्वानां भोगात्पूर्वक्रियाक्षये ।
उत्तरप्रचयाभावात् देहो नोत्पद्यते पुनः ॥
मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात्प्रत्यवायजिघांसया ॥
सर्गप्रलयविज्ञानं समस्तजगदाश्रयम् ।
स्वशरीरविदां पुंसां नाधिक्येनोपयुज्यते ॥
तस्मादद्यवदेवात्र सर्गप्रलयकल्पना ।
समस्तक्षयजन्मभ्यां न सिद्ध्यत्यप्रमाणिका ॥
सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पना ।
न च धर्मादृते तस्य भवेल्लोकाद्विशिष्टता ॥
एवं ये युक्तिभिः प्राहुः तेषां दुर्लभमुत्तरम् ।
अन्वेष्यो व्यवहारोऽयं अनादिर्वेदवादिभिः ॥

इत्यादि ॥

तथा अर्थवादाधिकरणे—" क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यम् " इति । तथा स्मृत्यधिकरणान्ते—" याश्चैताः प्रधानपुरुषेश्वरपरमाणुकारणप्रक्रियाः सृष्टिप्रलयादिरूपेण प्रतीताः तास्सर्वाः मन्त्रार्थवादज्ञानादेव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः । प्रयोजनं च स्वर्गयागाद्युत्पाद्योत्पादकविभागज्ञानम् । सर्गप्रलयोपवर्णनमपि दैवपुरुषकारप्रभावप्रविभागदशनार्थम् । सर्वत्र हि तद्बलेन प्रवर्तते तदुपरमे च उपरमतीति " इति ॥

अत्रोच्यते— श्लोकवार्थिकग्रन्थे

एवं ये युक्तिभिः प्राहुस्तेषां दुर्लभमुत्तरम् ।
अन्वेष्यो व्यवहारोयमनादिर्वेदवादिभिः ॥

इत्युपसंहारेऽभिधानात् केवलयुक्त्याश्रयणेन जगदनादिवादेन वेदानादितास्थापनार्थं अतिवादाः कृता इति स्वयमेवासूचयत् । श्रुतिशरणतायां

तु व्याकरणाधिकरणप्रोक्तः एव सिद्धान्तः इति परमार्थः इत्यपि सूचयामास । अतो न विरोधः ॥

एवं विरोधपरिहारे स्फुटतरं प्रतीयमानेऽपि सुचिराभ्यस्तसंकेतवासनाबलेन केचिदेवं परिहारमार्गं कल्पयन्ति । यथा—न्यायसुधायां सोमेश्वरभट्टीयायां (३२६ पु.) व्याकरणाधिकरणे—"अत एव आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम्, इत्येतच्छब्दप्रयोगेण संसारिरूपात्मज्ञानस्यैव मोक्षार्थत्वनिरासेन कर्मप्रवृत्तिहेतुतोक्ता । असंसारिरूपात्मज्ञानस्य तु कर्मप्रवृत्यर्थत्वायोगात् पुरुषार्थतैव युक्तेत्याशयः" इति प्रागुक्तपूर्वपक्षसमाधानं दृश्यते । तथासति श्लोकवार्तिकोक्तस्य मोक्षस्वरूपस्य तत्साधनस्य च असंगतत्वापत्तिः । तस्मात् अयं मार्गः न वार्तिककृदाशयचिन्ताचातुर्यमूलः । अपि तु वासनाचातुर्यमूलः ॥

तथा—श्लोकवार्तिकव्याख्याने सम्बन्धाक्षेपपरिहारे पार्थसारथिमिश्राणां परिहारक्रमोऽपि भट्टसोमेश्वरक्रमस्य मूलभूतः । यथा—(१०२-१०४ श्लो.) "द्विविधं ह्यात्मज्ञानमुपनिषत्सूपदिश्यते देहाद्विवेकज्ञानं अविनाशी वा अरे अयमात्मेत्यादि । अथात्मानमुपासीतेति प्राणायामाद्यङ्गोपेतमुपासनात्मकं ज्ञानमिति । उपासनात्मकस्य तु ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावात् अदृष्टापेक्षायां श्रुत्याद्यभावेन क्रत्वर्थत्वाभावात् वाक्यशेषोपनिताभ्युदयनिश्श्रेयसफलतया रात्रिसत्रवत्पुरुषार्थत्वमेवेति व्याकरणाधिकरणे वक्ष्यति" इति च ॥

### परमात्मा.

एवं च श्रीमान् कुमारिलभट्टाचार्यः सेश्वरमीमांसालक्षणविशिष्टाद्वैतसिद्धान्तवेदान्ती, न पुनरद्वैतासिद्धान्तवेदान्तीति स्पष्टमवगतमपि पुरः प्रदर्श्यमानैः अनन्यथासिद्धैः हेतुभिः विशदयितुं प्रारभामहे । तत्र पर-

मात्मविषयः विचारः प्रस्तूयते–(७१४) तन्त्रवार्तिकम् (३–१–१३) "एकत्वमुक्तमेकस्य श्रुतिसंयोगात्" ग्रहं सम्मार्ष्टीत्यत्र किमेकस्य ग्रहस्य सम्मार्गः, उत प्राकरणिकग्रहमात्रस्येति । तत्रोद्दिश्यमानस्य किं संख्या विवक्ष्यते उत नेति संशयः ॥

ननु च वेदवाक्येषु अयुक्तोऽयं विचारः । कुतः?—

**प्रतीतिव्यतिरेकेण विवक्षाऽन्या न विद्यते ।**
**नित्यत्वाद्वेदवाक्यानां श्रुतोऽतो नाविवक्षितः ॥**

यानि पुरुषप्रणीतानि तानि पुरुषविवक्षाधीनवचनत्वात् संभवत्प्रमादाभिप्रायान्तरप्रमाणान्तरगम्यार्थानि भवन्ति । तत्र प्रतीतोऽप्यर्थो वक्तुरनभिप्रेतत्वात् अविवक्षां लभेत । सा च द्वेधा विज्ञायते । यदा वक्तैव कथयति अन्यपरं ममेदमभिप्रेतं प्रमादेन वा । तस्मादेतावन्मात्रमिह न ग्रहीतव्यमिति । यद्वा प्रमाणान्तरवशेन अन्यथाऽर्थेऽवधारिते वक्त्रनपेक्षाः श्रोतार एवाभिप्रायान्तरं प्रमादं चाध्यवस्यन्ति । न तु वेदवाक्येषु अभिप्रायान्तरं प्रमादो वा कस्य चिदस्ति । न च वक्ता, योऽन्यथात्वं कथयेत् सर्वपुरुषाणाम् "उक्तं तु शब्दपूर्वत्वम्" इति केवलश्रोतृत्वाश्रयणात् । न च प्रमाणान्तरगम्योऽर्थः, यतस्तद्वशेन स्वयमेव श्रोतारः अन्यथात्वं प्रतिपद्येरन् । विवक्षाविवक्षे च वक्तॄणां प्रत्ययविशेषाविच्छानिच्छाविशेषौ वा । तेन विवक्षितमविवक्षितमिति द्वयमप्येतत् वक्त्रभावादनुपपन्नम्, अतः श्रुताश्रुतयोरेव केवलयोरत्र ग्रहणाग्रहणे । नातःपरं किंचित्कारणमस्ति ॥

उच्यते—

**प्रतीतिं प्रति नैवात्र विसंवादोऽस्ति कस्य चित् ।**
**प्रतीतेऽपि तु सत्येषा विध्यविध्योर्विचारणा ॥**
**परिग्रहपरित्यागाविच्छानिच्छाफले स्थिते ।**
**तल्लक्षणार्थता त्वत्र स्याद्विवक्षाविवक्षयोः ॥**

अथवा—

न्यायेन संप्रदायाद्वा ये मीमांसकयाज्ञिकाः ।
वेदं व्याचक्षते तेषामभिप्रायोऽयमुच्यते ॥
शब्दशक्त्यनुसारेण वाक्यार्थं गमयन्ति ये ।
तत्र यः शक्त्युपारूढः स तैर्व्याख्यातुमिष्यते ॥
यस्तु शक्त्या परित्यक्तः न व्याचिख्यास्यते स तैः ।
तेन व्याख्यातुमिष्टोऽर्थो यस्तेषां स विवक्षितः ॥
अनिष्टो यस्त्वशक्तित्वात् अविवक्षित एव सः ।
अतः पूर्वसमावृत्तव्याख्यात्रिष्टं विवक्षितम् ।
तेनोच्येत तथा तेषां त्वनिष्टं त्वविवक्षितम् ॥

तस्माद्व्याख्यातृगतमेव विवक्षिताविवक्षितत्वमुपन्यस्य विचारकरणात् वेदेऽप्यविरोधः । [यद्वा]

ऋग्वेदादिसमूहेषु क्षेत्रज्ञा ये प्रतिष्ठिताः ।
तेषां वाऽयमभिप्रायः स्याद्विवक्षाविवक्षयोः ॥
महाभौतिकदेहस्थाः यथाऽऽत्मानस्सचेतनाः ।
कांचिदर्थं विवक्षन्ति न विवक्षन्ति चापरम् ॥
तेषामन्तर्गताऽपीच्छा तद्वाक्यार्थविचारिभिः ।
ज्ञायते शब्दशक्त्यैव स्फुरन्तीव बहिःस्थिता ॥
देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः ।
प्रकृत्यारम्भवैचित्र्यात् दृश्यन्ते परमात्मनाम् ॥
पार्थिवावयवप्रायाः शेषतोयाद्यनुग्रहात् ।
जरायुजादयो देहाः दृष्टा भुवि चतुर्विधाः ॥
भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः ।
श्रूयन्ते वारुणे लोके देहाः स्वच्छाङ्गलक्षणाः ॥
अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः ।
भ्रमन्ति लघुभिः सूक्ष्मैः देहैर्भूम्याद्यनुग्रहात् ॥
स्वर्लोके तैजसप्रायाः देहाः शुद्धप्रभान्विताः ।
आप्यायन्ते विकीर्णेन भानवीयेन तेजसा ॥

तथाच नक्षत्रेष्टिवाक्यशेषेऽभिहितं "ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति तेषामेतानि ज्योतींषि यन्नक्षत्राणि" इति। तथाच मनुनाऽपि स्वर्गं लोकं गच्छन्नभिहितः "तेजोमूर्तिः पथर्जुना" इति ॥

[1] तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः।
इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥
रूपस्पर्शादयो येऽपि महाभूतगुणाः स्थिताः।
प्रत्येकमात्मनां तेऽपि देहास्संभोगहेतवः ॥
शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते।
[2] तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥
तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक्।
भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगतास्सदा ॥
तेषां चान्तर्गतेच्छानां वाक्यार्थप्रतिपादने।
विवक्षा वाऽविवक्षा वा ज्ञायते शब्दशक्तितः ॥
विधिशक्त्या गृहीतं यत्तत्सर्वं हि विवक्षितम् ॥
तयैव तु परित्यक्तं व्याख्येयमविवक्षितम् ॥
शब्दब्रह्मात्मनोऽप्येवं सर्ववेदानुसारिणः।
विवक्षा वाऽविवक्षा वा वक्तव्या विधिशक्तितः ॥
अनादिनिधनेऽप्येवं वेदे वेदार्थगोचरे।
व्याख्यानं मुख्यवृत्त्याऽपि स्याद्विवक्षाविवक्षयोः ॥
ततश्चेतद्ब्रह्मैकत्वं किं वेदेन विवक्षितम्।
किं नेति न्यायमार्गेण विचार्य स्थापयिष्यति ॥ इति ॥

अनेन विचारेण एकेन परमात्मना आकाशशरीरेण वेदादिकं सर्वमधिष्ठितं, स शरीरी वेदादिकं शरीरमिति "यस्य पृथिवी शरीरम्" इत्याद्यन्तर्यामिब्राह्मणोक्तोऽर्थः सम्यगनुसंहितः भट्टाचार्येणेति विज्ञायते ॥

---

1 आकाशशरीरं ब्रह्म इति तैत्तिरीयं वाक्यम्.

2 यस्य वेदाश्शरीरमित्याद्यन्तर्यामिब्राह्मणम्.

तथा—खं ब्रह्मेति वाक्ये आकाशशरीरं ब्रह्मेत्यर्थः स्वीकृतः। सामानाधिकरण्यं च शरीरात्मभावनिबन्धनमिति स्फुटं सूचितं भवति। इदमेव परमं सूक्ष्मं विशिष्टाद्वैतसिद्धान्तरहस्यम्। तदेतत् मीमांसानिष्णातैरङ्गीकृतमित्यवधेयम् ॥

जीवात्मा.

जीवात्मस्वरूपं तु स्वाभाविकमुपनिषत्सु एवं विज्ञायते—

**न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्।**
**सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥**

इति छान्दोग्ये सप्तमान्ते ॥

**संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः।**
**ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानस्सर्वमेवाविशन्ति ॥**
**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम्।**
**तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥**

इति मुण्डके—(३-२-५, ३-१-३)

**अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतस्समभवत्समभवत्।**

इत्यैतरेये। (२-४) एवं मुक्तैश्वर्यनिरूपणप्रकरणे श्रूयमाणानां श्रुतीनामर्थं मनसि निधाय तन्त्रवार्तिके अपूर्वाधिकरणे—(३७५ पु) कुमारिलः

**सर्वावाप्तिसमर्थो वा प्रकृत्याऽऽत्मा सदेष्यते।**
**कश्चित्तु प्रतिबन्धोऽस्य कर्मभिस्सोऽपनीयते ॥**

इति सर्वकामावाप्तियोग्यतामात्मनस्स्वाभाविकीमभिहितवान् ॥

वात्सायनभाष्येऽपि (१-१-९) "तत्रात्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभावी" इति जीवात्मस्वरूपं स्वाभाविकमुक्तं दृश्यते ॥

श्रीभाष्यादिप्रबन्धेषु बहुषु प्रदेशेषु जीवाद्वैतवादस्य प्रकाराद्वैत-परत्वेन व्यवस्थापनात् ज्ञानैकाकारतया सर्वेषामात्मनामैक्यं साम्यमिति च विशिष्टाद्वैतसिद्धान्तः। एषोऽप्यपूर्वाधिकरणे—(३८१ पु) "चैतन्यात्मकत्वाद्यविभागाच्च उपनिषत्सु ऐकात्म्यव्यवहारः" इति स्पष्टं निरूपितः ॥

एषोऽर्थः अनतिविशद इति अभिसंधाय शास्त्रदीपिकारायां विस्तरेणोपपादितः। यथा–(३२१ पु.) संबन्धाक्षेपपरिहारे—"ऐकात्म्यवादास्तर्ह्यौपनिषदाः कथम्? अवैलक्षण्येनेति ब्रूमः। भेदशब्दो हि वैलक्षण्यवचनोलोके प्रसिद्धः। तथाहि सुसदृशेषु वक्तारो भवन्ति नास्यास्य च कश्चिद्भेदोऽस्तीति। तथाऽऽत्मनामपि नरपशुतिर्यग्भेदशरीरवर्तिनां शरीरसंबन्धमपोह्य केवलं नैजरूपेण निरूप्यमाणानां पद्मरजः-परमाणुद्वयवत् न किंचिदपि वैलक्षण्यमस्तीत्यनेनाभिप्रायेणैकत्ववादाः नानात्वनिषेधवादाश्च। एतदभिप्रायमेव चैतदपि भगवद्वासुदेववचनम्—

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डितास्समदर्शिनः। इति ॥**

तथैव "इन्द्रो मायाभिः पुरुरूप ईयते" इति। स्वयमविलक्षणोऽप्यात्मा नरपश्वादिविचित्रशरीरसंपर्कवशात् भ्रान्त्या स्वयमपि विलक्षणरूपः प्रतीयते इत्यर्थः ॥

ये च मुक्तानां क्षेत्रज्ञानामीश्वरेण सहैकत्ववादाः तेऽप्यत्यन्तसाम्यात् वैलक्षण्याभावाच्च। तथा च श्रुत्यन्तरम्—

**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म योनिम्।**
**तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति॥**

इतीश्वरसाम्यापत्तिमेव मुक्तस्य दर्शयति। तथा भगवता वासुदेवेनाऽप्युक्तम् ॥

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च । इति ॥**

यत्तु—" ममैवांऽशो जीवलोके जीवभूतस्सनातनः " इति भगवद्वचनं तत् स्वामिभृत्यभावपरम् । यथा खल्वमात्या राज्ञोंऽशा व्यपदिश्यन्ते तथा जीवोऽपीश्वरांश इत्युच्यते । अन्यथा जीवत्वनाशात् सनातनत्वानुपपात्तिः । यान्यपि—

**विभेदजनकेऽज्ञाने नाशमात्यान्तिकं गते ।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥** (वि. ६-७-९६)

इत्यादीनि पुराणवचनानि, तेषामयमेवार्थः । वैलक्षण्यं आत्मनो ब्रह्मणश्च अत्यन्तमविद्यमानमेव अज्ञाननिमित्तम् । अज्ञाने विनष्टे स्वयमेव विलीयते इति । विस्पष्टं हि परापर पुरुषयोर्भेदः गीतादिषूपदर्शितः—

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**उपद्रष्टाऽनुमन्ता च कर्ता भोक्ता महेश्वरः ॥**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥**

इत्यलमतिदूरं गत्वा ॥

अपिच शास्त्रदीपिकायामात्मवादे (३५५पुटे)—" ये त्वात्मैकत्ववादाः श्रुतिषु स्मृतिषु पुराणेषु वा ते " निरञ्जनः परमं साम्यमुपैति, मम साधर्म्यमागताः, उत्तमः पुरुषस्त्वन्यः ' इत्यादिभिरात्मभेदवचनैः प्रत्यक्षादिभिश्च विरोधान्नैकान्तः शक्नुवन्त्यात्मैकत्वं निश्चाययितुम् ॥

वचनानां हि मिथो विरोधे सिद्धवस्तुविषयत्वेन च विकल्पासंभवात् प्रमाणान्तरान्निर्णयः स्यात् । तच्च प्रमाणान्तरं भेद एव समर्थमित्यैकात्म्यवादानामवैलक्षण्यपरत्वं पूर्वोक्तन्यायेनावगन्तव्यम् । विस्पष्टं चैतद्वायुदृष्टान्तेनोपपादनात्—(वि. पु. २–१४–३२)

**वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।**
**अभेदव्यापिनो वायोः तथा तस्य महात्मनः ॥**

इति । न हि वायुर्द्रव्यं सर्वत्रैकं, व्यक्तिभेदस्य स्पष्टत्वात । अविलक्षण-स्वभावस्य तु वायोः वेणुरन्ध्रकृतं षड्जादिवैलक्षण्यं, एवमात्मनोऽपि पशुमनुष्यादिवैलक्षण्यं देहसंबन्धकृतं न स्वाभाविकमित्ययमेवार्थः । वायोरिति तस्येति चैकवचनं सामान्याभिप्रायम् । तस्मात् प्रतिशरीरं भिन्ना एवात्मानः सर्वगता नित्याः । एवं च बद्धमुक्तव्यवस्थाऽपि युक्त-तरा भवति" इति पार्थसारथिमिश्रव्याख्यानम् ॥

स्वयंप्रकाशत्वम्

एवं—जीवात्मनः स्वयंप्रकाशत्वं अहंप्रत्ययवेद्यत्वं च अह-मर्थात्मसमर्थनप्रकरणे श्रीभाष्यादिषु सम्यगुपपादितम् । अयमप्यर्थः तन्त्रवार्तिके अपूर्वाधिकरणे (३७६ पुटे) "चैतन्यस्वभावस्यात्मनः अहं प्रत्ययेन हि अस्तित्वमवगम्यते" इति स्पष्टमुक्तः । स चार्थः "स्वसं-वेद्यस्स भवति" इत्याचार्यशबरस्वामिनाऽप्युक्तः ॥

बृहदारण्यकशांकरभाष्ये—(६-३-७) "प्रत्यगात्मग्राह्यतामा-त्मनः अहमिति मीमांसकपक्षः प्रत्युक्तः" इत्ययमर्थः अनूदितः । अत्रा-नन्दगिरिः "आत्मनो ग्राह्यस्याहमिति प्रत्यगात्मनैव ग्राह्यतेति मीमां-सकमतमपि प्रत्युक्तं, एकस्यैव ग्राह्यग्राहकतयोः निरस्तत्वादित्याह—प्रत्यगात्मेति" इत्यवतारयामास । ततश्च मीमांसकसिद्धान्ते एकस्य ग्राह्यग्राहकभावः आत्मनोङ्गीकृत इति सिद्धम् । इयमत्र श्रीभाष्यश्रुत-प्रकाशिकासूक्तिः "दीपः प्रकाशस्वभावः स्वयमेव, प्रकाशते । अन्यानपि प्रकाशयति प्रभया । एवमात्मा चिद्रूप एव चैतन्य-गुणक इति । चिद्रूपता हि स्वयंप्रकाशता । तत्रात्मा अहमर्थः प्रत्यक्त्वेनानुकूलत्वेनैकत्वेन च स्वतो भाति । तादृशस्वयंप्रकाशप्रत्य

क्षेणैव धर्मधर्मिणोः ज्ञातृज्ञानयोरपि संबन्धः प्रतीयते । नियतविशेषण-विशेष्यभावः संबन्धः । अहमर्थो विशेष्यतैकस्वभावं प्रकाशयति । धर्मभूतज्ञानं च विशेषणतैकस्वभावं स्वात्मानं प्रकाशयति । विशेषणविशेष्यभावस्य परस्परप्रतियोगिकत्वं च ज्ञातृज्ञानयोस्सहावभासादेव प्रतीयते " इति ॥

" ज्ञातृत्वं हि ज्ञानगुणाश्रयत्वं ज्ञानं चास्य नित्यस्य स्वाभाविकधर्मत्वेन नित्यम् । तमिममिन्द्रियद्वारा ज्ञानप्रसरमपेक्ष्य उदयास्तमयव्यपदेशः प्रवर्तते " इति च श्रीभाष्यमत्रानुसन्धेयम् ॥

धर्मभूतज्ञानम्

अत्र कुमारिलवाक्यं शब्दनित्यत्वाधिकरणम् (श्लोक. ८३३)–

बुद्धीनामपि चैतन्यस्वाभाव्यात्पुरुषस्य नः ।
नित्यत्वमेकता चेष्टा भेदस्तु विषयाश्रयः ॥
स्वरूपेण यथा वह्निर्नित्यं दहनकर्मकः ।
उपनीतं दहत्यर्थं दाह्यं नान्यन्न चान्यदा ॥
यथा वा दर्पणः स्वच्छः यथा च स्फटिकोऽमलः ।
यद्यन्निधीयते योग्यं तच्छायां प्रतिपद्यते ॥
तथैव नित्यचैतन्याः पुमांसो देहवृत्तयः ।
गृह्णन्ति करणानीतान् रूपादीन् धीरसौ मता ॥
तेनोपनेतृसंबन्धभङ्गित्वात् भङ्गिनी मतिः ।
एतन्मनसि कृत्वाऽऽह नित्ये एवेति भाष्यकृत् ॥ इति ॥ ४०८

तथा तन्त्रवार्तिके (३७६) "चैतन्यस्वभावस्यात्मनः अहंप्रत्ययेन हि अस्तित्वमात्रमवगम्यते " इत्युच्यते ॥

न्यायपरिग्रहः.

वेदार्थसंग्रहे निवर्तकानुपपत्तिप्रकरणे—" सर्वशून्यवादिनः ब्रह्मव्यतिरिक्तवस्तुमिथ्यात्ववादिनश्च स्वपक्षसाधनप्रमाणपारमार्थ्यानभ्युपगमात् अभियुक्तैः वादानधिकार एव प्रतिपादितः ॥

**सर्वथा सदुपायानां वादमार्गः प्रवर्तते ।**
**अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ॥**

इत्युदाहृतम् । अत्र अभियुक्तपदेन कुमारिलभट्टाचार्यो हृदयस्थितः । यतः श्लोकवार्तिके निरालम्बनवादे (१२८) श्लोकोऽयं पठ्यते । अनेनोदाहरणेन कुमारिले सन्निकृष्टत्वं गौरवं च सूच्यते ॥

श्रीभाष्ये आरम्भणाधिकरणे (२-१-१५) "यत्तु ब्रह्मणः अपारमार्थिकज्ञानगम्यत्वेऽपि पश्चात्तनबाधादर्शनात् ब्रह्म सत्यमेवेति । तदसत्—दुष्टकारणजन्यज्ञानगम्यत्वे निश्चिते सति पश्चात्तनबाधादर्शनस्याकिंचित्करत्वात्" इत्युक्तम् । श्लोकवार्तिके हि चोदनासूत्रे (श्लो. ३८)—

**दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।**
**अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥**

इत्यस्ति । अयमेव श्लोकः श्रीभाष्यकारस्यात्र मनसि स्थित इति युक्तं वक्तुम् ॥

तथा वाक्याधिकरणे (३११ श्लोकः)

**जातेरस्तित्वनास्तित्वे न हि कश्चिद्विवक्षति ।**
**नित्यत्वाल्लक्ष्यमाणायाः व्यक्तेः ते हि विशेषणे ॥**

इति । एतद्वाक्यार्थमनुसंधायैव श्रीभाष्ये (२—२—३) "कालस्य पदार्थविशेषणतयैव प्रतीतेः तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः न च परिहर्तव्याः । कालोऽस्तीति व्यवहारो व्यवहर्तॄणां जात्याद्यस्तित्वनास्तित्वव्यवहारतुल्यः । जात्यादयो हि द्रव्यविशेषतयैव प्रतीयन्ते इति पूर्वमेवोक्तम्" इति भाषितम् ॥

तथा—श्रीभाष्ये अविद्याप्रकरणे अनिर्वचनीयत्वानुपपत्तौ—"एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यं, सर्वा च

प्रतीतिः सदसदाकारा । सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेः विषयस्स्यात्" इति भाषितम् ॥

अत्र श्रुतप्रकाशिका—"सर्वं सर्व प्रतीतेरिति । सदसद्विलक्षण मिति या प्रतीतिः तत्रापि सदसदेव विषयः स्यादित्यर्थः" इति विवृतम् । अयमत्र भावः—सद्विलक्षणत्वासद्विलक्षणत्वयोः असत्त्वसत्त्वरूपत्वात् समुच्चयकोटिभिन्नतुरीयकोटेरप्रामाणिकत्वादिति । अत्रत्यो वाक्यार्थः श्लोकवार्तिके अभावपरिच्छेदीयपद्येन स्फुटीभवतीति विजानीमः । यथा—

**स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।**
**वस्तुनि ज्ञायते कैश्चिद्रूपं किं चित्कदाचन ॥ १२ ॥**

अयमर्थः—सर्वं हि वस्तु स्वरूपतस्सद्रूपं पररूपतश्चासद्रूपं, यथा घटः घटरूपेण सन् पटरूपेणासन्, पटोऽप्यसद्रूपेण भावान्तरे घटादौ समवेतः तस्मिन् स्वीयामसद्रूपाकारां बुद्धिं जनयति योऽयं घटः स पटो न-भवतीति । इह घटो नास्तीत्यत्रापि घटसंयोगाभावात्मना भूतलादिबुद्धिः बोद्धव्या । भ्रान्तिज्ञाने पररूपं स्वरूपेण भासते इति विशेषः । तथा च सर्वस्य च वस्तुनः सदसदात्मकत्वे सर्वस्या अपि प्रतीतेः सदसदाकारत्वमेवेति भावः ॥

तथा—(२-१-१८) श्रीभाष्ये—"असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च" इति सूत्रस्थयुक्तिशब्दव्याख्यानावसरे भावान्तराभाववादस्समर्थितः । "युक्तिर्हि सत्त्वासत्त्वे पदार्थधर्मावुवगमयति । मृद्द्रव्यस्य पृथुबुध्नोदराकारयोगः घटोऽस्तीति व्यवहारहेतुः । तस्यैव तद्विरोध्यवस्थान्तरयोगः घटो नास्तीति व्यवहारहेतुः । तत्र कपालाद्यवस्थायाः तद्विरोधित्वेन सैव घटावस्थस्य नास्तीति-

व्यवहारहेतुः । न च तद्व्यतिरिक्तो घटाभावो नाम कश्चिदुपलभ्यते । न च कल्प्यते । तावतैवाभावव्यवहारोपपत्तेः" इति ॥

तथा जिज्ञासाधिकरणे महासिद्धान्तारम्भे—"जातिग्रहणेनैव भिन्न इति व्यवहारसम्भवात् पदार्थान्तरादर्शनात् अर्थान्तरवादिनाऽप्यभ्युगतत्वाच्च गोत्वादिरेव भेदः" इति च ॥

स एव हि वादः कुमारिलहृदयस्थ इति वयं सूचयामः । यथा । अभाववादे—

**प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।**
**साऽऽत्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि ॥**

आत्मनः स्वरूपेणावस्थानं अवस्थान्तरं वेत्यर्थः ॥

निरालम्बनवादे—

**भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ।**
**भ्रान्तिश्चाभावधीश्चापि चेत्थं सालम्बना मता ॥**

इत्यन्यत्र विस्तरः ॥

असत्यात्सत्यप्रतिपत्तिः.

एवं असत्यात्सत्यप्रतिपत्तिरपि प्राचीनैरुदाहृता । काव्यप्रकाशव्याख्याने संकेते (४ उ) धर्मकीर्तिर्यदाह—

**मणिप्रदीपप्रभयोर्मणिबुद्ध्याऽभिधावतोः ।**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ इति ॥**

हरिः (I-239)—

**उपायाः शिक्षमाणानां बालानामुपलालनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहते ॥ इति ॥**

एतन्मनसि कृत्वैव आरम्भणाधिकरणे श्रीशङ्कराचार्येणेत्थमभाषि—"कथं चासत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्येत । न हि रज्जुसर्पेण दष्टो म्रियते । नापि मृगतृष्णिकाम्भसा अवगाहनपाना-

दिप्रयोजनं क्रियते । नैषदोषः—शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात् । तत्कार्यमप्यनृतमेवेति चेत् ब्रूयात्, तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतम् । तथापि तदवगतिः सत्यमेव फलं, प्रतिबुद्धस्याप्यबाध्यमानत्वात् । न हि स्वप्नादुत्थितः स्वप्नदृष्टं सर्प दंशेनोदकस्नानादिकार्यं मिथ्येति मन्यमानः तदवगतिमपि मिथ्येति मन्यते कश्चित् " इति ॥

अत्र ज्ञापककारकविभागमवधीर्य असत्यस्य सत्यहेतुत्वमात्रं दृष्टान्तेनोपपादितम् । तदेतदभिप्रायमवधार्य श्रीरामानुजाचार्येण जिज्ञासाधिकरणे शास्त्रप्राबल्यप्रकरणान्ते भाषितमेवं—" नच वाच्यं स्वाप्नस्य हस्त्यादिविज्ञानस्यासत्यस्य परमार्थशुभाशुभप्रतिपत्तिहेतुभाववत् अविद्यामूलत्वेनासत्यस्यापि शास्त्रस्य परमार्थभूतब्रह्मविषयप्रतिपत्तिहेतुभावः न विरुद्ध इति । स्वाप्नज्ञानस्यासत्यत्वाभावात् । तत्र हि विषयाणामेव मिथ्यात्वं तेषामेव हि बाधो दृश्यते, न ज्ञानस्य । न हि मया स्वप्नवेलायामनुभूतं ज्ञानमपि न विद्यते इति कस्यचिदपि प्रत्ययः जायते । दर्शनं तु विद्यते अर्था न सन्तीति हि बाधकप्रत्ययः ॥

मायाविनो मन्त्रौषधादिप्रभवं मायामयं ज्ञानं सत्यमेव प्रीतेर्भयस्य च हेतुः । रज्ज्वादौ सर्पादिविज्ञानं सत्यमेव भयादिहेतुः । सत्यैवादष्टेऽपि स्वात्मनि सर्पसन्निधानाद्दष्टबुद्धिः (भयादिहेतुः) सत्यैव शङ्काविषबुद्धिर्मरणहेतुभूता ॥

रेखया वर्णप्रतिपत्तावपि नासत्यात्सत्यबुद्धिः । रेखायाः सत्यत्वात् । ननु वर्णात्मना प्रतिपन्ना रेखा वर्णबुद्धिहेतुः वर्णात्मता त्वसत्या । नैवं—वर्णात्मताया असत्याया उपायत्वायोगात् । असतो निरुपाख्यस्य ह्युपायत्वं

न दृष्टम्, अनुपपन्नं च । तस्यां वर्णबुद्धिस्तु सत्यैव । एषां संवेदनानामुत्पत्तिमत्त्वादर्थक्रियाकारित्वाच्च सत्यत्वमवसीयते ॥

न चैकरूपशब्दस्य नादविशेषेणार्थभेदबुद्धिहेतुत्वेऽपि असत्यात्सत्यप्रतिपत्तिः । नानानादाभिव्यक्तस्यैकस्यैव शब्दस्य तत्तन्नादाभिव्यङ्ग्यस्वरूपेणार्थविशेषैस्सह सम्बन्धग्रहणवशात् अर्थबुत्पद्ध्युत्तिहेतुत्वात् ॥

अतोऽसत्याच्छास्त्रात् सत्यब्रह्मविषयप्रतिपत्तिर्दुरुपपादा । ननु न शास्त्रस्य गगनकुसुमवदसत्यत्वं, प्रागद्वैतज्ञानात्सद्बुद्धिबोध्यत्वात् । नैवं—असति शास्त्रे अस्ति शास्त्रमिति बुद्धेः मिथ्यात्वात् । यथा धूमबुद्ध्या गृहीतबाष्पजन्याग्निज्ञानस्य मिथ्यात्वेन तद्विषस्याग्नेरपि मिथ्यात्वम्" इति ॥

प्रकृतवाक्यार्थसर्वस्वमेवं कुमारिलेन प्रकाशितम् । यथा निरालम्बवादे—

**सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते ।**
**न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता ॥**
**बाष्पादिनाऽप्यधूमेन मिथ्यावह्न्यादिबोधनम् ।**
**तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ॥**
**साऽप्यसत्या न सत्यं हि सत्याभासेन गम्यते ।**
**येऽपि रेखादयो दृष्टाः वर्णानां प्रतिपादकाः ॥**
**न ते स्वेनापि रूपेण परमार्थत्ववर्जिताः ।**
**वर्णात्मना न सत्याश्चेत् सर्वभावेष्वयं विधिः ॥**
**पदार्थान्तररूपेण न सत्यं किञ्चिदिष्यते । इत्यादि ॥**

**शङ्का—**

**ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ।**
**साध्यसिद्धिममाप्यासीत् परमार्थोऽस्य नास्तिता ॥**

समाधिः—

योऽधुना परमार्थेन नास्तीत्येवं प्रकाशते ।
कथं पूर्वमसावासीत् असंश्चेत्साधनं कथम् ॥

शङ्का—

उपायानां स्वरूपं हि संवृत्यात्मकमेव नः ।
तथा च सत्यतैवेष्टा स्वरूपासत्यता कथम् ॥

समाधिः—

संवृत्या यत्स्वरूपं हि तद्वाङ्मात्रनिबन्धनम् ।
हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥ इति ॥

व्यावहारिकव्यवस्था.

द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृतिसत्यं च सत्यं च परमार्थतः ॥

इति सौगतकारिका । एतं पन्थानमेवाश्रित्य व्यावहारिकावस्था पारमार्थिकावस्था चेति विभागः–(व्यावहारिकसत्त्वं, पारमार्थिकसत्त्वम्) प्रवृत्त इति शक्यते चिन्तयितुम् । स एष वादः श्लोकवार्तिके इत्थं दूषितः—(निरालम्बवादे—२१६ पु)

संवृतेर्न तु सत्यत्वं सत्यभेदः कुतो न्वयम् ।
सत्यं चेत्संवृतिः केयं मृषा चेत्सत्यता कथम् ॥
सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः ।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥
तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थ उपन्यासः लालावक्त्रासवादिवत् ॥
नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।
कल्पनाऽपि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥
तस्माद्यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत्सत्यमन्यन्मिथ्येति न सत्यद्वयकल्पना ॥ इति ॥

"एतेन यद्धि प्रतीतं बाध्यते मृगतोयादि तदसदेवेति लौकिकी प्रसिद्धिः, न हि शशविषाणादीनां मृगतोयादीनां च कश्चिद्विशेषो लोके। सोऽयं प्रपञ्चोपि बाध्यते चेत् असन्नेवेपि नानिर्वाच्यः" इति शास्त्रदीपिका। तमेव सिद्धान्तमवलम्भ्य श्रीमान् रामानुजाचार्यः सदसद्विलक्षणमिथ्यावादं निराचकारेति विश्वजनीनमेतत् ॥

संस्थानं जातिः.

एवं प्राभाकरमीमांसकसंप्रदायानुसारिण्यां प्रकरणपञ्चिकायां जातिनिर्णये संस्थानरूपाऽकार एव जातिरिति निरूपितमस्ति। स एव मार्गः विशिष्टाद्वैतसम्प्रदायः। यथा—"यत्पुनरुक्तमेकभावेन मनसा समाकलयतः कालाक्षीं स्वस्तिमतीं वा नास्ति जातिप्रतीतिरिति। तदसिद्धम्, आकारो हि सा। प्रतीते चाकारे अर्थान्तरानुसन्धानविकलतया तस्यानुवृत्तिर्नावसीयते। अनुवृत्ता च जातिः, नानुवृत्तिः। अग्रहणेऽपि च धर्मस्य धर्मिणो ग्रहणं नानुपपन्नम्। अत एव पिण्डान्तरसमधिगमे पूर्वाकारपरामर्शिनी मनीषा प्रत्यभिज्ञासमाख्याता उदीयते" इति (२६)। एवं सत्तारूपा जातिरप्यन्यथाकृता—"तेन स्वरूपसत्तैव प्रमाणसम्बन्धयोग्यता। यस्य हि स्वरूपमस्ति तत्प्रमाणेन परिच्छिद्यते" इति (२९)॥

इदमत्रावधेयम्—सत्त्वं नाम सत्ताऽपरपर्यायं महासामान्यं द्रव्यगुणकर्मवृत्ति भावपदवाच्यं वैशेषिकैरङ्गीकृतम्। सामान्यादिष्वपि सद्व्यवहारदर्शनात् तत्तद्वस्तुस्वरूपाऽपरपर्यायमपि सत्त्वपदवाच्यं भवतीति प्रशस्तपादेन प्रतिपादितम्। मानसम्बन्धरूपमेव सत्त्वं सर्वत्रानुगतमिति प्राभाकरैरुक्तमिति संक्षेपशारीरककारविवरणकारादिभिरनूदितमस्ति। अत एव विवरणे सौगतसांकर्यविचारावनते (८४) "क्षणि-

कप्रमाणसंबन्धस्य सत्त्वाभ्युपगमात् लोकायतबौद्धांशद्वयपरिणतः प्राभाकरः" इति दूषितमस्ति। इदं जरत्प्राभाकरमतं स्यात्। नव्यप्राभाकरमतं तु क्षणिकत्वदोषपरीहाराय प्रमाणसंबन्धार्हत्वं सत्त्वमभिमतमिति प्रमाणसंवन्धयोग्यतेत्यनेन पदेन प्रकटभिवाति ॥

स्वरूपसत्तैवेत्यनेन पदेन मानसंबन्धयोग्यत्वातिरिक्तं स्वरूप· सत्त्वमप्यपलपितामिति विज्ञायते। सर्वथाऽप्यतिरिक्तजातिनिराकरणवादिन एवैते। संक्षेपशारीरके तु (२· ४--९४) स्वरूपसत्त्वं पृथगनूद्य मानसंबन्धयोग्यतालक्षणं पृथगुच्यते---

**अथवा मितियोग्यताऽस्थिता निरवद्याऽस्तु समस्तवस्तुषु।**
**परमात्मनि तत्प्रतीतये सकलं वेदशिरः प्रवर्तताम्॥ इति॥**

महासामान्यरूपं सत्त्वं तु प्रायस्सर्वैरप्यपाक्रियते। एतद्वासनयैव कैश्चित्तार्किकैरपि महासामान्यं सत्त्वमनुपगतं प्रतीयते इति॥

ब्राह्मणत्वादिः.

अथ जातेस्संस्थानरूपत्वे ब्राह्मणादिषु गवाश्वादिष्विव संस्थानभेदाभावान् सर्वशास्त्रविप्लव इत्याशङ्क्य ब्राह्मणत्वादिकं निरूपयति--- "अनयैव दिशा ब्राह्मणत्वादिजातिरपि निवारिता" इति। प्रत्यक्षा ब्राह्मणत्वादिजातिः पदार्थान्तरमिति कुमारिलमतमत्रानूद्य प्रदूष्य उच्यते---"अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चिदेव पुरुषसंततयः सन्ति। तासामन्योन्यव्यतिकरजाताः स्त्रीपुंव्यक्तयः ब्राह्मणशब्दवाच्याः। अनिदंप्रथमतया च संततेः सर्वेषां तत्संततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता। तेन संततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः॥

के पुनस्ते संततिविशेषाः? न ते परिगणय्य निर्देष्टुं शक्यन्ते।

किं तु लोकत एव प्रसिद्धाः प्रत्येतव्याः । तथा च तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः । स्त्रीणामपराधसंभवात्तज्जन्यत्वं न शक्यमवगन्तुमिति न च वाच्यम् । दृश्यादर्शनमेवाभाव इत्युक्तत्वात् । यत्र यावदुपलब्धिसामग्री तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते तासां नास्त्येव व्यभिचार इति लोकप्रमाणमेतत्" इति ॥

अयमेव हि सिद्धान्तः सेश्वरमीमांसायां परमतभङ्गादिषु आचार्यैः अनादिव्यवहारसिद्धवारादिदृष्टान्तेन निर्णीतः वेदान्ताचार्यैः । विस्तरस्तु-मानमेयरहस्यवार्तिके जातिविचारे द्रष्टव्यः ॥

## सत्ताद्वैतविचारः.

प्रकरणपञ्चिकायां तत्त्वालोके—(१५४ पु) कः पुनरेष मोक्षः? अविद्यास्तमय इति केचित् । एकमेवाद्वितीयमसंसृष्टं सकलोपाधिपरिशुद्धं ब्रह्म । तदनाद्यविद्यावशेन शरीरादिसद्वितीयमिव उपाधिकलुषितावभासमानं लब्धजीवव्यपदेशं सत् बद्धमिव कल्प्यते । अतोऽनाद्यविद्यैव संसारः । निखिलविकल्पातीतपरिशुद्धविद्योदयात् तदस्तमय एव मोक्षः । तदिदं श्रद्धाविजृम्भितमिति प्रमाणपरतन्त्राः ॥

न खल्वद्वैतं कस्यचित्प्रमाणस्य गोचरः । स्यान्मतम्—प्रत्यक्षमेव विधिमात्रोपक्षीणव्यापारं अपरिस्पृष्टान्योन्यभेदं तदेकमेव तत्त्वं साक्षात्करोतीति । तदसत्, सत्यं विधायकमेव प्रत्यक्षम् । तत्तु विदधदपि रूपं रूपतया रसं रसतया विदधाति । न पुनस्सर्वमेकरूपम् । यथा रूपे तद्धारावाहिनी बुद्धिः तथाभूतैव यदि रसेऽपि स्यात् तदा भवेदेव प्रत्यक्षेण साक्षात्कृतमद्वैतम् । न त्वेवमिति सर्वप्रतिपत्तृस्वसंविदितम् ॥

यच्च प्रमेयविकल्पेन सामान्यमेव वस्त्विति स्थापयित्वा सत्ताया महासामान्यरूपत्वात् तावन्मात्रमेव तत्त्वमिति साधितं तदपि गगनग्रा-

सकल्पम् । सत्यं न विशेषमात्रमेव वस्तु । सत्यं च सामान्यविशेषात्मकं वस्तु नास्ति । किं तु सामान्यविशेषावन्योन्यसंबद्धौ द्वे वस्तुनी ॥

अथागमादेवाद्वैतं सिध्यति । तन्न – आगमस्य कार्यैकविषयतया सिद्धे तत्त्वे प्रामाण्यानुपपत्तेः । अपि च वाक्यार्थे आगमः प्रमाणमिष्यते । स चानेकपदार्थात्मनि वाक्यार्थे धियमुपजनयन् कथमद्वैतमवभासयेत् ॥

अथेदमुच्यते—स एष नेतिनेतीति सकलोपाधिनिषेधेन नानाभूतवस्त्वन्तरापाकरणात् अद्वैतमागमेन साध्यत इति । तदप्यसारम्—यः खल्वेष इति सद्रूपतया प्रत्यवमृष्टः पदार्थः सोऽसत्त्वापादकेन नञ्+र्थे सह संबद्धुमयोग्यः । अस्ति नास्तीतिवत् । अन्वयायोग्ययोश्च पदार्थयोरन्वयाभावान्न वाक्यार्थीभवनम् । तर्हि निराकृतान्येव सर्वाणि निषेधवाक्यानि? मन्द मैवं परिभावय । न हि निषेधवाक्येषु कस्यचिदात्यन्तिको निषेधः । किंतु क्वचिन्निषिध्यते । अद्वैताभिमानी तु भवानात्यन्तिकमेव निषेधमभिलष्यति । सोऽयमात्मीय एव बाणो भवन्तं प्रहरति ॥

**लब्धरूपे क्वचित्किंचित् तादृगेव निषिध्यते ।**
**विधानमन्तरेणातो न निषेधस्य संभवः । इति ॥**

प्रत्यक्षादिविरुद्धार्थत्वात् अद्वैतावबोधक आम्नायः न यथावस्थितो वर्णयितुं न्याय्यः ॥

शास्त्रप्रत्यक्षविरोधपरिहारः.

यत्त्विदं प्रपञ्चेन साधितं, प्रत्यक्षादिविरोधेऽप्याम्नायस्य बलीयस्त्वं, तद्वशेन प्रत्यक्षादीनामेव भ्रान्तता कल्पनीयेति । तदपि मनोरथमात्रम्—प्रत्यक्षादिविरोधे पदार्थानामन्वययोग्यताविरहात् आम्नायस्यैव तद्विरोधेऽनुदयात् । अतः प्रत्यक्षादिविरोधादाम्नाये गौणी लाक्षणिकी वा वृत्तिरास्थेया ॥

तत्रानन्दश्रुतयः स्वाभाविकदुःखाभावपरतया वर्णनीयाः । लौकि-

कानन्दस्य चाल्पतया दुःखानुषक्ततया वा व्याख्येयाः । एकत्वश्रुतयश्च एकस्मिन्नायतने एकस्यैव स्वामित्वमित्येवंपराः । "इन्द्रो मायाभिः पुरुरूप ईयते" इति देहात्माभिमानेन जन्मनिजन्मनि भिन्न इव भातीत्यर्थः । "एष नेति" इति च शरीरादीनामात्मत्वनिषेधः तद्व्यतिरिक्तप्रतिपत्तिपरः । विज्ञानश्रुतयश्च चिच्छक्तियोगित्वाश्रयात् व्योमादिभ्यो विशेषापादनफलाः । सर्वात्मश्रुतयश्च सर्वस्यात्मार्थत्वात् तादर्थ्यनिमित्तोपचारात् । "आत्मनि विज्ञाते सर्वमिदं विज्ञातमिति" यदुच्यते तदात्मज्ञानस्य परमपुरुषार्थमोक्षफलत्वात् अस्मिन् विज्ञाते सर्वमेव ज्ञानं निष्फलमिति दर्शयितुमित्येषा दिक् ॥

अथोच्येत—वित्तेर्भिन्नस्याप्रकाशात्मनः प्रकाश एवानुपपन्न इति यद्यत्प्रकाशते तत्तत्प्रकाशादभिन्नं, प्रकाशात्मकं हि ब्रह्म, अतो ब्रह्मात्मकं जगत् इति सिद्धमद्वैतमिति । तदिदं स्वपक्षविरुद्धम्—कथमेवं बुद्धिमन्तोऽभिदधति—एवं हि नानाभूतानामाकाराणां प्रकाशाभेदे प्रकाशस्यापि नानाभावापत्तेः अद्वैतं दूरापास्तम् ॥

अथोच्येत—विविधोऽयमाकारप्रपञ्चः अविद्याध्यासवशादवभासते इति, एतदपि स्ववचनविरुद्धम्, सदात्मा प्रकाशः तेन सहासदात्मानः आकारास्तावदभिन्ना इति न घटते । तथाच सति अप्रकाशात्मानस्ते कथमिव प्रकाशेरन् । अपि च अप्रकाशात्मन एव प्रकाशः संभवतीति बाह्यार्थसिद्धावुक्तम् । अत एषोऽपि माहायानिकपक्षानुप्रवेशिनां ब्रह्मवादिनां मोह एव ॥

अपिच अत्यन्तमसन्तं प्रपञ्चं कथमिवाविद्या प्रकाशयितुमलम् । न खल्वसत्ख्यातिरसिद्धा । किन्त्वग्रहणरूपैवेति नयवीथ्यां साधितम् । अतो नाविद्यास्तमयो मोक्षः ॥

आत्यन्तिकस्तु देहोच्छेदः निश्शेषधर्माधर्मपरिक्षयानिबन्धनः मोक्ष इति सिद्धम् । धर्माधर्मवशीकृतो जीवस्तासुतासु योनिषु संसरति । तयोरेकान्तोच्छेदे व्यपगतदेहेन्द्रियादिनिबन्धनः समुत्खातनिखिलसांसारिकदुःखबन्धनः मुक्त इत्युच्यते ॥

कथं पुनरशेषधर्माधर्मपरिक्षयः? न तावदुपभोगेनैव । अनादिशरीरसन्ततिसञ्चितानां भोगसमये संचीयमानानां कर्माशयानामनन्तानां क्षेप्तुमशक्तेः । उच्यते—यः खलु सांसारिकेभ्यो दुःखेभ्य उद्विग्नः तदनुषङ्गशबलेभ्यस्सुखेभ्यो विगतस्पृहः मोक्षायोत्तिष्ठते, स तावद्बन्धहेतुभूतेभ्यो निषिद्धेभ्यः प्रत्यवायहेतुभूतेभ्यः अभ्युदयसाधनेभ्यः निवर्तमानः समुत्पन्नपूर्वौ धर्माधर्मौ भोगेन क्षयं नयन् शमदमब्रह्मचर्यादिकाङ्गोपबृंहितेन आत्मज्ञानेन "न च पुनरावर्तते" इत्यपुनरावृत्तये चोदितेन निश्शेषं कर्माशयं नाशयन् मुच्येत । न चापुनरावृत्तेरर्थवादतया वर्णनम्, आत्मज्ञानस्यापरार्थत्वात् । परार्थत्वे हि पर्णमयीन्यायेन फलश्रुतिरर्थवादतया वर्ण्यते । अपारार्थ्ये तु सैवाधिकारिविशेषणं रात्रिसत्रवत् । न च कर्मविधिशेषभूतमात्मज्ञानम् । तस्यापरार्थत्वात् । परार्थत्वे प्रमाणाभावात्, उपकारलक्षणशेषत्वनिराकरणात् । इत्यलमतिविस्तरेण ॥ इति ॥

सन्मात्रप्रत्यक्षम्.

तदेवमपाकृते स्वरूपातिरेकिणि महासामान्ये यत्स्वमनीषाविनिर्मितकुतर्कबलेन सन्मात्रविषयं प्रत्यक्षमिति साधितं, तदतिदूरोत्सारितम् । एतेनैव न्यायेन शब्दत्वमपि निरस्तं वेदितव्यम् । न हि ककारगकारयोरेकाकारमनुगतं परामृशन्ती मनीषा समुन्मिषति । योऽपि चायं शब्दशब्दः सोऽपि श्रोत्रग्रहणोपाधिबललब्धवृत्तिरिति न जातु जातिकल्पनायै विभवति । तत इदमपहस्तितं, यदाहुः—"शब्दत्वमेव तत्त-

दभिव्यञ्जकध्वनिनिबन्धनया नानावर्णरूपतया विषयीभवत् तस्यतस्यार्थस्यावगमाय कल्पत इति" इति अयं स्फोटवादनिरासः ॥

निर्विकल्पकप्रत्यक्षम्.

(५४) प्रमेयपारायणे तस्य च निर्विकल्पकस्य न स्वलक्षणमात्रं विषयः, जात्याकारावग्राहित्वस्य स्पष्टत्वात् । नापि सामान्यमात्रविषयत्वम् । भेदग्रहणस्य प्रतीतिसिद्धत्वात् । "लब्धरूपे क्वचित्किञ्चित्" इत्यादि च यदुच्यते तदितरेतराभावविषयम्, न तु वस्तुविषयम् । वस्तुभेदप्रतीत्यनन्तरकालं परस्पराभावोऽवसीयते । घटाकारविधानं च वस्त्वन्तरग्रहणानपेक्षमिति अप्रतिपद्यापि वस्त्वन्तरं तद्ग्रहो नानुपपन्नः ॥

तस्मात्सामान्यविशेषौ द्वे वस्तुनी प्रतिपद्यमानं प्रत्यक्षं प्रथममुत्पद्यते । किन्तु वस्त्वन्तारानुसन्धानशून्यतया सामान्यविशेषरूपता न प्रतीयते ॥ इति ॥

यथार्थख्यातिः

प्रकरण पञ्चिकायां नयवीथ्याम् (३२ पु.)—

**यथार्थं सर्वमेवेह विज्ञानमिति सिद्धये ।**
**प्रभाकरगुरोर्भावः समीचीनः प्रकाश्यते ॥**
**अत्र ब्रूमो य एवार्थः यस्यां संविदि भासते ।**
**वेद्यस्स एव नान्यद्धि वेद्यावेद्यस्य लक्षणम् ॥**
**इदं रजतमित्यत्र रजतं चावभासते ।**
**तदेव तेन वेद्यं स्यात् न तु शुक्तिरवेदनात् ॥**
**तेनान्यस्याऽन्यथाभानं प्रतीत्यैव पराहतम् ।**
**परस्मिन् भासमाने हि न परं भासते यतः ॥**
**नन्वेवं रजताभासः कथमेष घटिष्यति ।**
**उच्यते शुक्तिशकलं गृहीतं भेदवर्जितम् ॥**
**शुक्तिकाया विशेषा ये रजताद्भेदहेतवः ।**
**ते न ज्ञाता अभिभवात् ज्ञाता सामान्यरूपता ॥**

रजतव्यवहारांशे विसंवादयतो नरात् ।
बाधकप्रत्ययस्यापि बाधकत्वमतो मतम् ॥
पीतशङ्खावबोधे च पित्तस्येन्द्रियवर्तिनः ।
पीतिमा गृह्यते द्रव्यरहिताऽप्स्विव तिग्मता ॥
पित्तस्याग्रहणं सौक्ष्म्यात् प्रभायामिव तेजसः ।
मधुरे तिक्तधीरेवं व्याख्याता पित्तवर्तिनः ॥
अलातचक्रेऽलातस्य भ्रमतः सर्वतोऽद्भुतम् ।
निरन्तरं धियो जाताः चक्रबुद्धिसमा मताः ॥
कालभेदस्तु शीघ्रत्वात् धिया तासां न लक्ष्यते ।
चक्रधीव्यवहारश्च तेनास्मिन्नपि युज्यते ॥
एतेनैव प्रकारेण सर्वभ्रान्तिषु पण्डितैः ।
ऊहनीया हेतुभेदा यथार्थज्ञानसिद्धये ॥
स्थाणुर्वा पुरुषो वेति सन्देहेऽपि यदा द्वयम् ।
स्मर्यतेऽन्योन्यनिर्मुक्तं तदाऽर्थविरहः कुतः ॥
यदि चार्थं परित्यज्य काचिद्बुद्धिः प्रवर्तते ।
व्यभिचारवती स्वार्थे कथं विश्वासकारणम् ॥
विषयाव्यभिचारित्वं साधयितुं सर्वसंविदामेषा ।
निरमीयत नीतिविदा शालिकनाथेन नयवीथी ॥ इति ॥

इदमत्रावधेयम्—

अख्यातिरेषा सर्वत्र कथञ्चित्कस्य चिन्मता ।
तदेवं सति सर्वत्र सम्यगग्रहणं भ्रमः ॥
एषोऽग्रहस्त्वभावो वा ख्यात्यन्तरमथापि वा ।
नाऽद्योऽभावानुपगमान्नान्त्यः स्यात् ख्यातिरन्यथा ॥
तस्मात्सामान्यधर्मस्य ख्यातिरख्यातिरेव सा ।
स च सामान्यधर्मोऽपि तत्तदंश इतीर्यते ॥ इति ॥

एवं जरत्प्राभाकरैः सुखादेः स्वयं प्रकाशत्वमङ्गीकृतामित्यवगम्यते । अस्मिन् सिद्धान्ते सुखादेः ज्ञानस्वरूपत्वं स्वयं प्रकाशत्वं

चाङ्गीकृतमस्ति. एवं ज्ञानस्य विषयप्रकाशनवेळायां स्वयंप्रकाशत्वादयो विशेषाः बहवः प्रभाकरसम्मताः प्रमेयाः स्वीकृताः । तस्मात् अत्र शालिकनाथप्रबन्धे प्रायेण प्रतिपादितास्सर्वेऽप्यर्थाः भगवता रामानुजाचार्येण सम्यगवलोकिता इति श्रीभाष्यपरिश्रमशालिनां विदितं भविष्यति । एते ह्यर्थाः प्रायेणाङ्गीकृताश्च । अत एव सेश्वरमीमांसापक्षः विशिष्टाद्वैतासिद्धान्तः ॥

न्यायाचार्यसम्मतिः

तथाहि न्यायसूत्रम्—तदत्यन्तविमोक्षोऽपवर्गः (१-१-२२) इति। इदञ्च सूत्रं "ऋणक्लेशप्रवृत्त्यनुबन्धात् अपवर्गाभावः" (४-१-५१) इति सूत्रेण वक्ष्यमाणस्य नित्यसंसारपक्षस्य प्रतिषेधाय प्रवृत्तम् । तस्यैतस्य भाष्ये "नित्यं सुखं महत्त्ववत् मोक्षे व्यज्यते, तेनाभिव्यक्तेनात्यन्तं विमुक्तस्सुखी भवतीति केचिन्मन्यन्ते" इति सविशेषात्मसिद्धान्तः अनूदितः । तस्मिन् सिद्धान्ते मुक्तस्य नित्या देहेन्द्रियबुद्धयश्च कल्पयितव्या इत्यप्यनूदितम् । तेन विज्ञायते विशिष्टाद्वैतसिद्धान्तसम्मतो मोक्षः वात्स्यायनीयभाष्यादपि प्राचीनः प्रसिद्धोऽभूदिति॥

यद्यप्यत्र नित्यसुखपक्षः दुःखाभावपर इति स्वमतमुक्तम्। तथाप्यन्ते "नित्यं सुखं भवति अथापि न भवति नास्योभयोः पक्षयोः मोक्षाधिगमो विकल्पते" इति वचनेन मोक्षो नाऽसिद्धः । तत्प्रभेदस्तु यथा संप्रदायमस्त्विति निगमनं कृतम् । न विकल्पते नाऽप्रामाणिक इत्यर्थः ॥

तथा, (४-१-२२) सूत्रभाष्यम् "आप्तकल्पश्चाय यथा पिताऽपत्यानाम् । तथा पितृभूत ईश्वरो भूतानाम् । नचात्मकल्पादन्यः कल्पस्संभवति । न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उप-

पादयितुम्। आगमाच्च द्रष्टा बोद्धा सर्वज्ञातेश्वर इति बुद्धयादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कश्शक्त उपपादयितुम्" इति । अनेन भाष्येण निरुपाख्यलक्षणनिर्विशेषब्रह्मवादो निराक्रियते ॥

तथा (४–१–३३) सूत्रभाष्ये "अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते । धर्ममात्रमुपजायते । स खलूत्पत्तिविनाशयोर्विषयः" इति स्वायंभुवमतमनूदितमास्ति । तदेव प्रत्यक्षसूत्रे न्यायरत्नाकरे विवृतमस्ति । यथा–कीदृशी पुनर्जननक्रिया, यस्यां कर्तृत्वम्। उपादानकारणदशाविशेषः। यदनन्तरं कार्यस्य सत्ता। तस्यापि दशाविशेषस्य तत्प्राच्यवस्थैव। ततः प्रागपि तथेत्यनादिरेषाऽऽगन्तुककार्यकारणपरम्परा" इति ॥

एष एव सिद्धान्तः श्रीरामानुजाचार्यसम्मतः कार्यकारणभावे इत्यारम्भणाधिकरणभाष्ये स्पष्टम्—"द्रव्यस्योत्तरोत्तरसंस्थानयोगः पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः, स्वावस्थस्य तूत्पत्तिः । अतस्सर्वावस्थस्य द्रव्यस्य सत्त्वात् सत्कार्यवादो न विरुध्यते । अवस्थानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वात् अवस्थावत एवोत्पत्त्यादिकं सर्वमिति निरवद्यम्" इति॥

उदयनाचार्यैरप्यात्मतत्त्वविवेके सेश्वरमीमांसापक्षः अनूदितोऽस्ति। (१२५ पु) वेदसंप्रदायस्सर्गान्तरवेदापेक्ष एवेति सेश्वरमीमांसापक्षः" इति । उल्लिभितश्चायं ग्रन्थः शतदूषण्यां श्रीमद्भिर्वेदान्ताचार्यैः शास्त्रैक्यवादे "सेश्वरमीमांसापक्षोऽपि नातीव व्युच्छिन्नः, परैरनूद्यते च" इति ॥

स्वायंभुवसम्मतिः.

अस्मिन् पक्षे स्वायंभुवानां सम्मतिं विशदयामः । पातञ्जलयोगसूत्रम्—(१-२३) ईश्वरप्रणिधानाद्वा इति । अत्र व्यासदेवभाष्यम्—"भक्तिविशेषावर्जितः ईश्वरः तमनुगृह्णात्यभिध्यानमात्रेण । तदभिध्यान-

मात्रादपि योगिनः आसन्नतरस्समाधिलाभः फलं च भवतीति" इति ॥

अत्र भक्तिविशेषेण ईश्वरवशीकरणमेव सर्वफलसाधनमिति निर्णीयते । अत एवेश्वरप्रणिधानं "शौचसंतोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः" (२–३२) इति नियमेषु निर्दिश्यते । न्यायसूत्रकारोऽप्यक्षपादः (४–२–४) "तदर्थं यमनियमाभ्यामात्मसंस्कारः" इति नियमान् तदन्तर्गतं चेश्वरप्रणिधानं परिजग्राह । अत्र वात्स्यायनोऽपि "यमः समानमाश्रमिणां धर्मसाधनम्, नियमस्तु विशिष्टम्" इतीश्वरप्रणिधानं विशेषसाधनमित्यमन्यत । तस्मात्परमेश्वरभक्त्यवलम्बनमार्गः मोक्षसाधनीभूतः पारमार्थिकः अनादिवैदिकसंप्रदायसिद्धः बहुसम्मतः व्यावहारिकपारमार्थिकावस्थाद्वयवादिभिरपि प्रथमभूमिकायामुपगतः । सर्वाभ्युपगताबाधितव्यावहारिकप्रक्रियाया एव शास्त्रसिद्धायाः पारमार्थिकत्वाभ्युपगमसम्भवे केयमन्याऽपारमार्थिकी काचिदन्या केनापीतरेणाऽनभ्युपगता अवस्था नामान्यत्र संस्कारादिति ॥

## अद्वैतपूर्वपक्षः.

अथ श्रीशङ्कराचार्यप्रबन्धेष्वपि सेश्वरमीमांसापक्षानुवादमुपदर्शयामः. (बृ–उ–४–१–२०) पूर्वपक्षोपन्यासे—"यस्सर्वज्ञस्सर्ववित्, योऽशनायापिपासे अत्येति, असंगो न हि सज्जते, एतस्य वा अक्षरस्य प्रशासने, यस्सर्वेषु भूतेषु तिष्ठन् अन्तर्याम्यमृतः, स यस्तान् पुरुषान्निरूह्यात्यक्रामत्, स वा एष महाजन आत्मा अपहतपाप्मा विजरो विमृत्युः, तत्तेजोऽसृजत, आत्मा वा इदमेक एवाग्र आसीत्, न लिप्यते लोकदुःखेन बाह्यः" इत्यादिश्रुतिशतेभ्यः "अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते" इत्यादिस्मृतिभ्यश्च परोऽस्त्यसंसारी श्रुतिस्मृतिन्यायेभ्यश्च । स च कारणं जगतः ॥

तद्विपरीतश्च संसारी तस्मादहं ब्रह्मास्मीति न गृह्णीयात्। परं हि देवमीशानं निकृष्टस्संसारी आत्मत्वेन स्मरन् कथं न दोषभाक् स्यात्। तस्मान्नाहं ब्रह्मास्मीति युक्तम्। तस्मात् पुष्पोदकाञ्जलि स्तुति नमस्कार बल्युपहार स्वाध्यायध्यानयोगादिभिः आरिराधयिषेत" इति। तथा तत्रैव (५—५-१) "तस्माद्भिन्नावेवात्मानौ क्षेत्रज्ञपरमात्मानाविति केचिद्व्याचक्षते" इति लिखितम्। अनेन जीवेश्वरभेदः भक्तिलक्षणभगवदाराधनस्योपायत्वं च स्पष्टमुक्तम् ॥

इदमेकमपरमुदाहरणम्। कारणापेक्षया कार्यस्य भेदाभेदवादे भर्तृहरिणा वाक्यपदीयेऽयं सिद्धान्तोऽभिहितः—(२—४४१)

**नानात्मकानामेकत्वं नानात्वं च विपर्यये।**
**सर्वात्मकत्वादर्थस्य नैरात्म्याद्वा व्यवस्थितम् ॥ इति ॥**

अत्र ब्रह्मपरिणामवादलक्षणं भेदाभेदवादं अर्थनैरात्म्यवादलक्षणं शून्यवादं च श्रीशङ्कराचार्याः (बृ. उ. ४-१-२०) निराकृत्य निर्विशेषब्रह्मवादं विवर्तवादरूपं प्रकाशयामासुः। तथा हि "स यथोर्णनाभिः तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि च भूतानि व्युच्चरन्ति" इति श्रूयते ॥

अत्रापाततः भेदाभेदलक्षणः ब्रह्मपरिणामवादोऽवगम्यते। स इत्थमनूद्यते—"परमात्मा विकारभावमापन्नः विज्ञानात्मत्वं प्रतिपेदे। स च विज्ञानात्मा परस्मादन्योऽनन्यश्च। येनान्यः तेन संसारित्वसम्बन्धी। येनानन्यः तेनाहं ब्रह्मेति धारणार्हः। एवं सर्वमविरुद्धं भविष्यतीति ॥

तत्र विज्ञानात्मनो विकारपक्षे एता गतयः—पृथिवीद्रव्यवत् अनेकद्रव्यसमाहारस्य सावयवस्य परमात्मनः एकदेशपरिणामः विज्ञाना-

त्मा घटादिवत्। पूर्वसंस्थानावस्थस्य वा परस्यैवैकदेशः विक्रियते केशोषरादिवत् । सर्व एव वा परिणमेत् क्षीरादिवत् ॥

तत्र समानजातीयानेकद्रव्यसमूहस्य कश्चिद्द्रव्यविशेषो विज्ञानात्मत्वं प्रतिपद्यते यदा तदा समानजातीयत्वादेकत्वमुपचरितं स्यात्। अथ नित्यायुतसिद्धावयवानुगतोऽवयवी परमात्मा । तस्य तदवस्थस्यैकदेशो विज्ञानात्मा संसारी । तदा सर्वावयवानुगतत्वात् अवयविन एवावयवगतो दोषो गुणो वेति विज्ञानात्मनस्संसारित्वदोषेण परमात्मा सम्बध्यते इतीयमप्यनिष्टा कल्पना । क्षीरवत्सर्वपरिणामपक्षे सर्वश्रुतिस्मृतिकोप इति ॥

अग्निविष्फुलिङ्गादिदृष्टान्तश्रुतेर्न दोष इति चेन्न—श्रुतेः ज्ञापकत्वात् । न शास्त्रं पदार्थानन्यथाकर्तुं प्रवृत्तम्, किं तर्हि यथाभूतानामज्ञातानां ज्ञापने । किंचातः? शृण्वतो यद्भवति—यथाभूताः मूर्तामूर्तादिधर्माः लोके प्रसिद्धाः, तद्दृष्टान्तोपादानेन तदविरोध्येव वस्त्वन्तरं ज्ञापयितुं प्रवृत्तं शास्त्रम् । न लौकिकवस्तुविरोधिज्ञापनाय लौकिक एव दृष्टान्त उपादीयते, उपादीयमानोऽपि दृष्टान्तो निरर्थक एव स्यात् दार्ष्टान्तिकासङ्गतेः । न ह्यग्निश्शीतः आदित्यो न तपतीति वा दृष्टान्तशतेनापि प्रतिपादयितुं शक्यते प्रमाणान्तरेणान्यथाऽवगतत्वाद्वस्तुनः । न च प्रमाणं प्रमाणान्तरेण विरुध्यते" इत्यादि ॥

अत्र नित्यायुतसिद्धावयवस्थानीयांशरूपचेतनाचेतनविशिष्टांशी परमात्मा इति तुरीयगतिविकल्प एव श्रीरामानुजसिद्धान्त इत्यवधारयन्तु धीमन्तः ॥

अपि च (बृ. ४-३-६) इदं वाक्यमवधार्यताम्—"तस्मात् श्रुत्यर्थकल्पनाकुशलास्सर्व एवोपनिषदर्थमन्यथा कुर्वन्ति । तथापि वेदा-

र्थश्चेत् स्यात्कामं भवतु न मे द्वेषः" इत्युच्यते । एतेन सम्प्रदाया बहुविधाः अनादेः कालात् प्रचरन्तीति स्पष्टमुक्तं भवति । भूयसामेकपक्षश्च स्फुटमुक्तः ॥

तथा भगवद्गीताभाष्येऽपि शाङ्करे (१८–५०) "ननु आदित्यवर्णं, भारूपः, स्वयंज्योतिः इत्याकारवत्त्वमात्मनः श्रूयते" इत्याशङ्कितम् । अयमेव हि विशिष्टाद्वैतसिद्धान्तः इत्यलं बहुना ॥

भास्करपद्धतिः.

अथ भास्कारभाष्यानुवादसंग्रहः—"सर्वज्ञः सर्वशक्तिः निरतिशयसुखसंवेदी मुक्तो भवतीति निरवद्यम्" ॥ (२१)

"जगद्व्यापारेति । स्थितमेतत् स्वमतमविभागेन दृष्टत्वादित्यारभ्य निरवधिकमैश्वर्यमिति । ये पुनर्वेदान्ते मुक्ताः पृथगवतिष्ठन्त इति मन्यन्ते, तन्मतमभ्युपगम्य सावधिकमैश्वर्यं तेषामपि प्रतिपादयितुमिदमधिकरणमिति" ॥ (२४७)

"सोऽश्नुते सर्वान् कामानिति श्रुत्या परमेश्वराधीनमेवैषामैश्वर्यं न स्वातन्त्र्यं भोगमात्रसाम्यलिङ्गात् । न शक्यते वचनशतेनापि वस्तुतत्त्वमन्यथा कर्तुम् । मनसैतान् कामान्, ब्रह्म गमयतीति च प्राप्तिपरा । न भेदप्रतिपादनपरेति मत्वाऽऽह भगवान् बादरायणः—अनावृत्तिश्शब्दादिति । परमात्मनि एकीभूताः तस्मिन् मोदन्ते इति" ॥ (२४९)

"न हि निर्गुणं वस्तु विद्यते" इति ॥ (२३८)

"मुक्तानां सर्वशक्तित्वात् सत्यसंकल्पत्वात् निर्माणशरीरेषु भोगसंपत्तिः । तत्साधनभूतानि च मनांसि प्रादुर्भवन्ति । दर्शयति च शास्त्रं स एकधा भवतीत्यादि" ॥ (२४७)

अत्र मुक्तावपि जीवेश्वरयोः भेदपक्षः अनूदितः । स एव सेश्वर-मीमांसापक्षः ॥

तदेवमनादेः कालात् विदितसकलवेदतदर्थानां स्वयोगमहिम-साक्षात्कृतवेदतत्त्वार्थानां भगवत्पराशरद्वैपायनवाल्मीकिमनुयाज्ञवल्क्य-गौतमापस्तम्बकपर्दिभारुचिप्रभृतीनां वाक्यैः उपबृंहितः वेदव्याख्यातृभिः जैमिनिबादरायणप्रभृतिभिः व्याख्यातः भगवद्बोधायनटङ्कद्रमिडगुहदेव-प्रभृतिभिः पूर्वाचार्यैः परिगृहीतः श्रीनाथमुनियामुनमुन्यादिभिः दिव्य-सूरिभिः प्रवर्तितः सोऽयं सेश्वरमीमांसापक्ष एव भगवता रामानुजा-चार्येण प्रकाशितो विशिष्टाद्वैतसिद्धान्तः ॥

स एष सेश्वरमीमांसासिद्धान्तः सन्मात्रब्रह्मभेदाभेदसिद्धान्तनिष्ठानां यादवप्रकाशाचार्याणां मतानुसारिभिः तत्त्वनिर्णय नीतिमाला भगव-द्गीताव्याख्यानादिप्रबन्धप्रणेतृभिः श्रीमद्भिः नारायणाचार्यैः सामगाचार्य-जैमिनिसूत्राण्येव अन्यथाकृत्य प्रतिष्ठापितः। अस्माभिस्तु तेषामेव सूत्राणां व्याख्यादोषान् प्रतिक्षिप्य समीचीनोऽर्थः प्रतिपाद्यते इति सेश्वरमीमांसा-रम्भे श्रीमद्भिः वेदान्ताचार्यैरभिहितम् ॥

अयं हि तत्रत्यो ग्रन्थभागः—" नारायणार्यैः सूत्राणामन्यथा-करणं प्रौढिप्रकाशनमात्रम् । वयन्तु सामगाचार्यसूत्राणां व्याख्यादोषं प्रतिक्षिप्य सम्यञ्चमेवार्थं प्रतिपादयिष्यामः" इति ॥

ततश्च श्रीमतामाचार्याणां सेश्वरमीमांसाप्रबन्धप्रणयनं विशिष्टा-द्वैतसिद्धान्तं सेश्वरमीमांसापक्षे निक्षेप्तुमेवेति सिद्धम्। अस्माभिस्तु आचा-र्यहृदयमनुरुध्य केवलमीमांसकप्रबन्धेभ्य एव सोऽयमंशः परिपूरित इति सर्वेऽप्याचार्याः परितुष्यन्तीति सुदृढः शोभनः प्रत्ययः ॥

**विलक्षणेयं मीमांसा सेश्वरा सुव्यवस्थिता ।**
**कालदेशदशाचिन्ताचतुराणां सुखंगमा ॥**
**अपूर्वग्रन्थनिर्माणप्रयत्नादपि शोभना ।**
**एतां प्रवृत्तिमस्माकमनुगृह्णन्तु सात्त्विकाः ॥**

इति दर्शनोदये सेश्वरमीमांसापक्षनिरूपणं नाम तुरीयः परिच्छेदः



# विशिष्टाद्वैतदर्शनम्.

विशिष्टाद्वैतसिद्धान्तोदयचिन्तामिषादथ ।
विशिष्टाद्वैतसिद्धान्तपरिभाषा विलिख्यते ॥
सुखबोधाय बालानां कृतिस्संक्षेपकांक्षिणाम् ।
एषा लक्ष्मीपुरं श्रीनिवासविद्वन्मणेरिह ॥

तत्त्वविवेकः.

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ (वाक्यपदी. १-१)
तस्यार्थवादरूपाणि निश्चित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ॥ (वाक्य. १-८)

इति भर्तृहरिणा वाक्यपद्यां शब्दैकतत्त्वविवर्तवादिना औपनिषदः एकत्त्वैकान्तः ब्रह्मैकतत्त्ववादः, द्वैतैकान्तोऽनेकतत्त्ववादश्चानूद्य दूषितः ॥

तत्रैकतत्त्ववादस्वरूपं बृहदारण्यकभाष्ये (५-८-१२) श्रीशंकराचार्येणानुदितमस्ति । यथा "अत्र केचिदाचक्षते---परस्य महासमुद्रस्थानीयस्य ब्रह्मणोऽक्षरस्याप्रचलितस्वरूपस्य ईषत्प्रचलितावस्थाऽन्तर्यामी । अत्यन्तप्रचलितावस्था क्षेत्रज्ञः । यस्तं न वेदान्तर्यामिणम् । तथाऽन्याः पञ्चावस्थाः कल्पयन्ति । तथाचाष्टावस्थाः । (पिण्डो जातिर्विराट् सूत्रं दैवमित्येवं महाभूतसंस्थानलक्षणाः पञ्चावस्थाः, अव्याकृतं साक्षी क्षेत्रज्ञश्चेत्यष्टावस्थाः) अन्येऽक्षरस्य शक्तय एता इति वदन्ति । अनन्तशक्तिमदक्षरमिति । अन्ये त्वक्षरस्य विकारा इति वदन्ति । एता असत्यास्सर्वाः कल्पनाः । कस्तर्हि भेद एषाम्? उपाधिकृत इति ब्रूमः" इति ॥

तत्र प्रपञ्चोऽयं ब्रह्मणः एकस्यैव वस्तुनः अवस्था विकारः शक्तिः इति मतत्रयमनूदितं भवति। तत्रावस्थावादः श्रीभर्तृप्रपञ्चसिद्धान्तः। विकारवादः श्रीभास्करसिद्धान्तः। शक्तिवादः श्रीयादवप्रकाशपरिगृहीतः। शक्तिवादः परिष्कृतः श्रीरामानुजसिद्धान्तः इत्युन्नयामः। श्रीशङ्करसम्मतस्तु सिद्धान्तः तत्रैव भाष्ये "एतास्सर्वाः कल्पना असत्याः। भेद उपाधिकृत इति ब्रूमः" इति स्पुटमुक्तः॥

तत्र शक्तिशक्तिमतोरभेदविवक्षयैकत्ववादः प्राच्यसम्मतः। श्रीरामानुजाचार्यैस्तु "कार्यानुकूलमपृथक्सिद्धविशेषणं हि शक्तिः" इति शक्तिपदार्थनिर्वचनमभिप्रेत्य चेतनाचेतनेश्वरात्मकं पृथक्स्वभावं तत्त्वत्रयमङ्गीकृत्यैश्वरतत्त्वे चेतनाचेतनतत्त्वयोः निरुक्तलक्षणशक्तिरूपत्वेन पृथक्स्थितिप्रतिपत्त्यनर्हत्वलक्षणमैक्यमन्तर्भावरूपमभ्युपगम्य प्राच्यसम्मत एवैकत्ववादस्समर्थितः। ततश्च स्वनिष्ठं विशिष्टं तत्त्वमेकमित्यर्थः। पातञ्जलास्तु स्वतन्त्रतत्त्वत्रयवादिन इति विवेकः॥

एवमस्मिन् सिद्धान्ते प्रभाप्रभावन्नयायेन चेतनाचेतनयोरीश्वरेण सम्बन्धः अंशांशिभाव इति चाङ्गीकृतः। अंशांशिभावस्तु एकवस्त्वेकदेशत्वं ह्यंशत्वम्। विशिष्टस्यैकस्य वस्तुनः विशेषणमंश एव। विशेषणविशेष्ययोरंशांशित्वेऽपि स्वभाववैलक्षण्यं दृश्यते न स्थितिवैलक्षण्यम्। सोऽयमंशांशिभाववादः (२–३–४५, ३–२–२८) एवमेव श्रीभाष्ये निरूपितः॥

तथा (३–२–२६) श्रीभाष्ये अवस्थावादोऽप्यनूदितः। स च स्वरूपपरिणामः उपाधिलक्षणांशपरिणामः शक्तिपरिणामश्चेति त्रिविधस्सम्पद्यते। आद्यः भर्तृप्रपञ्चादिसम्मतः स्यात्। द्वितीयः भास्करसम्मतः। तृतीयः यादवसम्मतः। स एव सर्वानुगतसन्मात्रब्रह्मवादः

"प्रकाशाश्रयवद्वा तेजस्त्वात्" इत्यत्र (३-२-२७) श्रीभाष्ये विवृतः ॥

एतमेव सत्तारूपसामान्यात्मकब्रह्मवादं मण्डनमिश्रः प्रतिपादयामास । तथाहि—

**एकस्यैवाऽस्तु महिमा यन्नानेव प्रकाशते ।**
**लाघवान्न तु भिन्नानां यच्चकास्त्यप्यभिन्नवत् ॥ इति ॥**

इदं पद्यं न्यायमकरन्दे (२९०) आनन्दबोधविरचिते ब्रह्मसिद्धिग्रन्थस्थमित्यभिधायैवं व्याख्यातम्—"यदपि कैश्चित्प्रमेयविकल्पेन सामान्यमेव वस्त्विति स्थापयित्वा सत्ताया महासामान्यरूपत्वात् सन्मात्रमेव वस्त्विति साधितं तदपि न सत्कल्पम्" इति । अस्य च मूलं प्रकरणपञ्चिकायां तत्त्वालोके (१५४ पुटे) अयमेवग्रन्थः परिदृश्यते ॥

तमेतं सत्तामात्रब्रह्मवादं वाक्यपद्यां भर्तृहरिः प्रागेवान्ववादीत्—

**सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।**
**जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः ॥**
**तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥**
**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।**
**सत्यं यत्तत्र सा जातिः असत्या व्यक्तयो मताः ॥ इति च ॥**

ब्रह्मणस्सर्वशब्दवाच्यत्वमप्येतन्मूलकमेव प्रोच्येत । तमेतं सर्वानुगतसामान्यात्मकसल्लक्षणब्रह्मवादं श्रीशङ्कराचार्यः ब्रह्मणस्सामान्यविशेषरूपतानिराकरणेन निराचकारेति सुविदितम् ॥

एवं च श्रीभाष्यानुसारेण (१-४-२०) आश्मरथ्यमतावलम्बी यादवप्रकाशाचार्यः । (१-४-२१) औडुलोमि मतावलम्बी भास्कराचार्यः । (१-४-२२) काशकृत्स्नमतावलम्बी आचार्यबादरायणः । तदनुसारी श्रीरामानुजाचार्य इति निर्णयस्सिध्यति ॥

इदमत्रावधेयम्—यद्यपि श्रीशाङ्करसिद्धान्ते भेदाभेदविषये भेदः आविद्यक अभेधः पारमार्थिक इति। श्रीभास्करसिद्धान्ते भेद औपाधिकः अभेदः स्वाभाविक इति। श्रीयादवसिद्धान्ते भेदः व्यक्तिलक्षणः। अभेदः शक्तिलक्षण इत्येतन्मतत्रये भेद औपचारिकः अभेदो मुख्य इति प्रतिभाति। श्रीरामानुजसिद्धान्ते तु एतद्वैपरीत्येन भेदः तत्त्वत्रयलक्षणो मुख्यः। अभेदो वैशिष्ट्यलक्षणः गौण इत्यभिप्रायः आपाततः प्रतीयते॥

तथापि---विशुद्धात् ब्रह्मणः सृष्ट्यसम्भवात् अविद्यालक्षणः अंशलक्षणः शक्तिलक्षणः परमार्थः अपरमार्थो वा विशेषणपदवाच्यः उपाधिः सर्वैः सृष्टेः प्रागङ्गीक्रियते। तथासत्येकाद्वितीयादिपदानां मुख्यो वा गौणो वा अर्थः परिगृहीतस्स्यादिति निरुपचरितैक्याभिलाषिणो विमृशन्तु। ततश्च सर्वेऽपि विशिष्टैक्यवादिन एवान्ततो भवन्तीति शक्यते प्रतिपत्तुमिति॥

ततश्च श्रीरामानुजाचार्यसिद्धान्ताभिप्रायेणांशविशेषणशक्तिपदानामंशिविशिष्टशक्तपदानां च पर्यायत्वमङ्गीकृत्य विशेषणविशेष्ययोः पृथक्स्वभावतया भेदं चाभ्युपगम्य धातुत्रयवादस्समर्थितोऽपि अशेषचिद्-चित्प्रकारं ब्रह्मैकमेव तत्त्वमित्यैक्यसिद्धान्तोऽपि समर्थितः। ततश्च वैशिष्ट्यमेवैक्यम्, न सर्वस्वरूपैक्यमिति निर्णयः। स चैष सिद्धान्तो नापूर्वः, अपि तु भगवत्पराशरद्वैपायनवाल्मीकिबोधायनटङ्कद्रमिडगुहदेव-कपर्दिभारुचिनाथमुनियामुनमुनिप्रभृतिसम्प्रदायपरंपरया समागत इति वेदार्थसंग्रहादिषु अभिहितम्॥

अपि च—कार्यकारणभावविषये—कार्यकारणयोरभेदः भेदः उभयं अनन्यत्वं चेति चतस्रो विधाः वादिभिरङ्गीकृताः। अत्र तु—

अवस्थाया आगन्तुकत्वमङ्गीकृत्य सूक्ष्मावस्थाविशिष्टस्य कारणस्य स्थूला-वस्थाविशिष्टस्य कार्यस्य चाभेदः स्वीकृतः। अवस्थयोः भेदः स्वीकृतः। इदं लोकदृष्टयनुगुणं पातञ्जलादिभिरभ्युपगतं विलक्षणं माध्यस्थ्यम्। ततश्च अवस्था विकारः शक्तिः अंश इत्यादयः शब्दाः यथायथं समानार्थाः कृता इति संग्रहः। चिदचिद्वस्तुनोरशक्तिशब्देन साङ्ख्ययोगव्यवहारः बहुलोऽस्ति ॥

श्रुतिसमन्वयः

अस्मिन् सिद्धान्ते श्रुतिसमन्वयस्त्वेवम्—" भोक्ता भोग्यं प्रेरितारं च मत्वा " इत्यादिभिः श्वेताश्वतरादिभेदश्रुतिभिः चिदचिदीश्वर-तत्त्वानां विवेकः कृतः। " यस्य पृथिवी शरीरं, यस्यात्मा शरीरम् " इत्यादिभिः छान्दोग्यादिभिः शरीरात्मभावलक्षणस्सम्बन्धविशेषः ईश्वरा-पेक्षया चिदचितोरुपदिष्टः। ततश्च " सर्वं खल्विदं ब्रह्म, तत्त्वमसि " इत्या-दीनामभेदश्रुतीनां विशिष्टैक्यविषयत्वेन मुख्यता व्यवस्थापितेति निर्णयः॥

चिदचिदीश्वरात्मकं तत्त्वत्रयं स्वरूपतः स्वभावतश्च मिथो विभिन्नम्। स्थितितस्तु चिदचित्तत्त्वद्वयमीश्वरतत्त्वादपृथक्सिद्धम्। तद-पृथक्सिद्धिर्नाम तत्सत्तयैव सत्तावत्त्वं तज्ज्ञाततयैव ज्ञातत्वं च। ततश्च सर्वाणि ज्ञानानि ब्रह्मविदां ब्रह्मपर्यन्तानि। तथा सर्वे व्यापाराः सर्वा-ण्यपि प्रयोजनानि। तथा सर्वेपि शब्दाः ब्रह्मपर्यन्ताः, अचिद्विशिष्ट-जीवविशिष्टपरमात्मबोधका इति निर्णयः ॥

ततश्च ब्रह्मणस्सर्वात्मकत्वेन सर्वस्य तच्छरीरत्वेन च तत्त्वमसी-त्यादौ तत्पदार्थस्य जगत्कारणत्वादिविशेषणविशिष्टस्य परमात्मनः युष्मत्प-दार्थस्य सशरीरजीवशरीरकत्वविशेषणविशिष्टस्य परमात्मनश्च विशेष्यस्य स्वरूपैक्यात् सामानाधिकरण्यमुपपद्यते। सर्वं खल्विदं ब्रह्मेत्यत्र सर्वा-

न्तर्यामित्वविशिष्टस्य ब्रह्मत्वविशिष्टस्य चैक्यमनुसंधेयम् । "भिन्नप्रवृत्तिनिमित्तानां शब्दनामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति समानविभक्तिमत्त्वलक्षणस्य शब्दरूपस्य सामानाधिकरण्यस्य पूर्वविद्वद्वैयाकरणनिर्वचनम् । तदर्थेऽपि प्रकार्यद्वैते तादर्थ्यात् ताच्छब्द्यात् प्रकार्यद्वैतं सामानाधिकरण्यमिति सिद्धान्तः ॥

एवं चाभेदश्रुतीनां विशिष्टाद्वैतपदवाच्यस्य विशिष्टैक्यस्य तात्पर्यविषयत्वसमर्थनात् अस्य सिद्धान्तस्य विशिष्टाद्वैतसिद्धान्त इति व्यवहारस्समागतः । तदुक्तं श्रीसुदर्शनसूरिभिः श्रुतदीपिकातात्पर्यदीपिकयोः श्रीवेदान्ताचार्यैः पाञ्चरात्ररक्षायां पाराशर्यविजये महाचार्यैश्च "सामानाधिकरण्यं विशिष्टाद्वैतविषयम्" इत्यक्षरशः ॥

तस्येदमुपव्याख्यानम्—कार्यकारणभावस्थले कार्यावस्थापन्नस्य कारणावस्थापन्नेनैक्यं अवस्थाद्वयापन्नवस्त्वेकत्वम् । यथा मृत्पिण्डोऽयं घटः, सदेवेदं, ब्रह्मैवेदम् "इत्यादौ । अन्यत्र एकविशेषणविशिष्टस्यापरविशेषणविशिष्टेनैक्यम् । यथा—नीलो घटः तत्त्वमसि" इत्यादौ ॥

इयाननयोर्विशेषः—कार्यकारणभावस्थले भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यम् । यथा स एवायं तरुणोऽभूदिति । अन्यत्र समानकालीनाद्वारकविशेषणाश्रयधर्म्यैक्यम् । यथा वेदवित् ब्राह्मण इति । आद्यस्थले बाल्ययौवने भिन्नकालीने शरीरद्वारा विशेषणभूते अवस्थे । अनन्तरस्थले वेदनं ब्राह्मणशरीरं च समकालीने अद्वारकविशेषणे । एवमुभयविधविशेषणविशिष्टयोः धर्मिणोरेकत्वमभेदश्रुत्यर्थः । सामानाधिकरण्यतात्पर्यभूमिरिति यावत् ॥

यत्र पुनरेकं तत्त्वमित्येकशब्दप्रयोगः तत्र विशिष्टं तत्त्वमित्यर्थः ।

तत्रैक्यं वैशिष्ट्यरूपम् । तदुक्तं न्यायसिद्धाञ्जनारम्भे "अशेषचिद्-चित्प्रकारं ब्रह्मैकमेव तत्त्वम् । तत्र प्रकारप्रकारिणोः प्रकाराणां च मिथोऽत्यन्तभेदेऽपि विशिष्टैक्यादिविवक्षया एकत्वव्यपदेशः । तदितर-निषेधश्च" इति । अत्र विशिष्टैक्यमित्यत्र विशिष्टस्यैक्यमिति विग्रहः। वैशिष्ट्यमैक्यमिति तदर्थः ॥

एवं कृत्स्नस्य चिदचिदात्मकस्य प्रपञ्चस्य ब्रह्मणश्च शरीरात्मभाव-स्सम्बन्धः श्रुतिभिरुक्तः । स हि नियतः आधाराधेयभावः नियतः निया-म्यनियामकभावः नियतः शेषशेषिभावो वा । तेन च सम्बन्धेन दारागार-केदारादिषु विद्यमानात्पारतन्त्र्याद्विलक्षणं पारतन्त्र्यं प्रतीयते । यथोक्तं सहस्रनामभाष्ये कूरेशेन भूतात्मेति नामनिर्वचने—"अवरात्मनोऽपीदमेव शरीरं प्रत्यात्मत्वं, यत् व्याप्य साक्षात् प्रवृत्त्यादिषु नियच्छति । एवं परमात्मा सर्वमिति विशेषः । दारागारकेदारादिविलक्षणेन अत्यन्तपार-तन्त्र्येणान्तरङ्गो हि देहस्यात्मविभूतिभावः" इति । आत्मविभूतिभावः आत्मनियाम्यत्वमित्यर्थः ॥

एवं गुणसामान्यस्य गुणविशेषस्य च विधिः निषेधश्च दृश्येते । तत्र गुणसामान्यनिषेधवादाः गुणविशेषविधिवादानुरोधेन उत्सर्गापवाद-न्यायपुरस्कारेण विहितमङ्गलगुणव्यतिरिक्तहेयगुणनिषेधपरतया वर्णिताः । उत्सर्गापवादन्यायो नाम विरोधपरिहाराय शब्दोपात्तविशेषव्यतिरिक्त-विषये सामान्यशब्दस्य संकोचः । "आहवनीये जुहोति, पदे जुहोती" इत्यादिषु प्रसिद्धः ॥

तथा हेयगुणनिषेधवादानुरोधेन सामान्यविशेषन्यायं छागपशु-न्यायापरपर्यायं स्वीकृत्य सामान्यनिषेधस्य विशेषनिषेधे पर्यवसानं च प्रका-शितम् । सामान्यविशेषन्यायो नाम संशयपरिहाराय शब्दोपात्तविशेष-

विषये सामान्यशब्दस्य संकोचः । यथा पशुशब्दस्य छागपरत्वमाश्रीयते । अत्र यद्यपि—

**सामान्यविधिरस्पष्टस्संह्रियेत विशेषतः ।**
**स्पष्टस्य तु विशेषेण नोपसंहार इष्यते ॥**

इत्युक्त्या "स्त्रियं न हन्यात्, आत्रेयी न हन्यात्" इत्यादाविव निषेधस्थले उपसंहारस्य नावश्यकता । सामान्यविधेः स्पष्टत्वात् । तथापि उत्सर्गापवादन्यायेन गुणसामान्यनिषेधवादानां मङ्गलगुणव्यतिरिक्तगुणनिषेधे संङ्कोचस्यावश्यकत्वे संशयपरिहाराय गुणविशेषनिषेधफलकः सामान्यविशेषन्यायः निषेधस्थलेऽपि प्रवर्तितुमर्हतीत्यभिप्रायः। एवं श्रुतीनां मिथो विरोधस्य परिहारः श्रुतिभिरेव प्रदर्शित इति नात्र कल्पनादोष इति श्रीभाष्याभिप्रायः ॥

भेदसामान्यनिषेधवादाश्च भेदविशेषविधिवैयर्थ्यापत्त्या गोबलीवर्दन्यायेन विशेषव्यतिरिक्तविषया इति व्यवस्थापिता । गोबलीवर्दन्यायोनाम वैयर्थ्यपरिहाराय शब्दोपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य सङ्कोचलक्षणः "गामानय बलीवर्दं चानय" इत्यादौ प्रसिद्धः ॥

तथा—विरोधपरिहाराय उत्सर्गापवादन्यायोऽप्यत्र प्रवर्तते । प्रायेण भेदनिषेधस्थले किञ्चिदैक्यं विधाय तच्छेषतयैव भेदस्य निषेधदर्शनात् विधीयमानैक्यविरोधी भेद एव प्रतिषेध्य इति न भेदसामान्यस्य प्रतिषेधसिद्धिः । तथा भेदविशेषस्यापि प्रतिषेधदर्शनात् सामान्यविशेषन्यायोऽप्यत्र प्रवर्तते । अधिकं श्रीभाष्यभूषणे द्रष्टव्यम् ॥

तत्त्वनिर्वचनम्

**अज्ञानादिह संसारः ज्ञानान्मोक्ष इतीर्यते ।**
**अखिलैस्तान्त्रिकैस्तस्मात् तत्त्वज्ञानमिहादिमम् ॥**

तदेतत्तत्त्वज्ञानं भक्तिप्रपत्तिलक्षणविद्याविशेषरूपस्य साक्षान्मोक्षसाधनीभूतस्य मूलकारणतया प्रथमं सम्पादनीयम् । अत एव हि सकललोकोज्जीवनाय प्रवृत्तेष्वध्यात्मशास्त्रेषु सर्वेषु तत्त्वहितपुरुषार्थनिरूपणमुखेन भगवद्वैभवं प्रतिपाद्यते इति सिद्धान्तः । अनेन च तत्त्वज्ञानेन देहात्मभ्रमः स्वतन्त्रात्मभ्रमश्च सर्वानर्थमूलभूतः निवर्तते । तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तिः सर्वतान्त्रिकसम्मता ॥

तत्त्वं नाम अनारोपितं वस्तु । परमार्थ इति यावत् । अपरमार्थत्वमारोपितत्वम् । तच्च परमार्थस्यैव रजतत्वादेः स्वात्यन्ताभाववति प्रतीयमानत्वम् । तदेव मिथ्यात्वमपि । अत एव तस्यात्रासत्त्वं तत्तन्निष्ठात्यन्ताभावप्रतियोगित्वरूपं यथालोकमभ्युपगम्यते । अत्र रजतादिकं व्यवहारयोग्यं विवक्षितम् । नातो रजतांशमादायातिशङ्काया आवकाशः । ततश्च सत्त्वं असत्वमुभयमपि वस्तुधर्मः । ताभ्यामेव सर्वव्यवहारोपपत्तेः पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन सत्तात्रैविध्यकल्पनमप्रकृतम् ॥

यद्धि प्रतीतं बाध्यते मृगतोयादि तदसदेवेति लौकिकी प्रतीतिः । न हि शशविषाणादीनां मृगतोयादीनां च कश्चिद्विशेषो लोके । ततश्चासन्मिथ्याशब्दयोः पर्यायत्वमेव ॥

ततश्च लोकानुसारादेव निरुपाधिको निषेधः निरुपाधिकश्च विधिर्नास्ति इदानीमत्रैवं नास्तीति प्रतीतेः । इदानीमिहेदमस्तीति च प्रतीतेः । न हि केवलमस्तीति वा नास्तीति वा प्रतीतिरस्ति । तथात्वे सर्वशून्यवादः सर्वैक्यवादश्च प्रसज्येयाताम् ॥

असत्पदार्थे वादिविप्रतिपत्तिस्त्वेवम्—वस्तुप्रतियोगिकः वस्त्वनुयोगिकः वस्तुभूतः कश्चित्पदार्थ इति तार्किकसिद्धान्तः ॥

वस्त्वनुयोगिकः अवस्तुप्रतियोगिकः अवस्तुभूतश्चेति निर्विशेष-ब्रह्मवादिसिद्धान्तः ॥

अवस्त्वनुयोगिकः अवस्तुप्रतियोगिकोऽवस्तुभूत इति पक्षः शून्य-वादिनाम् ॥

भावादन्योऽभावो नामकश्चित्पदार्थ एव नास्तीति सर्वभाववादिनां भावान्तराभाववादिनां सिद्धान्तः । तत्रापि स्वरूपमभाव इति धर्मोऽभाव इत्यादयः कल्पाः विविधा विद्यन्ते ॥

तदेतत्तत्त्वं चेतनाचेतनेश्वररूपेण सामान्यतः त्रिविधमपि अचित्तत्त्वं चित्तत्त्वं च ईश्वरतत्त्वायत्तं तत्सङ्कल्पायत्तस्वरूपस्थितिप्रवृत्तिमदित्यर्थः । सर्वस्यापि वस्तुनः स्वरूपं स्थितिः प्रवृत्तिश्चेति तिस्रो विधास्सन्ति । स्वरूपं नाम असाधारणैर्धर्मैर्निरूप्यमाणो धर्मी । सैव स्वरूपसत्तेत्यु-च्यते । व्यवहारयोग्यत्वलक्षणं सत्त्वं तु वस्तूनां धर्मः । प्राचीनैस्तु—(भास्करभाष्ये ९९)

**स्वरूपमेव वस्तूनां परस्परविलक्षणम् ।**
**नानात्वं तत्सुसंवेद्यं भेद इत्यभिधीयते ॥**
**घटरूपं पटे नास्ति पटरूपं घटे न हि ।**
**इति देशान्तराभावः ह्यन्योन्याभाव उच्यते ॥**

इत्युच्यते । भेदप्रतीतिगोचरत्वं तत्तद्वस्तुस्वरूपस्याप्यस्तीति आत्मतत्त्व-विवेके उदयनाचार्यः कथयति । अत एवान्योन्याभावाद्भेदः विलक्षण इति प्राचां व्यवहारः ॥

स्थितिर्नाम उक्तरूपस्य कालान्तरानुवृत्तिः । सा च नित्यानां नित्या अनित्यानामनित्या । प्रवृत्तिर्नाम तत्तत्साध्यो व्यापारः प्रवृत्ति-निवृत्तिलक्षणः । निवृत्तेरपि व्यापाररूपता सर्वसंमता । तत्रेश्वरतत्त्व-

स्वरूपप्रयुक्तमधीनत्वं चेतनाचेतनयोराधेयत्वमित्युच्यते । तत्सङ्कल्पप्रयुक्तमधीनत्वं विधेयत्वमित्युच्यते ॥

तथा च चिदचित्तत्त्वयोः ईश्वरतत्त्वेऽपृथक्सिद्धिलक्षणः अन्तर्भावः—प्रकारैकस्वभावत्वमंशत्वं शक्तित्वं विशेषणत्वं आधेयत्वं विधेयत्वं शेषत्वं शरीरत्वमुपादेयत्वं तादात्म्यं ऐक्यमद्वैतमित्यादिभिः पदैः प्रतिपाद्यते। सर्वथा तयोरीश्वरपारतन्त्र्यपराकाष्ठासिद्धिः फलम् । अयमत्र निर्णयः— आधेयत्वविधेयत्वशेषत्वादीन्यपृथक्सिद्धेरवान्तरभेदाः । एतैरुपलक्षितस्य चेतनापृथक्सिद्धत्वस्य द्रव्यगतस्य शरीरपदप्रवृत्तिनिमित्तत्वमिति ॥

तत्रापीश्वरतत्त्वचेतनतत्त्वयोः परस्परप्रीतिमुपाधीकृत्य पितृपुत्रभावः गुरुशिष्यभावः स्वामिभृत्यभावः पतिपत्नीभावः इत्यादयस्सम्बन्धाः सर्वविधबन्धुत्वलक्षणाः यथालोकं बुद्ध्यारोहाय निरूप्यन्ते ॥

तच्चेदं तत्त्वत्रयमपि नित्यमुच्यते । द्वयी चेयं नित्यता कूटस्थनित्यता परिणामिनित्यता च । कूटस्थनित्यता चेतनेश्वरयोः परिणामिनित्यता अचेतनस्य । यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तदपि नित्यम् । उभयत्रापि तत्त्वानभिघातान्नित्यत्वम् ॥

तत्र तत्त्वत्रये प्रथममचेतनतत्त्वं निरूप्यते। अचेतनं नाम ज्ञातृत्वरहितं वस्तु। तस्य प्रवृत्तिलक्षणव्यापारसत्त्वेऽपि ज्ञातृत्वाभावात् बुद्धिपूर्वकप्रवृत्तिर्नास्तीति कर्तृत्वं भोक्तृत्वं च न स्तः। तदिदमचेतनं त्रिगुणं कालः शुद्धसत्त्वं ज्ञानमिति चतुर्विधम् ॥

## त्रिगुणतत्त्वम्.

त्रिगुणं नाम सत्त्वरजस्तमोरूपगुणत्रयस्याश्रयभूतं शास्त्रैकसमधिगम्यं अधस्ताद्विभु द्रव्यम् । तदेव मूलप्रकृतिरित्युच्यते सर्वविकारान्

प्रकरोतीति। मायेत्यप्युच्यते विचित्रसृष्ट्युपकरणत्वात्। अविद्येत्यपि विद्याविरोधित्वात्। विकारः परिणामः दशा अवस्था इत्यनर्थान्तरम्। आगन्तुकः अपृथक्सिद्धः धर्मोऽवस्था। विकाराश्रयत्वादिदं द्रव्यम्। विकारपदं धर्मिपरतयाऽपि प्रयुज्यते॥

सत्त्वं नाम चेतनस्य ज्ञानसुखादिहेतुभूतो गुणविशेषः। रजः रागदुःखादिहेतुर्गुणः। तमः मोहालस्यनिद्रादिहेतुर्गुणः। एते गुणा नियतकालेनेश्वरसंकल्पेन समावस्थाश्चेन्महाप्रलयः। विषमावस्थाश्चेत् सृष्टिः। तथाच गुणानां साम्यावस्था प्रलयः। वैषम्यावस्था सृष्टिः। तस्याः कालान्तरानुवृत्तिः स्थितिः। प्रलयदशायामपि त्रिगुणद्रव्यं सूक्ष्मसुसदृशविकारसंततिमदेव वर्तते॥

एतेषां गुणानामुद्भवाभिभवलक्षणविषमावस्थायां सत्यां महदादिविकारप्रादुर्भावः। समावस्थगुणत्रयाश्रयभूता मूलप्रकृतिरेव अतिसूक्ष्मैः विकारविशेषैः अव्यक्तमक्षरं तम इति पदैरपि व्यपदिश्यते। ततश्च इदमेव द्रव्यं समविकारदशायामव्यक्तम्, विषमविकारदशायां व्यक्तमिति च गीयते॥

तत्र व्यक्तं महदादि पृथिवीपर्यन्तं त्रयोविंशतिविधतत्त्वस्वरूपं भवति। अस्यामपि दशायां त्रिगुणे विकाररहितः प्रदेशः विकारसहितश्च महासमुद्रे प्रचलिताप्रचलितप्रदेशाविव स्तः। महदादिविकाररहितप्रदेशेऽपि प्रलयदशायामिव सृष्टिदशायामप्यतिसूक्ष्मो विकारसन्तानः सुसदृशः प्रवहत्येव॥

अस्य च त्रिगुणस्य निरवयवत्वं सावयवत्वं वेति पक्षद्वयमस्ति। आद्यपक्षे प्रदेशभेदेन महदादिविकारस्वीकारेऽपि परमाण्वाकाशसंस्कारसंविदात्मादिषु निरवयवेष्वपि संयोगशब्दावरणानावरणनानाविषययोग-

सुखादिप्रादेशिककार्यदृष्टान्तेन भेदाभेदवादप्रसङ्गः परिह्रियते। द्वितीयपक्षे कारणत्वौपयिकसङ्घातावस्थाविशेषनिबन्धनः एकत्ववाद इति सिद्धान्तः ॥

एवंविधेषु विषमविकारेषु प्रथमो विकारः कार्यपरिणामादिपद-वाच्यः महान् । इदं तत्त्वं मनसस्सहकारि सत् पुरुषस्याध्यवसायाख्यं प्रयत्नं जनयतीति बुद्धिरित्युच्यते । तथा गुणवैषम्येण सात्त्विकं राजसं तामसं चेति त्रिधा विभज्यते ॥

तस्मादुत्पन्नो विकारः अहङ्कारतत्त्वम् । एतत्सहकृतेन मनसा देहे आत्मभ्रमो जायते । अनहमि देहे अहंभ्रमं करोतीत्यहंकार इतीदं व्यपदिश्यते । इदमपि तत्त्वं कारणभूतमहत्तत्त्ववत् गुणवैषम्येण त्रिविधं भवति । तत्र सात्त्विकाहंकारो वैकारिक इति राजसाहंकारो तैजस इति तामसाहंकारो भूतादिरिति च व्यवह्रियते । तामसाहंकाराद्भूतानि जायन्त इति तस्य भूतादिरिति नाम । एवं सात्त्विकाहंकारादिन्द्रियाणि जायन्त इति तस्येन्द्रियादिरित्यपि नामास्ति । राजसाहंकारस्तूभयोरनुग्राहकः ॥

इन्द्रियेष्वान्तरं मनः एकमेव । तदेतत् संकल्पस्मृत्यादिकरणं ज्ञानसामान्यस्य कारणभूतम् । तदेव अध्यवसायाभिमानचिन्तारूपस्य त्रिविधस्य ज्ञानस्य करणतया बुद्ध्यहंकारचित्तशब्दैर्व्यपदिश्यते । अध्य-वसायात्मकबुद्ध्युत्पत्तौ एतत्सहकारितया महत्तत्त्वमपि बुद्धिपदव्यपदेश्य-मिति प्रागेवोक्तम् । एवं च अध्यवसायपदं प्रयत्ननिश्चयोभयपरमित्यवधेयम् । तत् हृदयदेशवर्ति ॥

बाह्येन्द्रियाणि दश वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि वचनादानगमनविसर्गानन्दानां करणानि, श्रोत्रत्वक्चक्षुर्जिह्वघ्राणानि पञ्च ज्ञानेन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि । अत्र त्वक्चक्षुरु-भयं यथार्हं द्रव्यग्राहकमपि भवतः । श्रोत्रादिपञ्चकस्य क्रमेणाकाशादि-

भूतपञ्चकमाप्यायकं भवति । आप्यायनं नाम सामर्थ्यव्यञ्जनम् । मनः-प्राणवाचां क्रमेण पृथिव्यप्तेजांस्याप्यायकानि । तत्र प्राणो नाम वायुतत्त्वस्यावस्थाविशेषः । न तत्त्वान्तरम् । एतेषामिन्द्रियाणां शरीरावयवेषु तत्रतत्र विद्यमानत्वात्तत्तदवयववाचकशब्दैरेव व्यवहारः । चक्षुषः श्रोत्रस्य च विषयदेशं प्राप्य कार्यकारित्वात् इतरेषां तदभावात् यथायोगं प्राप्यकारित्वमप्राप्यकारित्वं चाभ्युपगम्यते ॥

तामसाहङ्कारात् शब्दादीनि तन्मात्राणि क्रमेण द्वारीकृत्य आकाशादिभूतपञ्चकमुत्पद्यते । तन्मात्रं नाम क्षीरदध्नोर्मध्यमावस्थावत् काचित् सूक्ष्मावस्था । तथाचोद्भूतशब्दादिकं भूतम्, अनुद्भूतशब्दादिकं तन्मात्रमिति विभागः । अतएव तन्मात्राण्यविशेषा इति भूतानि विशेषा इतिच व्यवह्रियन्ते । आकाशादिषु शब्दादीनां गुणानामुत्तरोत्तरमुपचयः । तथाच आकाशे शब्दः । वायौ शब्दस्पर्शावित्येवमूह्यम् । तमो नाम पृथिव्या एवावस्थाविशेषः । आकाशस्य नीरूपत्वेपि कालस्येव विषयस्वभावाधीनं चाक्षुषत्वम् । वायुः त्वगिन्द्रियग्राह्यः । तेजः प्रभाप्रभावद्भेदेन द्विविधम् । आवरणसदसद्भावाधीनसङ्कोचविकासप्रसारी तेजोविशेषः प्रभा । तद्वान् प्रभावान् । मणिरजतसुवर्णादिकं पार्थिवमेव । तत्र तेजोंशः प्रभाकिरणादिः ॥

अत्र तत्त्वोत्पत्तिर्नाम तालपलाशताटङ्कन्यायेन अवस्थान्तरापत्तिरेव । न तु द्रव्यान्तरोत्पत्तिः । सैषावस्थैव द्रव्यस्य स्वस्याश्चोत्पत्तिरित्युच्यते । तादृशावस्थाविशिष्टं पूर्वसिद्धं द्रव्यमेव उत्पद्यते घट इति व्यवहारार्हः । अवस्था त्वसती । अतः द्रव्यांशे सत्कार्यवादः । अवस्थांशे कारकाणामर्थवत्त्वम् । अवस्थानां धर्माणां धर्म्यपृथक्सिद्धत्वात् पृथगुत्पत्तिस्थितिप्रतिपत्तयो नेष्यन्ते ॥

एवं च त्रिगुणं केवलं प्रकृतिः महदहङ्कारतन्मात्राकाशवायु तेजोजलानि प्रकृतिविकृतयः । इन्द्रियाणि पृथिवी च विकृतय एव । तत्र प्रकृतिविकृतिषु त्रिगुणप्रकृताविव एकदेशे विकारः । अविकृत-प्रदेशास्तु अप्रचलितसमुद्रप्रदेशा इव सदृशविकारसन्तानवन्त एव वर्तन्ते ॥

एवं पृथिवीपर्यन्तानि तत्त्वानि समष्टिरित्युच्यते । एतेषामेकदेशैः पञ्चीकरणप्रक्रियया संहत्यजायमानाः विकाराः व्यष्टिरित्युच्यते । तत्रा-ण्डानि तदावरणानि तदन्तः चतुर्दश भुवनानीत्येवमादीनि पुराणेषु व्यक्तानि ॥

तत्र मूलप्रकृतितो विकारप्रादुर्भावः प्राकृती सृष्टिः । ब्रह्मणा चतुर्मुखेन क्रियमाणा सृष्टिः नैमित्तिकी । प्रत्यहं दृश्यमाना सृष्टिः नित्या । एवं नित्यनैमित्तिकप्राकृतभेदेन सर्गः त्रिविधः । प्रलयोऽपि नैमित्तिकप्राकृतात्यन्तिकभेदेन त्रिविधः । यथा—

**सर्वेषामेव भूतानां त्रिविधः प्रतिसंचरः ।**
**नैमित्तिकः प्राकृतिकः तथैवात्यन्तिको लयः ॥**
**ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसंचरः ।**
**आत्यन्तिकस्तु मोक्षाख्यः प्राकृतो द्विपरार्धकः ॥**

इति विष्णुपुराणम् । (६-३-२) तत्र प्रलयो नाम न स्वरूपोच्छेदः । अपितु अविभागेनावस्थानम् । तदपि क्षीरे नीरस्येव नामरूपविभागा-नर्हस्संसर्गः । मोक्षे त्वात्यन्तिके लये देवादिनामरूपसंसर्गविनाश एव । एवमचेतनतत्त्वविभागः सृष्टिप्रलयादिविचारश्च शास्त्रेण सिद्ध्यति । नानुमानेन । अतीन्द्रियविषयेऽनुमानं नाभ्युपगम्यते मीमांसकैः । ततश्च पृथिव्यादीनि भूतानि प्रत्यक्षप्रमाणेनैव सिद्धानि । एकादशेन्द्रियाणि प्रकृ-तिमहदहंकारात्मकानि त्रीणि तत्त्वानि च शास्त्रेणैव सिद्धानीति सिद्धान्तः॥

एवं पूर्वावस्थां विहाय विजातीयावस्थाप्राप्तिमेवोपाधीकृत्य तत्त्वान्तरव्यवहारः। पृथिवीत्वावस्थां मूर्तिलक्षणां काठिन्यापरपर्यायामविहायैव जायमानेषु अनन्तेषु विकारेषु तत्त्वान्तरगणना नास्ति। ततश्च पञ्चीकरणात्प्राक्समष्टिसृष्ट्यवस्थापेक्षया तत्त्वगणना । व्यष्टिसृष्ट्यवस्थापेक्षया तु आनन्त्यादपरिसङ्ख्यानम्॥

शैवदर्शने भोजदेवप्रणीते तत्त्वप्रकाशे प्रबन्धे तत्त्वव्यवस्था त्वेवं कृता । यथा—

**आप्रलयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम् ।**
**तत्तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ॥ इति । ७२ ॥**

एतेषु तत्त्वेषु प्रकृतिमहदहङ्कारपञ्चभूतानि शरीरारम्भकद्रव्याणि । इन्द्रियाणि त्वसङ्ख्यातानि आभरणप्रत्युप्तरत्नानीव प्रतिशरीरमाश्रितानि। ततश्च सर्गमारभ्य महाप्रलयपर्यन्तं सूक्ष्मरूपैः देहारम्भकैः तत्त्वैस्सेन्द्रियैस्संपरिष्वक्तः चेतनः संचरति । दर्शनान्तरवत्सूक्ष्मदेहो नोपगम्यते । ततश्च एकोनविंशतितत्त्वात्मकः सङ्घातः भूतसूक्ष्मपदव्यपदेशार्हः जीवस्य संसारे गमनागमनादिसाधनं भवति ॥

अद्रव्याणां स्वरूपस्थितिप्रवृत्त्यादिकं सर्वं द्रव्यैकनिबन्धनमिति तेषां पृथक्तत्त्वत्वेन न परिगणनम् । वैशेषिकादिसम्मताः सर्वेऽपि पदार्थाः तत्त्वत्रय एवान्तर्भवन्तीत्युत्तरत्र प्रतिपाद्यते ॥

कालतत्त्वम्.

कालो नाम प्रत्यक्षसिद्धं ज्येष्ठकनिष्ठबालवृद्धचिरक्षिप्रभूतभविष्यदादिव्यवहारस्य विशेषहेतुभूतं नित्यमेकं विभु द्रव्यम् । क्षणदिनयुगकल्पमहाकल्पादिविभागस्तस्यैवावस्थाभेदः । अपि चोपाधिभेदात् शीतकालः उष्णकाल इत्यादिव्यवहारवत् सात्त्विककालः राजसकालः तामसकालश्चेति व्यवह्रियते ॥

सर्वमपि लीलाविभूतिकार्यं कालायत्तम् । तस्मात्त्रिगुणविकारास्सर्वेऽपि कालविशेषनियता इति कालाधीना इत्युच्यन्ते । नित्यविभूतावपि कालो विभुत्वाद्व्याप्यैव वर्तते । तथापि तत्र जायमानमजायमानं सर्वं परमेश्वरसङ्कल्पायत्तम् । न कालायत्तम् । कालसम्बन्धस्तु सदा पश्यन्तीत्यादिव्यवहारहेतुभूतोऽस्त्येव ॥

स च कालः सर्वास्वपि प्रतीतिषु पदार्थविशेषणतया प्रतीयते । ततः षडिन्द्रियवेद्य इत्युच्यते । काले रूपाभावेऽपि विशेष्ये घटादिषु रूपसत्त्वात् वस्तुस्वभावाद्वा चाक्षुषप्रत्यक्षजनने नानुपपत्तिः ॥

सर्वप्रत्ययवेद्यत्वं यथा—अयं घट इत्यादिप्रत्ययेषु इदंत्वमवभासते । तच्च वर्तमानकालसम्बन्धित्वरूपमित्येकः पन्थाः । घटोऽस्ति पटोऽस्तीत्यादिषु सर्वत्रास्तित्वं भासते । तच्च कालसम्बन्धरूपमित्यपरो मार्गः । स्वरूपसत्तातिरिक्तं सत्तारूपं सामान्यं नाभ्युपगम्यते ॥

कालस्य परिणामोऽपि क्षणरूपेणैव । क्षणसङ्ख्याधीनसङ्घातेन दिनादिव्यवहारोपपत्तिः । परिणामलक्षणो विकारोऽपि अवयववृद्धिह्रासादिलक्षणः अवस्थान्तरापत्तिलक्षणश्चेति द्विप्रकारः । आद्यः त्रिगुणे । अनन्तरः कालादाविति संक्षेपः ॥

## शुद्धसत्वम्.

शुद्धसत्त्वं नाम त्रिगुणद्रव्यवृत्तिसत्त्वात् विलक्षणस्य सत्त्वगुणस्याश्रयभूतं शास्त्रैकसमधिगम्यं उपरिष्टाद्विभु द्रव्यम् । इदं चतुर्मुखादि सर्वपदापेक्षया निरतिशयभोग्यभूतस्य परमपदवाच्यस्याप्राकृतदेशस्यानन्तस्य नामधेयम् । अस्मिन् वैकुण्ठलोके विद्यमानं सर्वं पदार्थजातं शुद्धसत्त्वगुणवद्द्रव्यरूपत्वेन स्वप्रकाशत्वेन च शुद्धसत्त्वद्रव्य-

मित्येकतत्त्वत्वेन व्यवह्रियते। निरतिशयानुकूलस्वभावतया निरतिशयानन्दमित्युच्यते ॥

ज्ञानशक्तिबलैश्वर्यतेजोरूपस्य भगवतष्षाड्गुण्यस्य व्यञ्जकत्वात् षाड्गुण्यमयमिति पञ्चोपनिषन्मन्त्रप्रतिपाद्यतया पञ्चोपनिषन्मयामिति अप्राकृतपञ्चभूतात्मकतया पञ्चशक्तिमयमिति चोच्यते। वाङ्मनसापरिच्छेद्यस्वरूपस्वभावं भोग्यभोगोपकरणभोगस्थानमयं चैतत् शुद्धसत्त्वम् ॥

अत्र द्रव्ये नित्यानि शब्दादिगुणविभागवान्ति भूतानि अनित्यानि च त्रिगुणमण्डल इव सन्ति। नित्यान्येव भगवतो विग्रहभूषणायुधविमानमण्टपगोपुरपुष्करप्रभृतीनि प्रचुराणि सन्तीति नित्यविभूतिरित्युच्यते मण्डलमिदम्। ऐश्वर्यं हि विभूतिपदार्थः। त्रिगुणमण्डलस्य प्रवाहतो नित्यत्वेपि यथासङ्कल्पं सृष्टिप्रलयादियोगात् लीलाविभूतिरित्यस्य व्यपदेशः। स्वयंप्रयोजनोऽनायासव्यापारो हि लीला। तद्विषयः प्रपञ्चोऽपि लीलापदव्यपदेश्यो भवति। अत एवेश्वरतत्त्वमुभयविभूतिविशिष्टं न तु दरिद्रमिति सिद्धान्तः ॥

ईश्वरस्य नित्यानामनन्तादीनां च देहेन्द्रियादयः नित्यविभूतिद्रव्यसजातीया एव नित्याः। मुक्तानां तु इच्छानुगुणं नित्या अनित्या अपि। एकैकस्य बहुविधा अपि सन्ति। इच्छायां सत्यां विदेहा अपि मुक्ताः स्थातुं योग्याः। त्रिगुणद्रव्यं यथा बद्धानां बन्धस्थानमधोदेशेऽनन्तपरिमाणं तथा मुक्तानामिदं मुक्तिस्थानमुपरिदेशेऽनन्तपरिमाणम्। शुद्धसत्त्वमयास्सर्वेऽपि नित्या अनित्याश्च पदार्थाः भगवदिच्छायत्ता न कालायत्ताः। सैषा नित्यविभूतिः त्रिपाद्विभूतिरिति, लीलाविभूतिश्चैकपाद्विभूतिरिति व्यवहारोऽस्ति। उपासनार्थोऽयं विभागः न पुनः समचतुर्भागविभागः ॥

भगवतः अवतारविग्रहाः शुद्धसत्त्वद्रव्यमयपरवासुदेवविग्रहांश-मूलाः । भगवत इव विग्रहस्यापि व्यापित्वाद्या विचित्राश्शक्तयस्सन्ति । अत एव विश्वरूपविग्रहप्रदर्शनमपि युज्यते । लक्ष्मीविग्रहास्तु पररूपस्य वक्षःस्थले विराजमानः हारिमरतके तप्तजाम्बूनदाभः मध्यस्थनीलतोय-दविद्युत्पुञ्जसदृशो यो विग्रहविशेषः तदंशमूला इति निर्णयः ॥

अत्रैव नित्यविभूतौ आमोदप्रमोदसम्मोदवैकुण्ठरूपा विभागाः श्रूयन्ते । अत्र पूर्वाः त्रयो विभागाः प्राकृतमण्डले एवेति सिद्धान्तः । सालोक्यसामीप्यसारूप्यलाभोऽपि क्रमेण तेष्वेवेति केचित्समरसयन्ति । सायुज्यं परं समानानन्दवत्त्वरूपं वैकुण्ठप्राप्त्यनन्तरमिति विशेषः ॥

अप्राकृतपदार्थस्यावतारविग्रहादेः प्राकृतमण्डले, प्राकृतपदार्थस्य भूतसूक्ष्मस्य विरजानद्युत्तरभागेऽप्राकृतमण्डले चाभ्युपगमात् प्राकृता-प्राकृतसंसर्गो नानुपपन्नः । ततश्च प्राकृतमण्डले अप्राकृतानामनन्तानां विष्णुलोकानामपि सम्भवस्य प्रामाणिकत्वे वैदिकपुत्रानयनवृत्तान्तः जयविजयवृत्तान्तः शिशुपालवृत्तान्तः सर्वोऽप्येवमादिः निराक्षेप संपनी-पद्यत इत्युत्पश्यामः। विरोधपरिहाराख्यं रहस्यमप्यस्यार्थस्यानुकूलं भवति॥

## ज्ञानम्.

चेतनतत्त्वायेश्वरतत्त्वाय च स्वस्य परस्य च प्रकाशकं विलक्ष-णमिदमेकमचेतनं स्वतस्सिद्धं तत्त्वम् । ज्ञानं संवित् बुद्धिः उपलब्धि-रित्यादिपदैरेतत् व्यवह्रियते । ज्ञानत्वं नाम स्वस्य परस्य वा कस्यचित् प्रकाशकत्वम् । प्रकाशश्च व्यवहारानुगुण्यं, तदापादकत्वं प्रकाश-कत्वम् । नैयायिकप्रक्रियया प्रकाशपदार्थः विषयत्वरूपः मीमांसकप्र-क्रियया प्राकट्यरूपः। सिद्धान्ते व्यवहारप्रतिसम्बन्धित्वम् । तत्तु व्यव-हारहेतुमात्रसाधारणमपि विशिष्य ज्ञानस्यैव तदापादकत्वमित्यवधेयम् ॥

इदं च द्रव्यं चेतनेश्वरतत्त्वद्वयैकाश्रितं स्वरूपतो नित्यमपि विषयप्रकाशनवेलायां स्वाश्रयाय स्वयं प्रकाशते । यतः घटमहं जानामि पटमहं जानामीत्यादिकः सर्वेषामात्मसाक्षिकोऽनुभवः ॥

चेतनस्येश्वरस्य च स्वरूपनिरूपकधर्मेषु अस्य प्रधानतया परिगणनात् धर्मभूतज्ञानपदेन व्यपदेशः । धर्मिणोऽप्याश्रयस्य चेतनस्येश्वरस्य च स्वरूपं स्वयमेव स्वव्यवहारानुगुण्यापादकमित्यभ्युपगमात् ज्ञानपदव्यपदेशार्हमिति धर्मिव्यावृत्त्यर्थं च धर्मभूतमिति विशेषणम् ॥

अनेन धर्मभूतज्ञानेनैव जीवेश्वरयोः ज्ञातृत्वकर्तृत्वभोक्तृत्वादयो धर्माः । स्वप्रकाशकत्वस्य ज्ञानपदप्रवृत्तिनिमित्तस्य शुद्धसत्त्वतत्त्वेऽपि स्वीकारात् जीवेश्वरधर्मभूतज्ञानशुद्धसत्त्वानां चतुर्णामपि शास्त्रेषु ज्ञानपदेन व्यवहारः । सर्वज्ञविज्ञाने धीरस्तीति विज्ञाने च ज्ञानभानस्य निर्विवादतया ज्ञानस्य स्वप्रकाशकत्वम् ॥

इदं च ज्ञानं प्रतिपुरुषनियतं सर्वगोचरस्वभावं संसारावस्थायां कर्मणा सङ्कुचितं तत्तत्कर्माधीनतारतम्यवत् प्रसरणभेदाधीनप्रलयोदयव्यपदेशभाक्च । ततश्च सावयवमिदं द्रव्यमिति सिद्धान्तः ॥

ज्ञानसम्बन्धश्च द्रव्येषु संयोगलक्षणः । अद्रव्येषु संयुक्ताश्रयणरूपः । भूतभविष्यद्वस्तुनोरपि वस्तुस्वरूपस्य नित्यत्वात् पूर्वोत्तरावस्थयोरेव प्रागभावध्वंसरूपत्वात् ध्वंसप्रतियोगी घटः प्रागभावप्रतियोगी घट इति प्रतीतिविषयत्वस्य न काऽप्यनुपपत्तिः । देशान्तरलोकान्तरवर्तिपदार्थेनापि निरतिशयवेगवत्तया संयोगमर्हति । स्मृतेर्विषयसम्बन्धस्तु संस्कारं द्वारीकृत्य भवति ॥

प्रदीपस्वभावाधीनप्रभास्वभाववत् धर्मिस्वभावाधीनो धर्मस्यै-

तस्य तादृशः स्वभासकत्वादिस्वभावः । ततश्च सर्वप्रसरणेष्वपि प्रभा-स्थानीये स्वस्मिन् प्रत्यक्ष प्रकाशात्मकमेवेदम् । प्रदीपस्थानीयो धर्मिभूत आत्माऽपि स्वसामर्थ्येनैव सदा प्रत्यक्षतयैवानुभूयते । ततश्च घटमहं साक्षात्करोमि, अनुमिनोमीत्येवानुभवोल्लेखः । स्मरणलक्षणप्रसरणेष्वपि विषयांशे परोक्षत्वमात्मांशे आश्रयांशे च प्रत्यक्षत्वमित्येव निर्णयः । प्रसरणभेदाधीनभेदमाश्रित्यैव ज्ञानस्य ज्ञानान्तरवेद्यत्वव्यवहारः । एवं प्रत्यक्षमनुमितिः शाब्दबोधः इत्यादिव्यवहारोऽपि प्रसरणभेदनिबन्धन एव॥

तदेतदीश्वरस्य नित्यानां मुक्तानां च निरतिशयविकासेन विभ्वपि संकल्पानुग्रहादिलक्षणावस्थान्तरभागपि भवति । ततश्चेदं सङ्कोचविकासादियोगात् द्रव्यमिति, आत्मरूपद्रव्यैकाश्रिततया गुण इति जानातीत्यादिव्यपदेशार्हत्वात् क्रियेति च कथ्यते ॥

एतत् ज्ञानतत्त्वमेव सुखदुःखेच्छाद्वेषप्रयत्नसंस्काराद्यवस्थावदपि भवतीति सुखादीनां न पदार्थान्तरत्वम् । अनुकूलतया वेदनीयं हि सुखम् । ज्ञानमेव अनुकूलविषयविशेषितं स्वयमप्यनुकूलं सत् स्वप्रकाशतया सुखानुभवरूपमपि भवति । ह्रीः भीः धीरित्याद्यन्तःकरण-वृत्तितया प्रसिद्धास्सर्वेऽप्यान्तरपदार्थाः ज्ञानतत्त्वस्यैवावस्थाविशेषाः । "सर्वं मन एव" इत्यादिवचनमप्येतासामवस्थानां करणतया मनसः उपपद्यते ॥

एवं पुण्यपापलक्षणमदृष्टमपि ईश्वरीयधर्मभूतज्ञानस्य प्रीत्यप्रीति-रूपे ये अवस्थे ते एवेति सिद्धान्तः । आलंकारिक सम्प्रदाये प्रसिद्धाः ये रत्यादयः स्थायिनो भावाः शृङ्गारादयो रसाश्च सर्वेऽप्येतस्यैव प्रसरण-भेदाः । ततश्चात्मव्यतिरिक्तं मनोभिन्नं सर्वमान्तरं वस्तुजातं धर्मभूतज्ञान-तत्त्वात्मकमिति शास्त्रतः तदनुगुणतर्कतोऽनुभवतश्च निर्णयः ॥

प्रमाणम्.

अथ धर्मभूतज्ञानावस्थाविशेषभूतं प्रमाणं निरूप्यते। अत्र प्रमाणेनैव प्रमाणनिरूपणं कर्तव्यम्। अप्रमाणेन प्रमाणनिरूपणमप्रामाणिकमेव स्यात्। अतः यथा अहं सत्यं वदामीति वाक्यं वक्ष्यमाणवाक्यस्य सत्यतामवगमयत् स्वस्यापि सत्यतामवगमयेदेवं प्रमाणनिरूपणप्रमाणं स्वस्यापि प्रामाण्यं निरूपयत् प्रमाणसामान्यमपि निरूपयतीति ध्येयम् ॥

प्रमाणपदं प्रमाकरणं प्रमाणमिति करणव्युत्पत्त्या प्रमायाः करणभूतमिन्द्रियलिङ्गादिकमाचष्टे। प्रमीयत इति प्रमाणमिति भावव्युत्पत्या इन्द्रियलिङ्गादिजन्यं ज्ञानमाचष्टे। अत उभयविधयाऽपि लक्षणमुच्यते ॥

प्रमाकरणं प्रमाणम्। यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमा। व्यवहारः हानोपादानादिरूपा लोकयात्रा। सा च प्रमा प्रत्यक्षानुमितिशाब्दभेदेन त्रिविधा। तत्करणमपि प्रत्यक्षानुमानशब्दभेदेन त्रिविधम्। अत्र प्रत्यक्षपदं प्रतिगतं अक्षं यत्र इति बहुव्रीहिसमासेन प्रमायां प्रमाविषये च प्रयुज्यते। इन्द्रिये तु कर्मधारयसमासेन। तथा अनुमानपदमपि लिङ्गे तज्जन्यानुमितौ च प्रयुज्यते। तथा शब्दपदमपि ॥

ज्ञानस्य प्रामाण्यमुत्पत्तौ ज्ञप्तौ चेति द्विविधम्। प्रामाण्यं नाम यथार्थावगाहित्वम्। तस्योत्पत्तिः उत्पत्तिप्रामाण्यमित्युच्यते। तस्य ज्ञानं ज्ञप्तिप्रामाण्यमुच्यते। उभयमपि प्रायिकत्वात् स्वत एवोत्पद्यते ज्ञायते चेति निर्णयः। स्वशब्दार्थश्च ज्ञानोत्पादकसामग्री ज्ञानग्राहकसामग्री च ॥

क्वचिदपवादे सति निरुक्तसामग्र्योः दोषसंवलने सति अप्रा-

माण्यमुत्पद्यते । अयथावस्थितव्यवहारेण च ज्ञायते । तथाच दोषाघटित-सामग्र्यपेक्षया दोषघटितसामग्र्याः भिन्नत्वात् तामेव परशब्देन निर्दिश्या प्रामाण्यं परत उत्पद्यते इति व्यवहारः । उत्पन्नस्य तस्य व्यवहारबाधेन परिज्ञानात् ज्ञानग्राहकसामग्र्यात्वपरिज्ञानात्परतो ज्ञायते । इदमेव प्रामाण्याप्रामाण्ययोः स्वतस्त्वं परतस्त्वं चोत्पत्तौ ज्ञप्तौ चेति विभावनीयम् ॥

भ्रमो नाम सम्यगग्रहणम् । तदपि धर्मिग्रहणसाधारणधर्मग्रहण-लक्षणज्ञानद्वयात्मकम् । विभिन्नज्ञानीयविषयतयोर्निरूप्यनिरूपकभावो-पगमात्प्रवृत्त्याद्युपपत्तिः । तच्च व्यवहारानुगुणं न भवति । ततश्च व्यवहाराननुगुणसाधारणधर्मग्रहणं भ्रमः । तदनन्तरमसाधारणधर्मग्रहणे भ्रमाधीनव्यवहारनिवृत्तिः । तदेव ग्रहणं बाधज्ञानमित्युच्यते । सैव निषेधबुद्धिः ॥

सोऽयं विपर्ययलक्षणो भ्रमः रजस्तमोमूलः धर्मान्तरधर्म्यन्तर-भेदात् अन्यथाख्यातिविपरीतख्यातिभेदेन व्यवह्रियते । पीतश्शङ्खः अयं सर्पः इत्यादिकमुदाहरणम् । द्वितीऽयेपि सर्पत्वाध्यास इति शक्यं वक्तुम् । तथापि सर्पत्वस्य स्वरूपनिरूपकतयाऽन्तरङ्गत्वेन धर्मिवैपरीत्यव्यपदेशः ॥

तथा च सर्वभ्रमेषु आरोप्यमाणस्य वस्तुनोंऽशः साधारणधर्म-स्वरूपोऽस्तीति सर्वं ज्ञानं यथार्थमिति सिद्धान्तः । स्वाप्नपदार्था अपि तत्तत्कालावसानास्तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कर्मानुगुण्येन भगवत्सङ्क-ल्पमात्रसृष्टा इति श्रुतिरेव वदति ॥

अव्यवस्थितव्यवहारकारणं एकस्मिन् धर्मिणि विरुद्धानेकप्रकारकं ज्ञानं संशयः । किंसंज्ञकोऽयं वृक्ष इत्याकारकः अनध्यवसायपदवाच्यः ज्ञानावस्थाविशेषोऽप्यस्ति । प्रायेणानेन पुरुषेण भवितव्यमित्याकारक

ऊहोऽपि कश्चिदवस्थाविशेषः । तर्करूपः ऊहस्तु प्रमाणानुग्राहकः पुरस्तादुच्यते ॥

संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तत्करणस्य संस्कारस्य प्रमाकरणत्वलक्षणं प्रामाण्यं नाभ्युपगम्यते । तन्मूलभूते प्रत्यक्षाद्यनुभव एवान्तर्भावः स्वीक्रियते ॥

प्रत्यक्षम्

साक्षात्कारिप्रमा प्रत्यक्षम् । तत्करणं चक्षुरादीन्द्रियम् । विषयेन्द्रियसन्निकर्षः संयोगः संयुक्ताश्रयणं चेति द्विविधः । प्रत्यक्षं द्विविधं— लौकिकं दिव्यं चेति । आद्यं चाक्षुषादिभेदेन पञ्चविधम् । मानसं नाम प्रत्यक्षं नास्ति । तद्ग्राह्यत्वेनाभिमन्यमानस्य सुखादिरूपस्य सर्वस्यान्तरस्य स्वयंप्रकाशत्वाभ्युपगमात् । दिव्यं योगिनाम् । नित्यमुक्तेश्वराणां सर्वविषयकं ज्ञानं इन्द्रियानपेक्षं सर्वदा प्रत्यक्षरूपमेव ॥

अस्मदादीनां प्रत्यक्षं निर्विकल्पकं सविकल्पकं चेति द्विविधम् । अनुवृत्त्यविषयकं निर्विकल्पकम् । अनुवृत्तिर्नाम अनेकवस्तुसम्बन्धः । इयं गौरिति ज्ञाने गोत्वस्य सास्नालाङ्गूलादिरूपस्य एकव्यक्तिसम्बन्ध एव भासते । इदं प्राथमिकपिण्डग्रहणमित्युच्यते । अनुवृत्तिविषयकं सविकल्पकं इयं च गौरित्याकारकम् । अत्र गोत्वस्येदानींतनवस्तुसम्बन्धो गृह्यते प्राग्गृहीतवस्तुसम्बन्धः संस्कारेण स्मर्यते । तथाच संस्कारसहकृतेन्द्रियजन्यं ज्ञानं सविकल्पकम् । तदिदं द्वितीयादिपिण्डज्ञानमिति सप्रत्यवमर्शज्ञानमिति चोच्यते । अंशभेदेन स्मृतित्वानुभवत्वयोः प्रत्यक्षत्वानुमितित्वयोः समावेशः स्वीक्रियते । संस्कारानुद्बोधे जायमानं ग्रहणं द्वितीयादिरूपमपि निर्विकल्पकमेव ॥

योगिप्रत्यक्षे सन्निकर्षस्तु भगवत्सङ्कल्पलक्षणः धर्म एव । अर्जु-

नस्य विश्वरूपसाक्षात्कारे तत्सङ्कल्प एव दिव्यं चक्षुरित्युच्यते । भावनाबलजं प्रत्यक्षं नाभ्युपगम्यते । अपि तु भावनाबलेन प्रत्यक्षसमानाकारः वैशद्यविशेषः स्मृतावपि जायते । ततश्च सापि प्रत्यक्षत्वेन व्यवहारं लभते ॥

## अनुमानम्

व्याप्यत्वानुसन्धानाद्व्यापकविशेषावभासः अनुमितिः अनुमानमित्यप्युच्यते । तत्करणभूतमनुमानं व्याप्तिपक्षधर्मताभ्यां विशिष्टतया ज्ञायमानं लिङ्गम् । निरुपाधिकसम्बन्धो व्याप्तिः । उपाधिशङ्कारहितं भूयः अन्वयव्यतिरेकसहचारदर्शनं व्याप्तिग्राहकम् । उपाधिर्नाम यावत्साधनदेशमवर्तमानः यावत्साध्यदेशवर्ती धर्मः । साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिरिति तस्य परिचयोक्तिः । अतः उपाधिनिरूपणं व्याप्तिघटितं व्याप्तिनिरूपणं चोपाधिघटितमित्यन्योन्याश्रयस्य नावकाशः । स चोपाधिरप्रयोजकताहेतुः । अप्रयोजकता चानुकूलतर्कस्यासम्भवः ॥

तादृशोपाधिशङ्काराहित्यं च क्वचित्कारणाभावात्क्वचित्तर्काच्च सिद्ध्यति । तर्को नाम साध्याभावे विद्यमानायाः साधनाभावव्याप्तेरवबोधः आरोपरूपः । यदि साध्यं न स्याद्धेतुरपि न स्यादित्याकारकः ॥

पक्षधर्मता नाम पक्षसाधनयोस्सम्बन्धः । पक्षस्तु सिषाधयिषितधर्मविशिष्टो धर्मी । तादृशधर्मसजातीयधर्मवान् सपक्षः । तादृशधर्मशून्यः विपक्षः । तथाच पक्षसपक्षवृत्तित्वं विपक्षव्यावृत्तत्वं च साधनस्य रूपम् । तयोरेव प्रपञ्चः असत्प्रतिपक्षत्वं अबाधितत्वं च । तत्र सत्प्रतिपक्षत्वं समबलप्रमाणान्तरोपरोधः । बाधितत्वं प्रबलप्रमाणान्तरप्रतिरोधः ॥

ततश्च पक्षेतरत्वं नोपाधिः । सपक्षेतरत्वं न प्रतिहेतुः । विपक्षेतरत्वं न साधनम् । अन्यथा सर्वेषामनुमानानामुच्छेदप्रसङ्गः, सर्वत्र सुलभत्वात् ॥

व्याप्तिः अन्वयव्याप्तिः व्यतिरेकश्चेति द्विधा । केवलव्यतिरेकव्याप्तिः अनुमानाङ्गतया नोपगम्यते । अत्यन्तातीन्द्रियविषये नानुमानमिष्यते । अस्मदाद्यैन्द्रियकविषय एव जातिव्यक्तिभेदेन विशेषतो दृष्टं सामान्यतो दृष्टमित्यनुमानद्वैविध्यम् ॥

अनुमानोद्बोधकं वाक्यं न्यायः । स हि प्रयोगः साधनवाक्यमिति च व्यवह्रियते । तदवयवेषु प्रतिज्ञा हेतुः उदाहरणं उपनयः निगमनम्, इत्येवं रूपेषु पञ्चसु मृदुमध्यकठोरधियां प्रतिपाद्यानां भेदेन यथासम्भवं प्रयोगः ॥

वादिप्रतिवादिवाक्यसन्ततिः कथा । तत्र तत्त्वबुभुत्सुकथा वादः । विजिगीषुकथा जल्पवितण्डे । सैषा कथा वादिप्रतिवादिप्राश्निकसभापत्यनुविधेयरूपपञ्चपुरुषवती । अनुविधेयो नाम विजयफलप्रतिपादयिता । तथा—कथात्रिकक्ष्या पञ्चकक्ष्या सप्तकक्ष्या वेत्यप्युच्यते । अपरथाऽनवस्थाऽव्यवस्थाच । तदा स कथाभासः । अस्यां कथायामसदुत्तरस्य जातिः समा च इति व्यवहारः । तेन चासदुत्तरेणापजयलक्षणो निग्रहो भवति । हेत्वाभासपदवाच्यदुष्टहेतुप्रयोगेऽपि निग्रहः । स च हेत्वाभासः अव्याप्यः अपक्षधर्मश्चेति द्विविध एव । तार्किकादिभिः प्रपञ्चितास्सर्वेऽप्यत्रैवान्तर्भवन्ति ॥

### शब्दः

सत्पुरुषोच्चरितवाक्यजन्यं ज्ञानं शब्दप्रमाणम् । निरुक्तं वाक्यं करणप्रमाणम् । पुरुषे सत्त्वं भ्रमप्रमादालस्यविप्रलम्भरूपदोषशून्यत्वम् ।

उच्चारणे स्वातन्त्र्यास्वातन्त्र्यभेदनिबन्धनः लौकिकवैदिकशब्दभेदः। तथाच वर्णानां पौर्वापर्यरूपे कण्ठताल्वाद्यभिघातसंयोगरूपोच्चारणाधीने आनुपूर्वीपदवाच्ये रचनाविशेषे स्वातन्त्र्यमस्वातन्त्र्यं च लोकवेदव्यवहार-प्रयोजकमिति विज्ञेयम्॥

भगवानपि सर्गादौ पूर्वपूर्वसर्गप्रवर्तितक्रमविशेषविशिष्टानेव वेदा-नुपदिशतीत्येतदेव वेदस्य नित्यत्वम्। वर्णनित्यत्वपक्षेऽप्यन्ततः क्रमस्य परतन्त्रपुरुषपराधीनतया प्रवाहाविच्छेद एव वेदनित्यत्वम्। परतन्त्रपुरुष-पराधीनत्वं च तज्जातीयानुपूर्वीज्ञानजन्यत्वव्याप्यज्ञानविषयत्वम्॥

सर्वस्वतन्त्रस्य भगवतः वैदिकक्रमविपर्यासे शक्तिसत्त्वेऽपि तस्य क्रमस्य नित्यसङ्कल्पसिद्धत्वात् नित्यत्वमेव। सर्वस्वातन्त्र्यं च भगवतः अव्यवस्थितचित्ततारूपदोषानवकाशेन समर्थनीयम्॥

अत्र आप्तोक्तत्वं शाब्दप्रतीतेरङ्गम्, आप्तत्वं च यथार्थवक्तृ-त्वम्। ततश्च वक्तुः प्रकृतार्थविषयकज्ञानानुमानात् शाब्दधीः निश्च-यात्मिका समुदेतीति शब्दो न स्वातन्त्र्येण पृथक्प्रमाणमिति वैशेषिका-दयः प्राहुः। परे तु अनाप्तोक्तत्वज्ञानं प्रतिबन्धकं, तदभाव एवाङ्गमिति वक्तृज्ञानानुमानं नानुमन्यन्ते॥

तत्राव्युत्पन्नवाक्यव्यावृत्तये वृत्तिमत्त्वेन ज्ञायमानत्वं वाक्यविशेषणं देयम्। वृत्तिर्नाम पदपदार्थयोस्सम्बन्धः। तद्वत्त्वेन ज्ञानं च इदं पद-मस्मिन्नर्थे वृत्तिमदित्याकारकम्। सैषा वृत्तिः अभिधा औपचारिकी चेति द्विप्रकारा। अभिधा साक्षात्सम्बन्धः। इतरा परंपरया सम्बन्धः। अत्रोपचारपदार्थः प्रयोगः, तेन प्रवर्तते इत्यौपचारकी। सैषा लक्षणा गौणी चेति विभज्यते। शक्यसम्बन्धो लक्षणा गङ्गायां घोष इत्यादौ-गङ्गापदे। सादृश्यलक्षणगुणसम्बन्धो गौणी सिंहो देवदत्त इत्यादौ

सिंहपदे । सेयं वृत्तिः गोत्वादिजातिविशिष्टव्यक्तिपर्यन्ता । अपृथक्सिद्धविशेषणवाचिनां पदानां विशेष्यपर्यन्तबोधकत्वानुभवात् । ततश्च सर्वस्यापि वस्तुनः परमेश्वरापृथक्सिद्धत्त्वात् गोत्वं शरीरमित्यादिभ्यो-निष्कर्षकशब्देभ्यः भिन्नास्सर्वे शब्दाः परमेश्वरपर्यन्ता इति वेदान्त-व्युत्पत्तिः ॥

सैषा वृत्तिः पुनर्द्विविधा स्मारकी आनुभाविकी चेति । तेनतेन-पदेन प्रथमं तत्तदर्थविषयकं स्मारकवृत्त्या स्मरणं जायते । आसत्ति-योग्यतातात्पर्यादिन्यायपरामर्शेन तैरेव पदैरानुभाविक्या वृत्या अन्वितानु-भवः जायते । स एव शाब्दबोधः ॥

**तस्मदाकांक्षितासन्नयोग्यार्थान्तरसङ्गते ।**
**स्वार्थे पदानां व्युत्पत्तिरास्थेया सर्ववादिभिः ॥**
**पदजातं श्रुतं सर्वं स्मारितानान्वितार्थकम् ।**
**न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥**

इति कथयन्ति ॥

निरुक्तवृत्तिग्रहस्तु व्यवहारव्याकरणादिभिः । तथाहि—अम्बा तातमातुलादिपदानामादौ मात्रादिव्यवहारेण स्मारकी वृत्तिर्गृह्यते । ततो वाक्यत्वेन तेषां पदानां वृद्धव्यवहारादिना आनुभाविके वृत्तिरवगम्यते । ततस्सिद्धेऽप्यर्थे व्युत्पत्तिरस्ति । न तु कार्यरूपे प्रवृत्तिंनिवृत्तिविषयभूते एवार्थे इति नियमः । लिङ् लोट् तव्यप्रत्ययरूपविध्यर्थः कृतिसाध्यत्वम् । ततश्च यजेत स्वर्गकाम इत्यादौ स्वकृतिसाध्ययागकर्ता स्वर्गकाम इति प्रथमान्तमुख्यविशेष्यकः वाक्यार्थबोधः ॥

प्रागुक्तरीत्या वैदिकशब्दस्य नित्यत्वापौरुषेयत्वसम्भवात्—

**युगान्तेऽन्तर्हितान्वेदान् सेतिहासान् महर्षयः ।**
**लेभिरे तपसा पूर्वमनुज्ञातास्स्वयंम्भुवा ॥**

इति महर्षीणां सूक्तकाण्डमन्त्रकृत्त्वव्यवहारोऽपि सङ्गच्छते। अत्रेतिहास-पदं तत्तद्वृत्तान्तमात्रपरम् ॥

स च वेदः पूर्वोत्तरभागद्वयात्मकः। तत्र भगवतः आराधन-स्वरूपं पूर्वभागेनोच्यते। आराध्यस्वरूपमुत्तरभागेनोच्यते। स्मृतयः पूर्वभागोपबृंहणम्। इतिहासादयः उत्तरभागोपबृंहणमिति चाहुः। सप्तकोटिमहामन्त्रा अप्याप्तशास्त्रप्रतिष्ठिताः वैदिका एव ॥

स्मृतीतिहासपुराणादिकं सङ्कीर्णमन्त्रब्राह्मणार्थवादात्मकवेदैकमू-लम्। पाञ्चरात्रागमस्तु वेदान्तमूलः एकायनशाखामूलश्चेति विशेषः ॥

तत्र लौकिकं वाक्यं भ्रमप्रमादालस्यविप्रलम्भादिपुरुषदोषाः दूषयन्ति—

**नैव शब्दे स्वतो दोषाः प्रामाण्यपरिपन्थिनः।**
**वक्तुराशयदोषेण केषु चित्तदपोद्यते ॥**

इति। निरुक्तदोषाभावे अपवादाभावादुत्सर्गसिद्धं प्रामाण्यं सर्वप्रमाणानां स्वाभाविकमिति निर्णयः ॥

## चेतनतत्त्वम्.

इदं जीवात्माख्यं तत्त्वं स्वतस्सर्वानुभवसिद्धम्। तथाहि—देहेन्द्रियमनःप्राणबुद्ध्यादिषु समुदाये एकदेशे वा अहमित्यात्मबुद्धिः सर्वेषां स्वस्वानुभवसिद्धा। सा भ्रमरूपा। सर्वेष्वपि भ्रमेषु विशेष्यं गृह्यते। तत्र विद्यमानोऽसाधारणो धर्मः न गृह्यते। एवं देहात्मभ्रमेऽपि विशेष्यतया आत्मा प्रकाशते। अतः आत्मस्वरूपे न विप्रतिपत्तिः। किन्तु शास्त्रेण तद्विवेकः क्रियते, न त्वज्ञातमात्मस्वरूपं बोध्यते। देहे-न्द्रियादिवैलक्षण्यं तु स्वयंप्रकाशत्वं नित्यत्वं नानात्वं अणुत्वमनुकूलत्वं प्रत्येकमेकत्वं चेत्यादि। क्वचिदुच्यमानं व्यापित्वमपि निरतिशयसूक्ष्म-तया सर्वाचेतनान्तःप्रवेशयोग्यतारूपव्यापित्वम्। आत्मनोऽनुकूलत्वा-

देव आत्मत्वेन भ्रमविषये देहे कस्यापि कस्यामप्यवस्थायां न प्रतिकूलतयाऽवगतिः ॥

स च कर्तृत्वभोक्तृत्वादिना प्रागुक्तचतुर्विधाचेतनतत्त्वविलक्षणः। चेतनत्वं चैतन्यरूपधर्मभूतज्ञानाश्रयत्वम्। कर्तृत्वं ज्ञानेच्छाप्रयत्नाश्रयत्वम्। भोक्तृत्वं सुखदुःखाद्यनुभवरूपभोगाश्रयत्वम्। भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या इन्द्रियार्थाः। कृतहानाकृताभ्यागमस्य पुण्यपापाव्यवस्थारूपस्य प्रसङ्गात् अस्य नित्यत्त्वं कूटस्थशब्दवाच्यं निर्विकारत्वरूपम्। तदपि नामान्तरभजनार्हावस्थान्तरापत्तिरहितत्वम्। तथैव आधेयत्वविधेयत्वशेषत्वपारतन्त्र्यादिना परमेश्वरतत्त्वविलक्षणः ॥

स हि स्वयं स्वात्मानमेव स्वस्मा एव प्रकाशयति। एवं प्रकाशमानत्वमेव अहंत्वलक्षणं प्रत्यक्त्वम्। अहमिति प्रकाशदशायां अनुकूलत्वमपि सर्वदा स्वस्मिन् भासते न कदाचिदपि प्रतिकूलत्वमिति सुखरूपत्वम्। कदाचित् क्रोधाद्यावेशदशायां स्वस्यापि स्वरूपं दुःखरूपमिव भासेत। तदेतदौपाधिकम्, न स्वाभाविकम्। एवमेकत्वमपि सदा भासते। ततश्च प्रत्यक्त्वैकत्वानुकूलत्वानि आत्मस्वरूपान्तर्गतानि धर्मिभास्यानीति निर्णयः। ततश्च स्वस्य परस्य वा कस्य चित्प्रकाशकत्वरूपज्ञानपदप्रवृत्तिनिमित्तस्य सत्त्वात् ज्ञानस्वरूपः ज्ञानगुणकश्च ॥

स्वापदशायामपि प्रत्यक्त्वैकत्वानुकूलत्वप्रकारेण स्वानुभवोऽस्ति। स एव संस्कारस्थानापन्नः प्रबोधदशायां सुखमहमस्वाप्समिति प्रत्यवमर्शस्य हेतुर्भवति। अस्मिन् परामर्शे सुखत्वमहंत्वं स्वापः पूर्वकालश्चेत्यर्थचतुष्टयमवभासते। तत्र मन्दमगच्छं मधुरमगायमित्यादिषु परामर्शेषु गमनगानसमानकालीनमान्द्यमाधुर्यभानवत् स्वापसमकालीने सुख-

त्वाहंत्वे भासेते, प्रतीतिस्वारस्यात् । ज्ञानसामान्याभावरूपः स्वापः पूर्वः कालश्च प्रातश्चत्वरे गजो नास्तीत्यादिपरामर्शेषु प्रातस्त्वया किं चत्वरे गजो दृष्ट इति प्रश्नानन्तरकालभाविषु यथा योग्यार्थाननुस्मरणलिङ्गेन गजाभावोऽनुमीयते चत्वरादिकं संस्कारमहिम्ना भासते तथाऽत्रापि भासतः इति निर्णयः ॥

स्वापेऽहंत्वस्य भाने मामप्यहं न ज्ञातवानिति परामर्शः कथमिति शङ्कायां ब्राह्मण्यादिविशिष्टदेहादिविषयोऽत्रास्मदुल्लेख इति समाधिः ॥

ततश्चेदं चेतनतत्त्वं प्रतिस्वं स्वानुभवरूपत्वात् सदा स्फुरति । अनुभवो नाम स्फुरणम् । तच्च स्फुरतो धर्मः । स च नित्यः । सैव भासमानता, व्यवहारानुगुण्यं विषयत्वमिति यावत् । यद्यपि सः विलक्षणः विकार एव । तथापि नामान्तरभजनार्हसङ्कोचविकासरूपः विकारस्स न भवतीत्यविकारत्वस्य नानुपपत्तिः । अन्यथा शरीरसंयोगादिरूपविकारस्यापि परित्यागप्रसङ्गे वस्तुत्वमेव परित्यक्तव्यं स्यात् ॥

अणुत्वशेषत्वनियाम्यत्वनित्यत्वकर्तृत्वज्ञातृत्वभोक्तृत्वादिरूपेण तु धर्मभूतज्ञानस्य गोचरः । तदपि ज्ञानं विषयप्रकाशन वेलायां स्वाश्रयाय स्वयमपि भासत इति सिद्धान्तः ॥

अयमत्र विभागः—घटादिः परत एव परस्मा एव भासते । धर्मभूतज्ञानं नित्यविभूतिश्च स्वतः परतश्च परस्मा एव भासते। आत्मा तु स्वतः परतश्च स्वस्मै भासते परतः परस्मै भासते च इति। ततश्च—

**प्रमाता च प्रमा चैव प्रमेयश्च भवेत्पुमान् ।**
**प्रमा प्रमेया च बुद्धिः मेया एव घटादयः ॥ इति ॥**

एष चेतनतत्वभूतः जीवः बद्धो मुक्तः नित्य इति त्रिविधः। आद्यः अनुवृत्तसंसारः। द्वितीयः निवृत्तसंसारः । तृतीयः अवृत्तससारः।

बद्धानामेव मुक्तत्वस्य दशाविशेषरूपत्वेऽपि नित्यानामिव मुक्तानां बद्धापेक्षयाऽत्यन्तवैषम्यसूचनाय विभज्य निर्देशः ॥

एतादृशानां बद्धानां नित्यसंसारिव्यपदेश्यानामनन्तानामङ्गीकारात् भगवतः लीलाविभूतेर्नित्यत्वं प्रवाहलक्षणं केचित्समर्थयन्ति । परमेश्वरीयनिरवधिककरुणाविषयत्वरूपस्य सर्वजीवसाधारणस्य मुक्तियोग्यत्वस्याभ्युपगमात् तादृशानामेव मुक्तियोग्यानां जीवानामानन्त्यात् लीलाविभूत्युच्छेदो नास्तीत्यपरे प्राहुः । स्वेच्छया लीलाविभूत्युपरतिरपि काचिल्लीलैवेति नैव लीलायास्समुच्छेद इति मध्यस्था वर्णयन्ति । एतादृशो विचारः अवचनीयः दुर्निरूप इति पातञ्जलयोगभाष्ये व्यासदेवः तुरीयपादे प्राह ॥

### ईश्वरतत्त्वम्.

अथेश्वरतत्त्वनिरूपणं सर्वतत्त्वनिरूपणफलभूतमारभ्यते । तदेतदीश्वरतत्त्वं लक्ष्मीनारायणभेदेन द्विविधमपीश्वरत्वस्य द्वित्वादिवत् व्यासज्यवृत्तित्वात् एकत्रापरिसमाप्तत्वात् ईश्वरपदेन तत्त्वद्वयमपि निर्दिश्य निरूपणात् वक्ष्यमाणविशेषरहितं सर्वत्र साम्यमवधेयम् ॥

स चेश्वरः चेतनाचेतनतत्त्वद्वयस्य धारकः नियन्ता शेषी शरीरी सर्वकार्यकारणभूतः समस्तहेयरहितः सर्वज्ञत्वसर्वशक्तत्वादिसमस्तमङ्गलगुणाश्रयः स्वेतरसमस्तवस्तुविलक्षणः सर्वविधलौकिकयुक्त्यविषयभूतः सर्वशब्दवाच्यः अप्राकृतदिव्यमङ्गलविग्रहसहितः शास्त्रविहितसर्वकर्मसमाराध्यः निषिद्धसर्वकर्मापराध्यः सकलफलप्रदः सर्वसमाश्रयणीयः पितृमातृस्थानीयः मुक्तप्राप्यः सर्वैरपि प्रकारैर्निरतिशयानुकूलः परमात्मशब्दाभिधेयः लक्ष्मीनारायणात्मकः पुरुषोत्तमयोषोत्तमरूपः शास्त्रैकसमधिगम्यः ॥

एष एव सूक्ष्मचिदचिद्विशिष्टवेषेण जगदारम्भे उपादानकारणम् । संकल्पविशिष्टवेषेण निमित्तकारणम् । कालाद्युपकरणविशिष्टवेषेण सहकारिकारणमिति त्रिविधमपि कारणं भवति । विशिष्टवेषेणेत्यस्य वैशिष्ट्यमित्यर्थः । तादृशवैशिष्ट्यप्रयुक्त उपादानत्वादिव्यवहार इति यावत् । एवं सर्वस्यापि कार्यस्येश्वरापृथक्सिद्धतया सर्वमपि कार्यमीश्वर इत्येव व्यवहारः वैशिष्ट्यमूल एव ॥

वैशिष्ट्यं च तत्तदवस्थतत्तद्वस्तुनियमनरूपम् । सैवावस्था साक्षात् कार्यकारणव्यवहारप्रयोजिका । तत्तद्वस्तुगता तु अव्याकृतनामरूपवत्त्वरूपा व्याकृतनामरूपवत्त्वरूपा च कारणावस्था कार्यावस्थाऽपि परंपरयाऽपि कार्यकारणव्यवहारप्रयोजिका । इयं सद्वारकावस्था । पूर्वत्वद्वारकावस्थेत्यवधेयम् ॥

एवं साक्षाद्वा परंपरया वा सर्ववस्तुसंबन्धे सत्यपि सत्यसंकल्पत्वात् चेतनाचेतनयोरिव विचित्रपरिणामदुःखाज्ञानादिदोषशङ्काव्यावृत्त्यर्थं निखिलहेयप्रत्यनीकत्वमुच्यते । इदमेव हीश्वरस्य नित्यनिर्लेपत्वम् । एवं च सत्यसंकल्पत्वं निखिलहेयप्रत्यनीकत्वौपयिकं, सत्यकामत्वं सकलकल्याणगुणाकरत्वौपयिकम् । पुरुषोत्तमत्वं चेतनाचेतनवैलक्षण्यौपयिकमिति संक्षेपः ॥

एवमीश्वरस्य सर्वकारणत्वं साधारणरूपं निरुपाधिकस्वातन्त्र्यमूलमिति प्राधान्येन परिगण्यते । यथा " स्वतन्त्रः कर्ता " इतरकारणचक्रगतं कारणत्वं स्वतन्त्रकर्तृव्यापाराधीनमिति कर्तुः प्राधान्यम्, तथा तस्यापि कारणत्वं निरुपाधिकस्वतन्त्रपरमात्मायत्तमिति तस्य प्राधान्यम् ॥

एवमपि जीवात्मस्वातन्त्र्यस्य ईश्वरनिग्रहानुग्रहनिदानस्य नानुपपत्तिः । तथाहि—कर्तृत्वं नाम ज्ञानचिकीर्षाप्रयत्नाश्रयत्वरूपम् । तत्र

प्राचीनकर्मलक्षणेश्वरसङ्कल्पवशात् साध्वसाधुक्रियाविषयकज्ञाने जाते ततस्तदनुगुणेच्छायां सत्यामपि तदनुगुणेन प्रयत्नेनावश्यं भवितव्यमिति न खलु नियमः । चिकीर्षायां सत्यामपि प्रयत्नरहिताः पुरुषाः प्रत्यक्ष-मीक्ष्यन्ते । ततश्च वासनानुसारेणेच्छायां सत्यामपि साध्वसाधुविवेक-शालिनः शास्त्रवश्याः पुरुषाः विवेकं तिरस्कृत्य प्रवृत्ताश्चेत् तदनुगुणं फलं प्राप्नुवन्तीति स्वातन्त्र्यमक्षतम् ॥

एवमीश्वरस्य स्वातन्त्र्येण कारणत्वे तत्र तत्र कञ्चित्कञ्चिद्विशेष-मुपादाय प्रेरकत्वानुमन्तृत्वोदासीनत्वादिव्यवहारः शास्त्रेषु बहुधा दृश्यते ॥

तथाच सृष्टिसंहारान्तःप्रवेशनियमननिग्रहानुग्रहाः अस्य व्या-पाराः चेतनतत्त्वानुग्रहलक्षणापारकारुण्यमूला अपि वैषम्यनैर्घृण्यादिदोष-परिहाराय चेतनतत्त्वकृतं कर्मापेक्ष्यैव प्रवर्तते भगवानिति सापेक्षेश्वर-वादः आचार्यबादरायणसम्मतः । शैवाद्यागमसम्मतो निरपेक्षेश्वरवादस्तु अव्यवस्थितत्वरूपदोषमावहतीत्याचार्याभिप्रायः ॥

अस्य हि सत्यत्वज्ञानत्वानन्तत्वानन्दत्वामलत्वरूपाः स्वरूपनिरू-पकधर्माः । जगत्कारणत्वसर्वज्ञत्वसर्वशक्तत्वपराक्रमैश्वर्यादयः निरूपितस्व-रूपविशेषणभूताः। स्वरूपनिरूपका नाम स्वरूपप्रयुक्तास्सततैकरूपा निर्वि-कारा इति केचित् । स्वरूपान्तर्गता इत्यपरे । सर्वज्ञत्वादयस्तु विषय-घटितरूपाः न निर्विकारा इति प्रथमपक्षमुपपादयन्ति । अत्र स्वरूप-निरूपकेषु श्रीनिवासत्वमप्यन्तर्भाव्यम् । तच्च श्रीसंश्रयणं स्वरूपवत् दिव्यमङ्गलविग्रहेणापि । अतः दिव्यमङ्गलविग्रहः स्वरूपनिरूपकधर्म इति सम्प्रदायः ॥

ज्ञानशक्त्यादिसकलगुणपरिपूर्णस्वभावेनैवासौ सर्वान्तर्यामी सर्व-त्र परिपूर्णश्च । अस्य च अन्तर्बहिश्च सर्ववस्तुव्याप्तिर्नाम स्वाव्याप्तप्रदे-

शराहित्यम् । अणोर्जीवस्य विभोः कालादेश्च अन्तर्बहिःप्रदेशाभावेऽपि नानुपपत्तिः । एवं भगवत्स्वरूपस्यानन्त्यात् त्रिविधपरिच्छेदराहित्यम् । नित्यत्वाद्विभुत्वाच्च कालदेशपरिच्छेदौ न स्तः । स्वरूपतः स्वभावतश्च निरतिशयोत्कर्षशालित्वात् वस्त्वपकर्षरूपो वस्तुपरिच्छेदोऽपि नास्ति ॥

ईश्वरस्याघटितघटनासामर्थ्यलक्षणं सर्वशक्तिमत्त्वमप्यनेकान्तवादापातरूपदोषानवकाशेन वक्तव्यम् । यथा—यद्यद्वस्तु यथायथा घटयितुमर्हं तत्तद्वस्तु तथातथा अन्यैरघटितमीश्वरेण सङ्कल्पमात्रेण घटितं भवतीत्यर्थ इति । अन्यथा नीलमपि पीतं भवेदित्यनेकान्तवादापातः ॥

अवाप्तसमस्तकामत्वमपि सदाऽभिमतसकलभोगोपकरणसद्भावलक्षणं अनवाप्तयनर्हकामनावत्त्वम् । अन्यथा मोक्षप्रदानपर्यन्तो जगत्सृष्ट्यादिव्यापारः लीलारसलक्षणः अपारकारुण्यमूलः न संश्लिष्येत । एवं लीलारसार्थव्यापारेऽपि परदुःखनिराकरणप्राधान्येन कृपारसानुप्रवेशः । तत्राप्यपारकरुणाशालिनो राजादेश्चोरादिदण्डनमिव आज्ञातिवर्तिनो दण्डनमपि गुणदोषव्यवस्थाव्युत्पादनरूपेण लोकहितायैवेति करुणाकार्यमेव ॥

ततश्च भगवतस्सर्वोऽपि व्यापारः लीलारसार्थव्यपदेशेन आश्रितानुग्रहार्थ इति सिद्धान्तः । अत एव जगत्कारणत्वे सर्वरक्षकत्वमन्तर्नीतमिति रहस्यम् ॥

एवं च भगवतः विभूतिपारम्यं परत्वम् । शीलपारम्यं सुलभत्वम् । स्वरूपायत्तं सर्वस्याधेयत्वम् । इच्छालक्षणसङ्कल्पायत्तं सर्वस्यनियाम्यत्वलक्षणं विधेयत्वम् । सङ्कल्पप्रयुक्तमेव शेषत्वं यथेष्टविनियोगार्हत्वलक्षणम् । पारतन्त्र्यमपि यथेष्टविनियुक्तत्वमिति सिद्धान्तः ॥

एवमसावीश्वरः निरपेक्षस्वतन्त्रोऽप्याश्रितपरतन्त्र इत्युच्यते । तदिदं पारतन्त्र्यं स्वेच्छावशेन स्वीक्रियमाणं परमां काष्ठामापन्नं स्वातन्त्र्यरूपमेव । एवमाश्रितविषये निरतिशयप्रीतियुक्तस्य निरंकुशस्वतन्त्रस्येश्वरस्याभिप्रायमनुरुध्य तदीया अप्यन्योन्यं शेषभूता भवन्ति । तत्र निरूपकभेदेन शेषित्वं शेषत्वं न विरुद्धम् । अतएवोच्यते—

**अन्योन्यगुरवो विप्रा अन्योन्यातिथयस्स्मृताः ।**
**अन्योन्यमुपकुर्वाणास्तारयन्ति तरन्ति च ॥ इति ॥**

एवं शिष्याचार्ययोरपि शेषशेषिभावः परस्परमस्ति । तत्र किंचित्कारप्रकारः शास्त्रबलेन नियन्त्रितः । यथा यथाहृदयं यथार्हं हितोपदेशादिरूपः आचार्यकर्तव्यः किञ्चित्कारः । कृतज्ञत्वमुपदिष्टानामर्थानामविस्मरणं यथाशक्त्यनुष्ठानं यथाशक्ति यथायोग्यं च शुश्रूषादिकं च शिष्यकर्तव्यः किञ्चित्कारः ॥

तथा—यथा हितैष्याचार्यः शिष्यस्य सर्वास्वप्यवस्थासु सन्मार्गमुपदिशति । एवं शास्त्रवश्येन शिष्येणापि आचार्यमवलिप्तमुत्पथं प्रतिपन्नं एकान्ते प्रतिबोध्य सन्मार्गप्रवर्तनेन किञ्चित्कारः कर्तव्य इति विधिः ॥

अवतारः.

स चेश्वरः स्वव्यतिरिक्तानां सर्वेषां तत्त्वानामभिमानिभिः अस्त्रभूषणाद्याकारदिव्यदेहपरिग्रहवद्भिः नित्यसूरिभिस्सेवितेन दिव्यमङ्गलविग्रहेण रूपेण विशिष्टस्सन् परव्यूहविभवान्तर्याम्यर्चाभेदेन पञ्चविधश्श्रूयते । तत्र पररूपं वैकुण्ठे तु परे लोके सदा नित्यसूरिसंसेव्यः नित्यः दिव्यमहिषपरिजनपारिच्छिदसहितः दिव्यमङ्गलविग्रहः मुक्तप्राप्यः परवासुदेवाख्यः । अत्रैव नित्योदितशान्तोदितविभागः । परवासुदेवः नित्योदितः । ततः अवतीर्णः व्यूहवासुदेवः शान्तोदितः ॥

ततो व्यूहवासुदेवात् संकर्षणसंज्ञकः द्वितीयो व्यूहः प्रादुर्भवति। ततः प्रद्युम्नसंज्ञकः। ततः अनिरुद्धसंज्ञकः। एते चत्वारो व्यूहाः। अवयवसंस्थानविशेषविशिष्टविग्रहरूपेण विभज्य स्थित्या एतेषां व्यूहशब्दाभिधेयत्वम्॥

तेषु व्यूहवासुदेवः समष्टिसृष्टिस्थितिसंहारादौ साक्षात्स्वयमेव कारणीभवति। व्यष्टिसृष्टौ चतुर्मुखं ब्रह्माणं प्रद्युम्नरूपेणानुप्रविश्य तद्द्वारा कारणीभवति। व्यष्टिसंहारे रुद्रं संकर्षणरूपेणानुप्रविश्य कारणभिवति। व्यष्टिस्थित्यादौ तु अनिरुद्धरूपात् साक्षात् जीवव्यवधानं विना विष्णु रूपो भूत्वा कारणभिवतीत्यवधेयम्॥

परवासुदेवस्य व्यूहवासुदेवस्य च ज्ञानशक्त्यादिषाड्गुण्यप्रकाशनसाम्येनैकीकृत्य त्रयो व्यूहा इत्यपि व्यवहारोऽस्ति। ते च त्रयो व्यूहाः अभिमानविशेषेण जीवमनोहंकारशब्दवाच्या अपि भवन्ति। परवासुदेवरूपं निरुक्तत्रितयापेक्षया तुर्यत्वेनापि व्यवह्रियते॥

विभवो नाम—तेभ्य एव व्यूहेभ्यः प्रत्येकं त्रीणि त्रीणि रूपाणीति केशवादीनि द्वादश रूपाण्याविर्भवन्ति। तथा—रामकृष्णादयः पद्मनाभविद्याधिदेवादिप्रादुर्भावाश्च विभवाः यथायथं व्यूहेभ्य एवाविर्भवन्ति। केषांचिज्जीवानां विग्रहविशिष्टवेषेण वा शक्तिविशिष्टवेषेण वाऽनुप्रवेशलक्षणमधिष्ठानमपि विभवभेदः। देवमनुष्यादिविभूतिभिः विभवपदवाच्याभिस्सहात्मानं दिव्येन रूपेण तुल्यतया प्रकाशयतीति विभवपदेन व्यपदेशः॥

अन्तर्यामिरूपं तु—योगिनां साक्षात्कर्तुमर्हं हृदयदेशे सन्निहितमुपासकानुग्रहार्थं अङ्गुष्ठमात्रमिति श्रुतिव्यपदेश्यं पूर्वोक्तरूपविलक्षणं रूपम्। दिव्यात्मस्वरूपस्य विभुनः सर्वत्र संबन्धरूपा व्याप्तिः सार्वदिकी

एका । सृष्ट्यनन्तरं सर्ववस्तुषु प्रत्येकं गोजठरगतवत्सवत् सर्वव्याप्तस्य ब्रह्मणः पुष्कलप्रतीत्यर्हा स्थितिरपरा । इदमेव सर्ववस्तुपरिपूर्णत्वं सर्वान्तर्यामित्वम् । प्रकृतमन्तर्यामिरूपं तु विग्रहविशेषविशिष्टवेषेणानुग्रहार्थं सन्निधानं विलक्षणमिति ध्येयम् ॥

अर्चारूपं तु—स्वयंव्यक्तसैद्धदिव्यार्षप्रक्रियया भक्तजनप्रार्थनानुगुणं देशकालविप्रकर्षराहित्येन भक्त्या शुद्धभावंगतानां शास्त्रीयसंस्कारेण भगवद्भावनावतां सकलानां मनुजानां नयनविषयतां गतं सर्वातिशायिषाड्गुण्यं सर्वसहिष्णु क्षीरनीरन्यायेन बिम्बाकृतिसदृशाकृतिसहितं भौतिकविग्रहेषु अनुप्रविष्टं परव्यूहविभवादिलक्षणमेव दिव्यमङ्गलविग्रहात्मकं रूपम् ॥

एवं सर्वेष्वपि रूपेषु स्वाभिमतानुरूपरूपसहितसहधर्मचारिणीसंश्लिष्ट एव भगवान् सर्वेश्वरः । सैषा सहधर्मचारिणी लक्ष्मीः नारायणाख्यतत्त्ववत् षाड्गुण्यपरिपूर्णा । अस्मिन्नपि तत्त्वे सत्यत्वज्ञानत्वानन्दत्वानन्तत्वामलत्वाख्याः स्वरूपनिरूपकधर्मास्सन्ति । ब्रह्मत्वमीश्वरत्वं चोभयोः पर्याप्तिसम्बन्धेन विद्यमानं व्यासज्यवृत्तिर्धर्मः । सैषा लक्ष्मीः नारायणतत्त्वस्यापृथक्सिद्धशक्तिरूपत्वात् ब्रह्माद्वैतम् । अतएव श्रुतिष्वपि ब्रह्मेश्वरादिशब्दाः तदन्तर्भावात् योगेन रूढ्या च लक्ष्मीविशिष्टस्यैव नारायणस्य वाचकाः । ततो विशिष्टस्यैव जगत्कारणत्वादयः सर्वे व्यापाराः । लौकिकपतिपत्नीन्यायेनैव परस्परप्रीतिमेवोद्दिश्य परस्परव्यापाराः ॥

ततश्चोपायत्वमुपेयत्वं चोभयोस्समानम् । मातृत्वं पुरुषकारत्वं पतिपारतन्त्र्यमित्यादिकं, पितृत्वं दण्डधरत्वं श्रीवल्लभत्वं सर्वशेषित्वमित्यादिकं च उभयोर्नित्यसङ्कल्पेन अतिशयितानन्दायैव विभज्य व्यवस्थितं रूपम् ॥

अत्र व्यूहादयस्सर्वेऽप्यवताराः शुद्धसृष्टिरित्युच्यते । लीलाविभूतिसृष्टिस्तु मिश्रसृष्टिः । सोऽयमवतारः अंशावेशभेदेन द्विविधः । अंशावतार एव साक्षादवतार इत्युच्यते । प्रदीपाद्दीपपरम्परावत् परस्मादेव रूपात् अंशेनाविर्भूतः व्यूहादिरंशावतारः । विग्रहांश इति फलितार्थः । विग्रहस्य सङ्कोचविकासव्यापित्वादिशक्तिः अचिन्त्याऽपरिमेया च । अतएव विश्वरूपादिप्रदर्शनं वासुदेवविग्रहे समुपपद्यते । तथा च साक्षाद्दिव्यविग्रहपरिग्रहः साक्षादवतारः ॥

आवेशावतारस्तु समीहितकार्यकरणाय पूर्वोक्तविग्रहविशिष्टवेषेण वा शक्तिविशेषेण वा महाभागे सशरीरे जीवविशेषे अनुप्रवेशः । स एव हि गौणः प्रादुर्भाव इत्युच्यते । तत्र तस्य जीवविशेषस्य प्रतिष्ठार्चनादिशास्त्रविशेषोऽपि भगवदनुप्रवेशनिबन्धनः । अनुप्रवेशस्य कादाचित्कत्वेपि उपलक्षणविधया भगवत एवोद्देश्यत्वम् ॥

सर्वोऽप्यवतारस्सत्यः न त्वैन्द्रजालिकवेषवत् मिथ्यारूपः । तत्र ज्ञानशक्त्यादिकल्याणगुणानामसङ्कोचः । शुद्धसत्त्वमय एव विग्रहः । स्वतन्त्रेच्छेव कारणम् । धर्मरक्षणमेव कालः साधुपरित्राणं फलम् । ततश्च—

**स्वरूपेण स्वभावेन द्रव्येणापि च हेतुना ।**
**कालेन च फलेनापि ह्यवतारस्य दिव्यता ॥ इति ॥**

एतादृशमवताररहस्यज्ञानं महाविश्वासवतां अस्मिन्नेव जन्मनि उपायपारिपूर्त्या जन्मान्तरव्यवधानमन्तरेण मोक्षसाधनमिति भागवतसिद्धान्तः ॥

साधर्म्यवैधर्म्यम्

एवं सर्वतत्त्वानां स्वरूपतो नित्यत्वेऽपि अचेतनतत्त्वेषु चतुर्षु स्वरूपपरिणामलक्षणः नामान्तरभजनार्हः अवस्थान्तरापत्तिरूपः विकारस्समास्ति । यथा—त्रिगुणे महदादिलक्षणः, काले क्षणदिनादिलक्षणः,

शुद्धसत्त्वे नित्यविकाराणां नित्यत्वेऽपि विचित्रोऽनित्यो विकारः, धर्मभूतज्ञाने प्रत्यक्षपरोक्षसुखदुःखादिलक्षणश्च स्वीकृतः ॥

जीवात्मस्वरूपस्य संसारदशायां निर्विकारत्वेन नामान्तरभजनार्हविकारासंभवेऽपि तत्स्वभावभूतस्य धर्मभूतज्ञानस्य संकोचविकासरूपविचित्रपरिणामाभ्युपगमात् तद्द्वारा प्रकृतिसंबन्धः सुखदुःखाद्यनुभवः सृज्यत्वसंहार्यत्वव्यपदेशः उत्पत्तिविनाशव्यवहारः जडपण्डितपामरादिव्यवहारः सर्वोऽप्युपपद्यते ॥

ईश्वरस्वरूपं तु निरुपाधिकसत्तावत् सर्वदा निर्विकारमेव । निरङ्कुशस्वातन्त्र्येण तदीयं धर्मभूतं ज्ञानं संकल्पनिग्रहानुग्रहादिरूपनानाविधावस्थाभागपि संकोचविकासरूपविकारशून्यं स्वाभाविकेन सार्वदिकेन विकासेन विशिष्टमेव प्रकाशते । जीवात्मनः तद्द्वारा साक्षाच्च परमात्मनः विशेषणभूतस्याचिद्द्रव्यस्यावस्थाभिः अवस्थावत्त्वमभ्युपगम्यते। ततश्च अवस्थालक्षणविकाराश्रयत्वमुपपद्यत इति द्रव्यलक्षणसमन्वयः ॥

एवं सामान्येन त्रेधा तत्त्वविभागेऽप्यस्मिन् दर्शने त्रिंशत् तत्त्वानि । यथा—प्रकृत्यादीनि चतुर्विंशतिसंख्याकानि । कालो नित्य विभूतिः धर्मभूतज्ञानं जीवात्माचेति चत्वारि । लक्ष्मीः नारायणश्चेति द्वयम् । आहत्य त्रिंशत् । ईश्वरत्वं व्यासज्यवृत्तिधर्म इतीश्वरपदेनोभयोस्तत्त्वयोर्व्यवहारः ॥

एतेषां साधर्म्यं वैधर्म्यं चैवमवधेयम्—येषां यदुक्तं साधर्म्यं तदितरेषां वैधर्म्यमिति सिद्धमेवैतत् । सर्वेषां तत्त्वानां स्वरूपास्थिति प्रवृत्तिमत्त्वं संयोगः शक्तिः स्वभावतोऽनुकूलत्वं उपादेयत्वं नित्यत्वं ज्ञेयत्वं वाच्यत्वं पारमार्थिकत्वमित्यादिकं साधर्म्यम् । अचेतनस्य प्रवृत्तिर्नाम विचित्रपरिणामार्हत्वम् ॥

नारायणव्यतिरिक्तस्य सर्वस्य निरुपाधिकशेषत्वं शरीरत्वं परतन्त्रत्वं च साधर्म्यम् । जीवात्मनित्यविभूतिधर्मभूतज्ञानेश्वराणां स्वप्रकाशत्वरूपमजडत्वम् । अन्तःप्रविश्यनियन्तृत्वरूपमात्मत्वं प्रत्यक्त्वं च जीवेश्वरयोः । सत्त्वाश्रयत्वं त्रिगुणनित्यविभूत्योः । दासत्वं सर्वजीवानाम् । परिपूर्णपरब्रह्मानुभवो नित्यमुक्तेश्वराणाम् ॥

त्रिगुणकालशुद्धसत्वधर्मभूतज्ञानानां अचेतनत्वं परिणामिनित्यत्वं च साधर्म्यम् । सजातीयावस्थासंतत्यनुच्छेदरूपं प्रवाहतो नित्यत्वमपि । स्वाधिकरणकालत्वव्यापकस्वसजातीयाधिकरणकालोत्तरत्वकत्वरूपं प्रवाहतोऽनादित्वमपि ॥

## अद्रव्यनिरूपणम्.

एवं त्रैविध्येन तत्त्वविभागे कृतेऽपि त्रिगुणकालशुद्धसत्त्वधर्मभूतज्ञानजीवपरमेश्वरभेदेन षड्द्रव्यात्मकं तत्त्वत्रयमिति निरूपितम् । तान्येव द्रव्याण्याश्रित्य प्रतीयमानानि द्रव्याश्रितत्वैकस्वभावत्वेन गुणादिपदवाच्यान्यद्रव्याण्यपि दशधाऽभ्युपगम्यन्ते । यथा—सत्त्वरजस्तमांसि शब्दस्पर्शरूपरसगन्धाः संयोगश्शक्तिरिति दशविधान्यद्रव्याणि ॥

एतेषामाश्रयद्रव्यापेक्षया भेदस्याभ्युपगमेऽपि तत्तदपृथक्सिद्धत्वलक्षणस्य यावत्सत्तमसम्बन्धानर्हत्वरूपस्यायुतसिद्धत्वस्याभ्युपगमात् स्वातन्त्र्यविरहात् तत्तद्रव्यस्वरूपनिरूपकतया तत्रतत्रान्तर्भावविवक्षया च पृथक्त्त्वत्वेन नोपदेशः ॥

तर्हि चेतनाचेतनतत्त्वयोरपि परमेश्वरायुतसिद्धत्वात्तत्परतन्त्रत्वात् तत्रैवान्तर्भावविवक्षया एकमेव तत्त्वमीश्वराख्यमितीष्यतामिति चेदिष्यत एव । अत एव चाशेषचिदचिद्विशिष्टं ब्रह्मैकमेव तत्त्वमिति सिद्धान्तः ॥

ततश्चाचेतनैकतत्त्ववादो लौकायसम्मतः । चैतनैकतत्त्ववादः हैरण्यगर्भसिद्धान्तः । चेतनाचेतनतत्त्वद्वयवादः साङ्ख्यसम्मतः । चेतनाचेतनेश्वररूपतत्त्वत्रयवादः पातञ्जलाभिधसेश्वरसांख्यसिद्धान्तः । अयमेव सिद्धन्तः वेदान्तसम्मत इति श्रीभगवद्रामानुजार्यैः प्रकाशितः । तत्रेयान्विशेषः—मिथः स्वतन्त्रं तत्त्वत्रयमिति पातञ्जलाभिप्रायः । पारतन्त्र्यलक्षणायुतसिद्धत्वरूपसम्बन्धविशेषेणैकमेव तत्त्वमिति व्यपदेशार्हं मिथोविलक्षणस्वभावं तत्त्वत्रयमिति विशिष्टाद्वैतसिद्धान्तः ॥

अथाद्रव्याणि निरूप्यन्ते । अद्रव्यसिद्धिस्तु—दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् । दर्शनेन कश्चिदर्थो गृहीतः । स्पर्शनेनापि सोऽर्थो गृह्यते यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति । यं चास्पार्क्षं स्पर्शनेन तं चक्षुषा पश्यामीति । ततश्च इन्द्रियनानात्वम्, नियतविषयाणीन्द्रियाणि, स्वविषयग्रहणलिङ्गानीन्द्रियाणि, ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुणव्यतिरिक्तं द्रव्यं, गुणाधिककरणम्, देहेन्द्रियादिव्यतिरिक्त आत्मा इत्येते अर्थाः सिद्ध्यन्ति ॥

एवं द्रव्याद्रव्यविभागस्य अद्रव्यविभागस्य च अनुभवसिद्धत्वात् संयोगरहितत्वमद्रव्यसामान्यलक्षणम् । यथार्थज्ञानसुखलाघवादिनिदानं शक्त्यतिरिक्तमतीन्द्रियं सत्त्वम् । भ्रमदुःखप्रवर्तकत्वादिनिदानं शक्त्यविरिक्तमतीन्द्रियं रजः । मोहगुरुत्वावरणादिनिदानं तादृशं तमः । प्रकृत्यवयवाः विलक्षणाः केचिदेतेषामाश्रयाः । एतेषां शक्तावन्तर्भावे सम्भवत्यपि शास्त्रबलेन पृथग्भावः ॥

एतैरदृष्टोपष्टब्धपुरुषभेदात् उद्भवानुद्भवसमतालक्षणावस्थाभेदेन वस्त्वेकमेव सुखाय दुःखाय मोहाय च भवति । पुरुषैक्येऽपि कालभेदेनाप्येवं भवति । अत एव यज्ञ दान तपो ज्ञान धृत्याहारादिष्वपि

सात्त्विकादिभेदाः देहेन्द्रियादिमूला भवन्ति । ब्राह्मणत्वादिकमपि सत्त्वादिगुणतारतम्यमेव देहेन्द्रियादिगतमित्यवधेयम् ॥

श्रोत्रेन्द्रियग्राह्यो गुणश्शब्दः । पञ्चभूतवर्ती । सः वर्णात्मको ध्वन्यात्मकश्चेति द्विविधः । वर्णा भाषाभेदेन विभिन्ना अकारादयः । अतिरिक्ता ध्वनयः । सोऽयं शब्दः आकाशेन सह उत्पद्यते विलीयते च । ततश्चाकल्पं सर्वगकाराणामेकत्वम् ताल्वाद्यभिव्यञ्जकभेदेन उत्पत्तिविनाशतारत्वमन्द्रत्वादयो विशेषा औपाधिकाः ॥

स्पार्शनेन्द्रियग्राह्यो गुणः स्पर्शः । स हि शीतोष्णानुष्णाशीतभेदेन त्रिविधः प्रत्यक्षसिद्धः । अमृत गरल तूलोपल गोब्राह्मणचण्डालादिस्पर्शाः बहुप्रकारास्सन्ति । तत्र गोब्राह्मणचण्डालादिस्पर्शाः शुद्ध्यशुद्ध्यापादकतया स्वीकृताः । धर्माधर्मतारतम्याधीनसत्वादितारतम्यात् शक्तितारतम्याद्वा शुद्ध्यशुद्ध्यादिरिति पक्षे तादृशाः स्पर्शभेदा नेष्यन्ते ॥

रूपरसगन्धानां स्वरूपं लक्षणं विभागश्चेत्यादिकं प्रसिद्धमेव । अवान्तरवैचित्र्यमपि सर्वानुभवसिद्धमिति नात्र विस्तृतम् ॥

संयुक्तप्रत्ययनिमित्तं संयोगः । विभुद्रव्ययोरपि संयोगः नित्यः वर्तते । अत एवेश्वरस्य सर्वद्रव्यशरीरत्वम् । दिव्यदम्पतिदिव्यात्मस्वरूपयोरपि नित्यसंश्लेषः ॥

सर्वकारणानां कारणत्वनिर्वाहकः कश्चित् अद्रव्यविशेषः शक्तिः । तर्कागमाभ्यां तत्सिद्धिः । अयस्कान्तादिष्वियं विशदमुपलभ्यते । अप्रतिबद्धा सा कार्योपयोगिनीति स्वीकृता । शक्तौ शक्तिर्नास्ति । कारणानां कार्यानुगुण्यरूपतयैव तत्सिद्धेः । ताश्च बहुप्रकाराः—(वि.पु.)

**शक्तयस्सर्वभावानामचिन्त्यज्ञानगोचराः ।**
**यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ इति स्मर्यते ॥**

सैषा शक्तिः द्रव्येष्वेव । अद्रव्येषु क्वचित् शक्तताव्यवहारः सामानाधिकरण्यमूलकः । शब्दानां वर्णरूपाणामद्रव्याणामर्थावबोध-कत्वरूपा वृत्तिपदाभिधेया शक्तिस्तु क्रमविशेषविशिष्टवर्णस्वरूपमेव । परमेश्वरसंकल्पविषयत्वरूपा शक्तिस्तु सर्वत्र सुलभैव ॥

एतानि सर्वाण्यप्यद्रव्याणि न स्वाश्रयद्रव्यव्यापीनि, संयोगादे-रन्यथोपलम्भात् । नाप्याश्रयैकदेशवर्तीनि, रूपादेरन्यथोपलम्भात् । तस्माल्लोकप्रतीत्यनुरोधेन तत्तद्वस्तुस्वभावकल्पनेन सर्वं समर्थनीयम् ॥

ततश्च वैशेषिकादिसम्मतानामितरेषां गुणकर्मादिपदार्थानामत्रै-वान्तर्भावः । तथाहि—तत्तद्द्रव्यस्वरूपमेव संख्या । अवयवतारतम्यं परिमाणम् । पृथक्त्वं भेदरूपम् । संयोगाभावो विभागः । परत्वापरत्वे देशकालसंयोगतारतम्यरूपे । गुरुत्वं कठिनावयवाधिक्यम् । द्रवत्व-स्नेहस्थितस्थापकवेगाः शक्तिरूपा एव । सुखदुःखेच्छाद्वेषप्रयत्नभावनाः धर्मभूतज्ञानस्वरूपमेव । प्रोक्षणादिना व्रीह्यादिषु जायमानः संस्कारः योग्यतालक्षणः सत्त्वोन्मेषः ॥

कर्मणस्संयोगेऽन्तर्भावः । संस्थानमेव सामान्यम् । विशेषः तत्तद्द्रव्यगतः व्यावर्तकः असाधारणो धर्मः । समवायः आश्रयस्वरूपं वा आश्रितस्वरूपं वा । पूर्वपूर्वावस्था द्रव्यस्य प्रागभावः । उत्तरोत्तरावस्था ध्वंसः । गोत्वादिः संस्थानरूपः असाधारणः धर्म एव धर्मिण इतरेभ्यो भेदः । स्वस्यापि स्वयमेवेतरभेदः । अत्यन्ताभावस्तु विद्यमानपदार्था-वस्थाविशेषरूप एव । एवमितरसिद्धान्तसिद्धपदार्थानामप्यन्तर्भावादिक-मवधेयम् । एवंविधां द्रव्याद्रव्यव्यवस्थामुपगम्य सर्वव्यवहाराणामक्लेशेन निर्वाहात् अधिककल्पनाभावात् शास्त्रमार्गापरित्यागात् एष एव सिद्धान्तः स्वरसः । क्वचित् ग्रन्थेषु प्रागुक्तव्यवस्थाविरोधेन व्यव-

हारदर्शनेपि परकीयसिद्धान्तमूलकस्स व्यवहार इति सामरस्यमनुसन्धेयम् ॥

अपिचात्रान्तर्भावनिरूपणे प्रायेणैषा युक्तिः पुरस्कृतेति विज्ञायते । यथा—तद्धेतोरेव तद्धेतुत्वे मध्ये किंतेनेति न्यायेनान्यथासिद्धिलक्षणेन लाघवापरपर्यायेणान्तर्भावः प्रतिपाद्यत इति । एवमद्रव्याणां द्रव्यैकाश्रितत्वेन तदपृथक्सिद्धत्वलक्षणायुतसिद्ध्या द्रव्योत्पत्तिस्थितिज्ञप्तिभिरेवोत्पत्तिस्थितिज्ञप्त्युपपत्तेः पृथगुत्पत्त्यादिकं नाभ्युपेयते । ततः नानवस्थाऽन्योन्याश्रयादिदोषावकाशः ॥

## भक्तिः.

एवं तत्त्वनिरूपणमावश्यकमिति विस्तृतम् । अथ हितनिरूपणं पुरुषार्थनिरूपणं च संक्षेपतः क्रियते । हितं नाम पुरुषार्थोपायः । पुरुषार्थश्च अभ्युदयनिश्श्रेयसभेदेन द्विविधः । आद्यः पशुपुत्रस्वर्गादयः अणिमादिसिद्धयश्च । निश्श्रेयसं मोक्षः । अभ्युदयस्य साधनं सर्वेषु शास्त्रेषु प्रसिद्धं नेह निरूपणमर्हति ॥

मोक्षस्य साधनं तु भक्तिः प्रपत्तिश्चेति सिद्धान्तः । भक्तिर्नाम जीवपरमात्मयाथात्म्यज्ञानपूर्वकः वर्णाश्रमधर्मेतिकर्तव्यताकः परमपुरुषचरणयुगळध्यानार्चनप्रणामादिः अत्यर्थप्रियः । सैवोपनिषत्सु वेदनमुपासनं ब्रह्मविद्या इत्यादिभिः सामान्यपदैः उपकोसलवैश्वानरसद्विद्यादिभिश्च विशेषपदैः व्यवह्रियते । अत इदमुच्यते—

**वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवस्मृतौ ।**
**सा च दृष्टित्वमभ्येति दृष्टिः भक्तित्वमृच्छति ॥ इति ॥**

अत्र ध्यानार्चनप्रणामादयः उपासनशरीरान्तर्गताः । उपासनं दर्शपूर्णमासयागस्थानीयम् । ध्यानादयः आग्नेयादिस्थानीयाः । वर्णा-

श्रमधर्माः प्रयाजादिस्थानीयाः । ध्यानमष्टाङ्गं मानसम् । नामसङ्कीर्तनं वाचिकम् । अर्चनादिकं कायिकम् । एवं त्रिविधमुपासनम् ॥

अनन्यप्रयोजना अनवरता निरतिशयप्रिया विशदतमप्रत्यक्षतापन्नाऽनुध्यानरूपा भक्तिः मोक्षाव्यवहितप्राक्काले परभक्तिरित्युच्यते । ततः परज्ञानं तत परमा भक्तिः । एवं परभक्तिपरज्ञानपरमभक्तिरूपावस्थात्रयवती भवति भक्तिः । आद्या विषयस्वभावजा साक्षात्कारेच्छात्मिका धीः । द्वितीया कादाचित्क साक्षात्कारः । तृतीया निरन्तरानुबुभूषा । अनुभवस्तु विश्वानुकूलत्वप्रकारकः आनन्दसुखरसादिपदवाच्यः विशिष्टविषयकस्साक्षात्कारः परिपूर्णपरब्रह्मानुभवः । कैङ्कर्यं तु भगवदाभिमत्यनुरोधिनः सर्वे व्यापाराः ॥

एतादृशस्य चोपासनस्य भगवद्विषयकस्य अधिकारः स्वात्मसाक्षात्कारः । तस्य चोपायभूतः कर्मयोगः ज्ञानयोगश्चेति । कर्मयोगो नाम यागदानहोमदेवार्चनतपःकृच्छ्रोपवासपुण्यतीर्थपुण्यस्थानवासप्राणायामेन्द्रियनिग्रहवेदाध्ययनतदर्थविचारादिरूपेषु एकं यथारुच्यङ्गितया स्वीकृत्य नित्यनैमित्तिकानि तदङ्गतयोपसंहृत्यासङ्गकर्मानुष्ठानविशेषः । असङ्गत्वं नाम—कर्मणि आत्मीयत्वबुद्धिफलबुद्ध्योस्त्यागः । अन्ततस्त्वयं कर्मयोगः भगवदाराधनरूपलोकोपकारपर्यवसायीत्यन्यत्र विशदीकृतम् । स च ज्ञानयोगद्वारा साक्षाद्वा ध्यानयोगनामके परिशुद्धजीवात्मोपासने रुचिमुत्पाद्य भक्तियोगाङ्गभूतं आत्मावलोकननामकं जीवात्मसाक्षात्कारमुत्पादयति ॥

ज्ञानयोगो नाम कर्मयोगेन परिशुद्धान्तःकरणस्य परिशुद्धात्मचिन्तनम् । तदपि बहुकालमनुष्ठितं ध्यानयोगमुत्पाद्यात्मावलोकनं साधयति ॥

साक्षात्पक्षस्तु—प्रागुक्तकर्मयोग एव आत्मयाथात्म्यज्ञानपूर्वक-

मकर्तृत्वानुसन्धानपूर्वकं चानुष्ठितश्चेत् ज्ञानयोगव्यवधानमन्तरेण सुकरः शीघ्रः निष्प्रमादश्च सन् ध्यानयोगद्वाराऽऽत्मावलोकनहेतुर्भवति ॥

तदेतदात्मावलोकनमाविर्भूतापरिच्छिन्नज्ञानैकाकारभगवच्छेषतैकस्वभावात्मस्वरूपसाक्षात्कारलक्षणं भगवद्व्यतिरिक्तसर्ववस्तुषु तृणवदनादरणीयतामापादयत् उभयलिङ्गे उभयविभूतिमति स्वामिन्यत्यर्थप्रियानुभवरूपां परां भक्तिमुत्पादयति ॥

तद्यथा—बाल्ये बालक्रीडाप्रसङ्गेन नरेन्द्रभवनान्निष्क्रान्तस्य मार्गाद्भ्रष्टस्य व्याधगृहीस्य पक्कणे वर्तमानस्य राजकुमारस्याप्तोपदेशात् आत्मनस्तथात्वं मत्वा विमृशतः स्वात्मनि राजसाम्यमङ्गप्रत्यङ्गादिषु पश्यतः तस्मिन् यथा पितृत्वप्रीतिः निरतिशया जायते एवमस्माकमपि यथोपदेशं भगवच्छेषभूते स्वात्मनि तत्साम्याकारेण साक्षात्कृते प्रीतिरूपा भक्तिः स्वयमेवो त्पद्यत इति ॥

सैषा भक्तिस्समग्रा भगवद्गीतायां नवमे प्रतिपादिता । सहसा भक्तियोगासामर्थ्ये अभ्यासयोगः कर्तव्यः । तत्राप्यसामर्थ्ये भक्तियोगाङ्कुरभूतः क्रियायोगः कर्तव्यः । तत्राप्यसामर्थ्ये पूर्वोक्तः कर्मयोग एव तार्तीयीकः कर्तव्य इति द्वादशे निरूपितः । तत्राक्षरयोगोऽपि कश्चिद्दुष्करः भक्तियोगसाधनीभूतो निरूपितः । एवंच गीताशास्त्रे कर्मयोगः ज्ञानयोगः ज्ञानात्मककर्मयोगः ध्यानयोगः भक्तियोगः क्रियायोगः अभ्यासयोगः अक्षरयोग इति योगाष्टकं निरूपितमिति निर्णयः ॥

प्रपत्तिः.

निरुक्तभक्तियोगाशक्तस्य किंचिज्ज्ञस्य तीव्रोद्वेगविशिष्टस्य सर्वस्य प्रपत्तावधिकारः । उपासनरूपभक्त्यारम्भे तु त्रैवर्णिकानामेव पुंसां स्त्रीणां चाधिकारः ॥

प्रपत्तिर्नाम—

**अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम् ।**
**तदेकोपायतायाञ्चा प्रपत्तिश्शरणागतिः ॥**

सैषा प्रपत्तिस्सर्वकामसाधनेति सिद्धान्तः । तत्संग्रहोऽयम्—

**यद्येन कामकामेन न साध्यं साधनान्तरैः ।**
**तेन तेनाप्यते तत्तन्न्यासेनैव महामुने ॥**
**सुदुष्करेण शोचेद्यो येनयेनेष्टहेतुना ।**
**स स तस्याहमेवेति चरमश्लोकसंग्रहः ॥ इति ॥**

इदं च प्रपदनं श्रुतिषु विहितं भगवच्छास्त्रेणोपबृंहितम् । अत एव तस्मिन्नेव शास्त्रे दासशेषादिशब्दाः प्रायः प्रयुज्यन्ते । इदं भरन्यासप्रधानं सत् त्वमेवोपायभूतो मे भवेति प्रार्थनानुगुणं भरस्वीकारपूर्वकमुपायान्तस्थानस्थितिलक्षणमीश्वरस्य निरपेक्षोपायत्वं साधयतीत्युपाय इत्युच्यते । अयमेव ह्यस्या विद्यायाः विशिष्यवेद्याकारः । ततश्च—

**इयं केवललक्ष्मीशोपायत्वप्रार्थनात्मिका ।**
**स्वहेतुत्वधियं रुन्धे किंपुनस्सहकारिणाम् ॥**

इत्युच्यते । उपायताबुद्धिपरित्यागपूर्वकमेवानुष्ठेयत्वस्य फलसाधनत्वस्य चात्रोपदेशात् उपायत्वबुद्धिपरित्यागे कथमनुष्ठानं कथं वा फलसाधनत्वमित्यादिशङ्काया नावसरः ॥

अत्रानुष्ठनात्पूर्वमुपायताज्ञानं अनुष्ठानकाले परित्याग इति केचित्समादधिरे । केचिच्च पुनःप्रपदनादावुपायताबुद्धिपरित्यागः ततः प्रपदनान्तरं न कर्तव्यमित्याहुः ॥

प्रपत्त्यधिकारिणो जीवात्मनः परतन्त्रस्य आधेयत्वं विधेयत्वं शेषत्वं चानुसंन्धेयम् । तत्राधेयत्वानुसन्धानेन परमपुरुषार्थसिद्धेराश्रयभूता स्वरूपसत्ता सिध्यति । प्रवृत्तिनिवृत्तिपर्यन्तविधेयत्वानुसन्धानेन

उपायविशेषपरिग्रहयोग्यता सिध्यति । ततः कैंकर्यपर्यन्तपुरुषार्थरुचिसम्भवे शेषत्वानुसन्धानेन सर्वशेषिणस्सर्वेश्वरस्य अहं शेषो दासश्चेति प्रीत्यात्मकेन उपायोऽनुष्ठेयः । ततश्च स्वरूपभूतमाधेयत्वमुपायभूतं विधेयत्वं च फलदशायां शेषत्वानुसन्धानेनैव स्वरसं भवतीति शेषत्वं प्रधानतया परिगण्यते ॥

गुणविग्रहादिवत् लक्ष्मीरपि भगवतो विशेषणमिति विशिष्टो भगवानेक एव भक्त्या प्रपत्त्या वा प्रसन्नः प्रधानभूत उपाय इति नोपायद्वित्वप्रसङ्गः ॥

प्रपदनानुष्ठानकाले श्रियं प्रपद्य पुरुषकारस्थाने निवेश्य भगवन्तं शरणं व्रजेत् । सैषा श्रीः प्रजासु वात्सल्यातिशयेन पत्यौ वाल्लभ्यातिशयेन पुरुषकारतामङ्गीकरोति । श्रीशब्दार्थस्तु—

**श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ।**
**शृणोति भक्तार्तिरवं श्रावयत्यपि तं पतिम् ॥**
**शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत् ।**
**उपदिष्टा इमे ह्यर्थाः श्रीशब्दस्य महर्षिभिः ॥ इति ॥**
**अस्ति कर्मार्हफलदे पत्यौ कृत्यद्वयं श्रियः ।**
**निग्रहाद्वारणं काले सन्धुक्षणमनुग्रहे ॥ इति ॥**

पुरुषकारपदं पुरुषेण कर्तव्यकार्यपरमपि भगवत्समाश्रयणदशायां पुरस्कारविशिष्टवेषेण चेतनरूपायाः सिद्धाया अपि साध्यत्वसम्भवात् लक्ष्म्यां प्रयुज्यते । प्रपदनानुष्ठानक्रमस्तु न्यासदेशके समुपदिष्टः ॥

**अहं मद्रक्षणभरो मद्रक्षणफलं तथा ।**
**न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः ॥**
**श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः ।**
**एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥**

देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैंकर्येषु नियुङ्क्ष्व माम् ॥
मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैंकर्योपकरणं वरद स्वीकुरु स्वयम् ॥

इति । अत्र—

सर्वज्ञेऽपि सदा देवे याच्ञाविज्ञापनादिभिः ।
तत्तदिष्टप्रदित्सात्मा प्रीतिरेव प्रसाध्यते ॥
तदेव चोदनोपज्ञमपूर्वं तत्त्ववेदिनाम् ।
आराध्येन्द्राद्यपायेऽपि फलदानाय तिष्ठति ॥
अकिञ्चनधुरीणस्य मज्जतः शोकसागरे ।
आत्मात्मीयभरं श्रीमानाददीत ममाच्युतः ॥

पुरुषार्थः.

परिपूर्णपरब्रह्मानुभवो मोक्ष इति निर्णयः । स हि अनिष्टनिवृत्तिरिष्टप्राप्तिश्चेति द्विदलः । भगवन्निग्रहनिवृत्तिरनिष्टनिवृत्तिः । सैव हि सर्वकर्मनिवृत्तिरिति बन्धान्मुक्तिरित्युच्यते । इष्टप्राप्तिस्तु स्वाभाविकज्ञानविकासलाभः । सोऽपि ज्ञानसङ्कोचनिवृत्तिरिति यद्यप्युच्येत । तथापि तस्य यावत्कालमवस्थितिरूपा ज्ञानविकासपरंपरा भावरूपैवेतीष्टप्राप्तिपदेन व्यवहारः ॥

अत्र सहजकृपोत्तम्भकभक्तिप्रपत्तिमूलकभगवत्प्रसादविशेषेणैव अनिष्टनिवृत्तिः। इष्टप्राप्तिस्तु सहजसौहार्दविशेषेण यावत्कालं तदनुवृत्तिः। ततश्च प्रसादविशिष्टवेषेणोपायः । सर्वाकारविशिष्टवेषेण स एवोपेय इति विभागः ॥

मोक्षे अपहतपाप्मत्वादिगुणेषु आनन्दे च परमं साम्यं तुलाधृतसुवर्णपाषाणयोरिव केनचिदाकारेणैव । उभयलिङ्गमुभयविभूतिविशिष्ट-

मीश्वरस्वरूपं सपरिवारमीश्वरस्येव नित्यानां मुक्तानामप्यनुकूलत्वलक्षणानन्दत्वेनैव भासते इति सर्वं निरतिशयानन्दमित्युच्यते ॥

बद्धानां तु संसारदशायां कालदेशदशाभेदेन प्रतिकूलत्वाल्पानुकूलत्वादिना तत्तद्वस्तु भासते । सोऽयमवभासः न वस्तुस्वभावाधीनः । अपि तु कर्मलक्षणभगवत्सङ्कल्पाधीनः कर्मफलप्रदानप्रकारः । कर्मरूपप्रतिबन्धकनिवृत्तौ स्वाभाविकं निरतिशयमानुकूल्यमाविर्भवति । सर्वेश्वरस्येच्छावैचित्र्येणैकमेव वस्तु सहजागन्तुकप्रक्रियया उपादेयं त्याज्यं च भवति ॥

दृश्यते हि लोकेऽपि सर्वोत्तमस्य कस्य चित् स्वामिविशेषस्य आत्मात्मीयं सर्वं भृत्यार्थमित्यभिप्रायः । तथा उत्तमस्य भृत्यस्याप्यात्मात्मीयं सर्वं स्वाम्यर्थमित्यभिप्रायः । एवं परमात्मनोऽभिप्रायः सर्वमाश्रितार्थमिति । आश्रितस्याभिप्रायोऽपि सर्वं परमात्मार्थमिति सिद्ध्यति । एवं चोभावपि निरतिशयसौहार्देन अन्योन्योद्देशेन सकलमपि व्यापारं कुरुतः । तत्र सेवालक्षणं मुक्तस्य कैंकर्यं परार्थैकप्रवणमनस्त्वान्निरतिशयमनुकूलमिति सेवा दुःखहेतुरिति कुयुक्तेर्नावसरः—

**स्वतश्शेषत्वकैंकर्यं न कुत्राप्यसुखावहे ।**
**कर्मजत्वात्तथात्वस्य लोके च व्यभिचारतः ॥**
**महानन्दमहिम्ना च प्राग्दुःखावेक्षणादपि ।**
**मोहदुःखे तदा स्यातामिति मूढस्य जल्पितम् ॥**
**सुखस्य मोहनत्वं च तामसत्वाद्युपाधिभिः ।**
**सुखाय च भवेत्क्वापि पूर्वदुःखावमर्शनम् ॥**

इति । एवं पतिपत्नीभावरूपसंबन्धेन पितृपुत्रभावसंबन्धेन गुरुशिष्यभावसम्बन्धेन रक्ष्यरक्षकभावसंबन्धेन एवमादिना सर्वविधबन्धुत्वसंबन्धेन

निरतिशयः परस्परं प्रीतिविशेषः रुचिभेदेन सुखग्रहणाय निरूपितश्शा-स्त्रेष्वित्यवधेयम् ॥

अत्र पतिपत्नीभावरूपसम्बन्धनिरूपणेन परस्परपारार्थ्यभावनाभा-वितसकलविधव्यापारसमाधिरनुसन्धेयः । तदुच्यते कविभिः—

**यदेव रोचते मह्यं तदेव कुरुते प्रिया ।**
**इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥**

इति । एवं मुक्तव्यापारस्सर्वोऽपि परमपुरुषकैङ्कर्यरूप इत्यवधेयम् । अत एव भगवतः अस्त्रभूषणादीनि वीरश‍ृङ्गारादिरसानुबन्धीनि आश्रितैकार्थानीति सिद्धान्तः ॥

एवमन्यप्रीत्युद्देशेनैव जीवस्य प्रवृत्तावपि सा प्रीतिः स्वस्याप्यनु कूलैवेति स्वप्रीतिरत्रानपगता । ततः प्रयोजनोद्देशे न चेतनप्रवृत्तेर्नानुप-पत्तिः । एवं मुक्तस्य नित्यस्य च जगद्व्यापाराभावेऽपि गान्धर्ववेदप्रसि-द्धनटसामाजिकैकरस्यवत् लीलारसैकरस्यमवधेयम् ॥

स्वयंप्रयोजनानायासव्यापारो हि लीला । तस्या रसत्वं तु चेतनो-ज्जिजीवयिषयाऽपारकरुणामूलत्वात् तादृशव्यापारस्य दयामयानां निरति-शयानन्दरूपत्वाच्च बोद्धव्यम् ॥

एवं च सति स्वात्मानुभवमात्ररूपस्य कैवल्यस्य सर्वैरप्य-त्यन्तं त्याज्यत्वेन तद्विषयकं मीमांसनमत्राफलमिति न वयं विस्तृणीमहे ॥

अनुकूलतया भानमेवानन्दानुभव इति निर्णयादात्मस्वरूपं सर्व-दाऽनुकूलप्रकाशरूपमित्यानन्दपदव्यपदेश्यं भवति । तदेतदानन्दत्वं संसारदशायां मन्दमनुभूयते । धर्मभूतज्ञानगतमनुकूलविषयकत्वरूपमा-

नन्दत्वं तु संसारदशायां कर्मवैचित्र्येण अनुकूलप्रतिकूलशब्दादिविषय-भेदेन नानाविधाभिरवस्थाभिः विचित्रं भवति । मोक्षदशायां तु धर्मभूतं ज्ञानं सर्वं निरतिशयानुकूलत्वेन विषयीकुर्वत्सत् धर्मिस्वरूपमपि तीव्रानु-कूलत्वेन विषयीकृत्य सर्वानुभवरूपमात्मानुभवरूपं च भवति । परिपूर्णपर ब्रह्मानुभवरूपं च भवति । सर्वं साक्षात्करोति । आश्रयस्य सर्वज्ञत्वं चावहति । यावत्कालं विकसदेव प्रवहति ॥

स एष मुक्तः स्वराड्भवति । स्वराट्त्वं चाकर्मवश्यत्वम् । सर्व-लोकसंचारी भवति स्वेच्छया । न तु कर्मशक्तया । विदेहः सदेहः अनेकदेहश्च भवति स्वसंकल्पेन । जगदनुग्रहार्थं प्रकृतिमण्डले राम-कृष्णादिवदवतरति । भगवत्कैंकर्यार्थं चावतरति भरतबलभद्रादिवत् । यतो वाचो निवर्तन्ते अप्राप्यमनसा सह तादृशमानन्दमनुभवति । न च पुनः कदाचिदपि कर्मवश्यो भवतीति न च पुनरावर्तते इत्युच्यते । यतः अत्यर्थप्रियं ज्ञानिनं लब्ध्वा भगवान्न कदाचिदप्यावर्तयति । असावपि निरतिशयानन्दरूपसविशेषणभगवद्व्यतिरिक्ते वस्तुन्यपेक्षाया असंभवात् स्वयं नावर्तते इति सर्वं समञ्जसम् ॥

श्रीमद्रामानुजीयं मतमिह विदितं लोकवेदानुकूलं
तत्रैकं तत्त्वमिष्टं सकलचिदचिदाकारनारायणाख्यम् ।
चित्तत्त्वं जीवरूपं ह्यचिदपि विशदं सप्तविंशात्मकं स्या
त्तत्राद्रव्यं गुणत्वाद्दशविधमुदितं नात्र तत्त्वान्तरोक्तिः ॥
तस्मिन् भक्तिप्रपत्ती हितमिति विदितं स्वाधिकारानुरूपं
प्राप्यं तद्ब्रह्मसाम्यं निरवधिपुरुषार्थात्मकं सामरस्यम् ।
आगन्तुप्रक्रियातो यदपि बहुविधं हेयमासीत्पुरस्ता
न्मुक्तौ सौहार्दभूम्ना निखिलमिदमुपादेयमात्मानुकूलम् ॥

विशिष्टाद्वैतवेदान्तप्रक्रियेत्थं प्रकाशिता ।
कैंकर्येणानया वाचा प्रीयतां परमेश्वरः ॥

इति दर्शनोदये विशिष्टाद्वैतदर्शनं नाम पञ्चमः परिच्छेदः

---

# शैवदर्शनम्.

---

पीठिका

**भक्तिलक्ष्मीसमृद्धानामपरं शैवदर्शनम् ।**
**स्थालीपुलाकन्यायेन संक्षेपेण निरूप्यते ॥**

अथ भक्तिसिद्धान्तेषु बहुषु बहुप्रकारेषु सत्स्वपि तेषां प्रपञ्चन-मत्रानादृत्य शैवदर्शनं परं विरलप्रचारमिति तत्सारांशो निरूप्यते ॥

तदिदं दर्शनं बहुविधमुपलभ्यते—शैवं पाशुपतं कालामुखं कापालमिति । परमशिवपारम्यं सर्वत्राविशिष्टम् । तत्र नकुलीशपाशुपत-दर्शनमित्येकं दर्शनं सर्वदर्शनसङ्ग्रहेऽनूदितमस्ति । तत्र निरपेक्षेश्वरवादो निरूपितः । तथाहि—

**अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।**
**ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥**

इति । स हि वादः जीवकृतं पुण्यापुण्यलक्षणं कर्मानपेक्ष्यैव ईश्वरः स्वेच्छया सुखदुःखादिप्रद इति पक्षः । तमेतं पक्षमाचार्यबादरायणः पूर्वपक्षतयाभिप्रेत्य परमेश्वरस्य वैषम्यनैर्घृण्यदोषस्य परिहाराय सापेक्षेश्वर-वादं समर्थयामास ॥

इदानीं निरूप्यमाणं शैवदर्शनं तु सापेक्षमीश्वरमभ्युपगच्छति । प्रायेणेदं दर्शनं शैवागममूलमिति तदीयग्रन्थेभ्य एवावगम्यते ॥

एवं विशिष्टाद्वैतादिदर्शनान्यपि पाञ्चरात्राद्यागममूलानीति शक्यते यद्यपि वक्तुम्। तथापि औपनिषदसिद्धान्तस्यैवोपबृंहणतया-पाञ्चरात्राद्यागमानां प्रवृत्त्यभ्युपगमान्नास्त्यवकाशस्तथा वक्तुम्। शैवदर्शनं तु वेदान्तवासनावाद्भिः विद्वाद्भिः व्याकुलीकृतमित्यागमनिष्ठाः स्वीयप्रबन्धेषु प्रकाशयन्ति। अतः आगमैकमूलमिदं दर्शनमिति प्राचामभिप्रायः। अपिचैते वेदानां पौरुषेयत्वमिच्छन्ति। वेदेषु शिवज्ञानं क्वाचित्कं, आगमेनैव तत्सिद्धिरिति कथयन्ति॥

इदं च शैवदर्शनं परमशिवस्य निमित्तकारणत्वमात्रं वदति। आचार्यबादरायणेन भाष्यकारैश्चासौ वादः अनूद्य निराक्रियते औपनिषदं दर्शनमभिन्ननिमित्तोपादानवादं वदतीति॥

एवं स्थितेऽपि शिवार्कमणिदीपिकायां श्रीमताऽप्पयदीक्षितेन शैवागमानामप्याभिन्ननिमित्तोपादानवाद एव तात्पर्यमिति निरूप्यते। तदिदं "सन्धिमिच्छन्ति साधवः" इत्यस्य न्यायस्योदाहरणं भवितुमर्हति॥

श्रीकण्ठभाष्येऽपि (१-३-१२) "यतो विष्णुशिवयोः उपादाननिमित्तयोः अवस्थाभेदमन्तरेण स्वरूपभेदो नास्ति" इति व्योमातीतवादोऽपि समरसीकृतः॥

श्वेताश्वतरोपनिषदि काल-स्वभाव-नियति-यदृच्छादिशब्दाः श्रूयन्ते। अत्र कालनियत्यादितत्त्वाभ्युपगमादनादीदं दर्शनमित्येतद्दर्शननिष्ठानामाशयः॥

प्रमेयसंग्रहः

अस्मिन् दर्शने संक्षेपतः त्रिविधं प्रमेयं पतिः पशुः पाशश्चेति। पतिः परमशिवः सर्वशक्तिसपन्नः। पशुः पुरुषः ज्ञातृत्व-

कर्तृत्वभोक्तृत्वशक्तियुक्तः परमशिवसाम्यस्वरूपयोग्यः । पाशः पञ्च-प्रकार इत्युपदिश्यते । ते तु प्रकाराः—मलः कर्म माया महामाया रोधशक्तिरिति ॥

मलः—पुरुषस्य स्वाभाविकी अनादिरशुद्धिः । तदुक्तम्—

**एको ह्यनेकशक्तिः दृक्क्रिययोश्छादकः मलः पुंसः ।**
**तुषतण्डुलवत् ज्ञेयः ताम्राश्रितकालिकावद्वा ॥**

इति ॥

कर्म—क्रियते फलार्थिभिरिति धर्माधर्मात्मकम् ॥

माया—कालनियत्यादित्रिंशत्तत्त्वात्मिका ॥

महामाया—बिन्दुशिवतत्त्वादिपदवाच्या शुद्धाध्वोपादानभूता ॥

रोधशक्तिः—पुरुषस्य ज्ञानशक्तिक्रियाशक्त्योराच्छादिका परमशिवीया शक्तिः ॥

तत्त्वविभागः.

विस्तरेण तु षट्त्रिंशत्तत्त्ववादोऽयं सिद्धान्तः । यथा—महाप्रलये माया पुरुषः शिव इत्यन्योन्यं विभक्तं तत्त्वत्रयमवशिष्यते । सृष्टिः शुद्धाध्वा कृच्छ्राध्वेति द्विविधा । कृच्छ्राध्वनि मयातत्त्वं त्रिंशत्तत्त्वात्मकं भवति । शुद्धाध्वनि महामायाभिधानं बिन्दुपदवाच्यं शिवतत्त्वं शक्तितत्त्वसदाशिवतत्त्वेश्वरतत्त्वविद्यातत्त्वभेदेन चतुर्विधतत्त्वात्मना परिणम्य पञ्चतत्त्वात्मकं भवति । तथा कृच्छ्राध्वनि त्रिंशत् तत्त्वानि शुद्धाध्वनि पञ्च तत्त्वानि पुरुषश्चैक इति षट्त्रित् तत्त्वानि ॥

परमशिवस्तु सर्वतत्त्वातीतः । तस्य तत्त्वगणनायां नास्ति प्रवेशः । शिवतत्त्वं तु अस्माद्विलक्षणं जडात्मकं शुद्धाध्वमूलकारणम् ॥

कृच्छ्राध्वनि त्रिंशत्तत्त्वानीमानि—माया कालो नियतिः कला विद्या रागश्चेति षट् तत्त्वानि । तत्र कालेन नियत्या च सहकृता

कला प्रकृतिमहदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपञ्चभूतभेदेन चतुर्विंशतितत्त्वात्मना परिणमते । तथा च त्रिंशत् तत्त्वानि ॥

**आप्रलयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम् ।**
**तत् तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ॥ ७३ ॥**

इति तत्त्वप्रकाशे भोजदेवः कथयति ॥

एतादृशत्रिंशत्तत्त्वात्मकं पुर्यष्टकाभिधानं सूक्ष्मं शरीरं प्रतिपुरुषमादिसर्गकाले भवति । आ च महाप्रलयात्तिष्ठति । इदं तात्त्विकं शरीरमित्युच्यते । स्थूलं भौवनं शरीरम् । आधिकारिकं शरीरं मन्त्रेश्वराणाम् । तत् शुद्धाध्वनिबन्धनम् । अत्रानभिव्यक्तसत्त्वादिगुणत्वात् प्रकृतेः अव्यक्तमिति व्यवहारः । अभिव्यक्तगुणत्वात् बुद्ध्यादिकं व्यक्तं गुणतत्त्वमिति च व्यवहारः ॥

अत्र सर्वत्र सत्कार्यवादोऽभिमतः । यथोक्तम्—

**शक्तिरूपेण कार्याणि तल्लीनानि महाक्षये ।**
**विकृतौ व्यक्तिमायाति सा कार्येण कलादिना ॥**

इति सौरभेयागमवचनम् । मात्यस्यां शक्त्यात्मना प्रलये सर्वं जगत् सृष्टौ व्यक्तिं यातीति मायापदमपि विवृतम् ॥

ततश्च प्रागुक्तप्रमेयसङ्ग्रहे निर्दिष्टेषु पाशपदार्थेषु पञ्चसु मलस्य पुरुषतत्त्वेऽन्तर्भावः । कर्मणः बुद्धितत्त्वे । माया महामाया पृथगेव तत्त्वभूते । रोधशक्तिः परमशिवे इति निर्णयः ॥

### अशुद्धतत्त्वनिरूपणम्.

दर्शनान्तरे प्राकृताप्राकृततत्त्वविभागवत् अत्र शुद्धाशुद्धतत्त्वविभागोऽवधार्यते । मायाकार्यं सर्वमशुद्धम् । महामायाकार्यं शुद्धम् । तत्र

मायापदार्थो निरुक्तः। सा हि सर्वशक्तिसमाहारात्मिका सर्वकारणावस्था वस्तुभूता ॥

कालो नाम क्षणदिनमासात्मकः प्रसिद्धः। शुद्धाध्वन्यपि काल-तत्त्वं शुद्धमस्तीति केचिदाहुरघोरशिवाचार्यादयः ॥

नियतिः नियमनरूपा शक्तिः। सा हि इदं कारणमिदमेव कार्यं जनयति नान्यत् इति नियमनं, कर्मणां फलजननियमनं, फलानां भोगनियमनमित्यादिरूपा शक्तिः। नियत्यभावे भोगादिव्यवस्थानुपपत्तिः। अदृष्टन्तु फलजनने कृतार्थम्। परमेश्वरस्तु तत्तत्तत्त्वद्वारैव सर्वकार्य-कारणम्। साक्षात्कारणत्वे सर्वतत्त्वाभावप्रसङ्गः ॥

कला पुरुषस्य कर्तृशक्तिव्यञ्जिका काचिच्छक्तिः। नृणां मलं कलयति व्यावर्तयतीति कला ॥

विद्या उद्बुद्धक्रियाशक्तिविशेषस्य पुरुषस्य विषयप्रकाशननिमित्त-भूता इन्द्रियादिकरणस्थानीया प्रकाशपदवाच्या ज्ञानशक्तिव्यञ्जिका शक्तिः। बुद्धितत्त्वं हि सुखदुःखादिरूपत्वात् ग्राह्यं भवति। तस्मात् ग्रहणे करणभूता विषयावरणभङ्गकारिणीयं विद्या ॥

तथा च शब्दाद्यनुरक्तसुखदुःखादिरूपं बुद्धितत्त्वं ज्ञानस्य साक्षाद्विषयः। शब्दादिः परंपरयेति विषयः द्विविधः। एवं विषयीभूतं ज्ञानमपि सुखादिविषयावेदनरूपेण प्रमाणं भवति। तादृशविषयवेदन-रूपेण फलमपि भवतीति द्विविधमुच्यते ॥

रागः आसक्तिः पुरुषप्रवृत्तिहेतुः सामान्यतः। ज्ञानेच्छे तु विषयावच्छेदेन प्रवृत्तिहेतू। अनवच्छेदेन प्रवृत्तिहेतू रागः। इदमपि तत्त्वान्तरम् ॥

अत्र कालनियतिसहकृतयैव कलया प्रकृतिमहदहंकारादीनां चतुर्विंशतिविधतत्त्वानां समुदयः । तत्र राजसाहङ्कारात् प्रवृत्तिशीलत्वयुक्त्या कर्मेन्द्रियाणामुदय इति केषांचिदाशयो विशेषांशः । एवमवकाशव्यूहनपचनसङ्ग्रहणधारणानि महाभूतकार्याणि । व्यूहनं नामावयवसंयोजनम् ॥

## शुद्धतत्त्वनिरूपणम्

तत्रादिकारणं जडात्मकं परिणामि शिवतत्त्वम् । तदेतत् व्यापकमेकं निरवयवं नित्यं ज्ञानक्रियास्वभावमित्युच्यते—स्वकार्यभूतशुद्धाध्वभुवनप्राप्तानामवरमुक्तिभाजां ज्ञानक्रिये प्रकटयतीति । स एव बिन्दुः । सैव ममाहाया ॥

तदेतत् परमशिवस्य परिग्रहशक्तिरित्युच्यते । परमशिवस्यानुग्रहेच्छां निमित्तीकृत्य जायमानः शान्त्यादिभुवनात्मकः नादपदवाच्यः शिवतत्त्वस्य प्रथमः परिणामः शक्तितत्त्वम् ॥

ततः ज्ञानक्रियाशक्तिं निमित्तीकृत्य शक्तितत्त्वव्यवहितः परिणामः सदाशिवतत्त्वम् । तत्रैव स्थूलबिन्दोः स्थूलनादस्य चान्तर्भावः ॥

ततः अशुद्धाध्वनि सृष्टिसंहारादीनां साक्षात् कर्तृभूतानामनन्तादीनामधिष्ठानेन परमशिवस्य क्रियाशक्तिबहुलमीश्वरतत्त्वम् । तत्रैव विद्येशानामनन्तादीनामन्तर्भावः ॥

ततः पञ्चमं शुद्धं तत्त्वं विद्याख्यम् । सप्तकोटिमहामन्त्राधिष्ठानेन परमशिवस्य ज्ञानशक्त्या प्रचुरम् । तत्रैव प्रागुक्तमहामन्त्राणां व्योमव्याप्त्यादीनां विद्यानां कामिकादीनामष्टाविंशतितन्त्राणामन्तर्भावः । शक्त्यादितत्त्वेषु विचित्रभुवनादिसंनिवेशास्सन्ति ॥

तथा च परमशिवस्य सदाशिवादिनैक्यं नास्ति । शास्त्रेष्वैक्य-व्यवहारः शक्तिव्यापारनिबन्धन इति सिद्धान्तः ॥

तदुच्यते—

**निमित्तमीश्वरस्तेषामुपादानं स विन्दुराट् ।**
**सा च कुण्डलिनी शम्भोः शक्तिः शुद्धा जडात्मिका ॥**

इति । शिवशक्तिसदाशिवेश्वरतत्त्वचतुष्टयं पुरुषप्रकृतिमहदहङ्कारपदैरपि क्रमाद्व्यवह्रियते ॥

पुरुषतत्त्वनिरूपणम्.

पुरुषस्तु—ज्ञातृत्वकर्तृत्वभोक्तृत्वशक्तिसंपन्नः । स हि चैतन्य-मात्रस्वरूपोऽपि यदा भोक्तृत्वावस्थावान् भवति तदा तत्त्वान्तरव्यप-देश्यो भवति । स पशुस्त्रिविधः—विज्ञानाकलः प्रलयाकलः सकल-श्चेति । आद्यः मलमात्रयुक्तः, एकबन्ध इत्युच्यते । द्वितीयः मल-कर्मयुक्तः द्विबन्ध इत्युच्यते । तृतीयः मलकर्ममायायुक्तः बन्धत्रययुक्त इत्युच्यते ॥

प्रथमवर्गे पक्वमलान् परमशिवः बैन्दवशरीरयोगिनः कृत्वा विद्ये-शत्वं सर्वज्ञत्वं शुद्धाध्वाधिष्ठातृत्वं पञ्चकृत्याधिकारं च प्रददाति । अप-रान् सप्तकोटिसङ्ख्याकान् महामन्त्राधिदेवान् विद्यातत्त्वनिवासिनः करोति । तत्रार्धं परमशिवस्य जगदनुग्रहे सहायभूतं सत् अधिकारावसाने प्रलय-दशायां मोक्षं गच्छति । इतरदर्धं सृष्टिपर्यन्तं स्थित्वा परावर्तते । द्वितीयवर्गे पक्वमलानां मोक्षः इतरेषां संसारः । तृतीयवर्गे संसार एव । संसारिणां सृष्ट्यादौ सूक्ष्मदेहः, स्थूलदेहश्च ततो भवति ॥

संसारिष्वपि कांश्चिन्महाभागान् मन्त्रमहेश्वरान् भुवनपतीन् अणि-मादिसिद्धांश्च करोति । कांश्चिच्चानुगृह्य अष्टादशशतसङ्ख्यान् मन्त्रेशान् करोति । विद्येश्वराराधनेन दीक्षादिविधिना च येऽत्यन्तपक्वमलाः ते

मोक्षं यान्ति । न तु ज्ञानमात्रेण मलनिवृत्तिः । अपि तु दीक्षादिविधिसमासादितपरमशिवानुग्रहेणैवेति निर्णयः ॥

मन्त्रमहेश्वरपदाभिधेया विद्येश्वरास्ते अनन्तादयः । ते हि—अनन्तः सूक्ष्मः शिवोत्तमः एकनेत्रः एकरुद्रः त्रिमूर्तिः श्रीकण्ठः शिखण्डीत्यष्टौ, ईश्वरतत्त्वनिवासिनः ॥

सप्तकोटिमहामन्त्रा अपि पशव एव सर्गादावीश्वरानुगृहीतमहिमानः । वाच्यवाचकयोरभेदोपचारात्तेषां मन्त्रा इति व्यवहार । मननात् त्राणाच्च । त एव हीतरेषामाराधनेन दीक्षादिना च विविधां सिद्धिं प्रयच्छन्ति । शुद्धाध्वनि स्थिताः अवरमुक्तिभाजः । परमशिवसाम्यमापन्नाः परमुक्तिभाजः । ततश्च—मन्त्रमन्त्रेश्वरमन्त्रमहेश्वरादयः लोकपालादयश्चाधिकारिकाः अवरमुक्तिभाजः ॥

अवरमुक्तिभाजां महामाया तिरोधिशक्तिरिति पाशद्वयमेव । तदपि द्वयं न मोहकम् । अपि तु बोधकम् । तत्रैव तत्त्वबोधेन निरतिशयवैराग्येण च परममुक्तिलाभः ॥

### परमशिवनिरूपणम्.

स हि परमशिवः चिद्घनत्वात् तच्छक्तीनामपि ज्ञानक्रियादिरूपाणां चिदात्मकत्वमेव । न जडस्वरूपत्वम् । माया महामाया च परिग्रहशक्तिरित्युच्येते । तदेतत् द्वयं बाह्यं जडात्मकम् ॥

शुद्धाध्वनि साक्षात् परमशिवः निमित्तम् । शिवतत्त्वमुपादानम् । अन्यत्रानन्तादिद्वारा निमित्तम् । मायोपादानम् । शुद्धाध्वनि भुवनाद्युत्पादनं तद्वासिनां विद्याविद्येश्वराणां च बैन्दवशरीरप्रदानमित्यादिकः साक्षात्परमेश्वरव्यापारः ॥

उभयोरप्यध्वनोः सृष्ट्यादयः पञ्च व्यपाराः सन्ति । सृष्टिः स्थितिः संहारश्च प्रसिद्धाः । अनुग्रहः चेतनाचेतनयोः, चेतनानां भोगमोक्षप्रदानम् । अचेतनानां स्वस्वसामर्थ्यरूपप्रवृत्तेः प्रकाशनम् । तिरोभावः बन्धः । तथा च भोगेन कर्मक्षयं सम्पाद्य मोक्षं प्रयच्छति परमशिवः ॥

तस्य परमशिवस्य मलमायादिपाशजालासम्भवेन प्राकृतं शरीरं न सम्भवति । किन्तु शाक्तं शरीरम् । शक्तिरूपैरीशानादिभिः पञ्चभिः मन्त्रैः मस्तकादिकल्पनायामीशानमस्तकः तत्पुरुषवक्त्रः अघोरहृदयः वामदेवगुह्यः सद्योजातपादः परमशिवः ॥

ततश्च अस्मदादिशरीरविलक्षणं अनुग्रहतिरोभावसृष्टिस्थितिसंहाररूपकृत्यपञ्चककारणभूतं शरीरं परमशिवस्य शक्तिमयम् ॥

**मलाद्यसम्भवाच्छाक्तं वपुः नैतादृशं विभोः ।**
**तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः ॥**

इत्युच्यते । एवं निराकारे परमशिवे ध्यानपूजाद्यसम्भवेन साधकानामनुग्रहाय नानाविधदेवाद्याकारशरीरपरिग्रहणमप्यवतारपर्यायमस्ति ॥

मुक्तात्मानोऽपि शिवा एव । तथापि ते आदिमुक्ताः । अनादिमुक्तस्तु परमशिव एव । अत एव परमपदविशेषणम् ॥

### प्रत्यभिज्ञा.

अनयैव प्रक्रियया केचिन्माहेश्वराः प्रत्यभिज्ञादर्शनमिति किञ्चिद्दर्शनं प्रचारयन्ति । तदेतत् शिवाद्वैतमित्यापि व्यवहर्तुं शक्यते । इदमेव मूलं स्यात् आधुनिकशिवाद्वैतदर्शनस्य । अस्मिन् हि दर्शने सापेक्षकारणवादः । स हि सर्वस्य प्रपञ्चस्य संविदैक्यवादः ब्रह्मपरिणामवादवत् । जडस्य कारणत्वमेव न सम्भवति । अतः सर्वं कारणं

स्वेच्छयैव कार्यात्मना परिणमते इत्ययं वादः सापेक्षकारणवाद इत्यर्थः ।
तदुक्तम्—

**इत्थं तथा घटपटाद्याकारजगदात्मता ।**
**तिष्ठासोरेवमिच्छैव हेतुकर्तृकृता क्रिया ॥**
**तस्मिन् सतीदमस्तीति कार्यकारणताऽपि या ।**
**साऽप्यपेक्षाविहीनानां जडानां नोपपद्यते ॥**

इति । तथाचायं परमेश्वरपरिणामवादः भेदाभेदलक्षणः ॥

अत्र केवलमागमोक्तमेव दीक्षादिकं कर्म कृत्वा ज्ञानशक्तिप्रचयं संपाद्य परमशिवोऽहमिति प्रत्यभिज्ञामात्रेण परमशिवभावापत्तिलक्षणः मोक्ष प्राप्यते इति सिद्धान्तः यथा वाक्यार्थज्ञानमात्रेण भ्रमरूपसर्वबन्धनिवृत्तिरित्यौपनिषदः सिद्धान्तः ॥

अत्र सिद्धान्ते ईश्वरप्रत्यभिज्ञासूत्रं तद्वृत्तिः तद्विमर्शिनी इत्यादयः प्रबन्धाः बहवस्सन्ति । काव्यप्रकाशाख्यालङ्कारप्रबन्धप्रणेता मम्मटोपाध्यायोऽपि शैवदीक्षया संस्कृतः शैवसिद्धान्तनिष्ठः प्रत्यभिज्ञासूत्रविमर्शिन्याः व्याख्याताऽभूदिति तच्चारित्रे मुम्बापुरीमुद्रितकाव्यप्रकाशोपोद्धाततोऽवधार्यते । अतएव काव्यप्रकाशारम्भे—

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् ।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥**

इतिपद्ये नियतिपदं प्रयुक्तम् । तच्च पदं माणिक्यचन्द्रसूरिविरचिते सङ्केतनाम्नि व्याख्याने विवृतमेवम्—

"नियतिः सर्वपदार्थानां निजनिजसंस्थानमानवर्णादिव्यवस्थानियमहेतुः दैवपर्यायान्तरं पञ्चभूतपञ्चकर्मेन्द्रियपञ्चबुद्धीन्द्रियपञ्चविषयतत्त्वादिशिवतत्त्वपर्यन्तशैवशास्त्रोक्तषट्त्रिंशत्तत्त्वमध्योक्तं तत्त्वान्तरम्" इति ॥

तस्मादयं शैवसिद्धान्तनिष्ठ इति प्रथमपदेनैव सूच्यते । प्रायः आलङ्कारिकाः प्राचीनाः प्रसिद्धाः अभिनवगुप्तादयोपि शैवसिद्धन्त-निष्ठा एवेति च विज्ञायते । यतः—प्रत्यभिज्ञासूत्रविमर्शिन्याः अभि-नवगुप्ताचार्योऽपि ध्वन्यालोकव्याख्याता व्याख्यामरीरचत् ॥

महाकाव्यप्रणेतारः कालिदासभवभूत्यादयश्च महाकवयः शैव-सिद्धन्तनिष्ठा एवेति स्फुटम् ॥

एवं प्रत्यभिज्ञादर्शनं प्रसिद्धं बहुदर्शनसङ्कीर्णमिति दिङ्मात्रमुप-दर्शितम् ॥

**तदित्थं शैवसिद्धान्तविमर्शो दिक्प्रदर्शिता ।**
**लक्ष्मीपुरंश्रीनिवासविपश्चिच्चक्रवार्तिना ॥**

इति दर्शनोदये शैवदर्शनं नाम षष्ठः परिच्छेदः



# कार्यकारणभावमीमांसा

अवतरणिका

**कार्यकारणभावाभिप्रायविज्ञानमूलकः ।**
**मतभेदाविवेकोऽतः कार्यकारणचिन्तना ॥**

प्रथमं तावदिदानीमिदमवधारणीयम्—इह खलु जगत्यां सर्वेऽपि पदार्थास्समुपलभ्यन्ते चेतनाचेतनलक्षणाः प्रतिक्षणपरिणामिनः विविध-विचित्ररचनाविशेषाः नियतपौर्वापर्यलक्षणस्थितिमन्तः शृङ्खलिता इव प्रवहन्त इव च ॥

स चायं प्रवाहः जगद्व्यापार इति संसार इति व्यवहार इति लोकयात्रेति प्रपञ्च इति सम्प्रदाय इति च विवक्षाविशेषैः सामान्यतो व्यपदिश्यते विपश्चिद्भिः । तमेव च प्रवाहं विवर्तः स्वभावः परिणामः विकारः धर्मः अवस्था पर्यायः उत्पत्तिः अभिव्यक्तिः इत्यादिभिश्शब्द-भेदैः ते ते दार्शनिका विवेचयन्ति ॥

सेयं व्यापारपरम्परा तत्तद्वस्तुस्वभावमात्रपरतन्त्रेति आकस्मिकता-वादिनो लौकायताः प्राहुः । चेतनात्मकवस्तुगतभोगापवर्गलक्षणपुरुषार्थ-मात्रपरतन्त्रेति अर्थस्वभाववादिनः कापिलास्सत्कार्यवादिनः । तादृशपुरु-षार्थस्वामिभूतभोक्तृवर्गीयप्रयत्नपरतन्त्रेति सापेक्षवादिनः असत्कार्यवादिनः आरम्भवादिनस्तार्किकाः । तादृशभोक्तृवर्गीयादृष्टलक्षणप्रयत्नसापेक्षस्य सर्वज्ञस्य सर्वशक्तस्य परमकारुणिकस्य परमेश्वरस्य सङ्कल्पायत्तेत्यौप-निषदाः प्रायेण सत्कार्यवादिन परिणामवादिनः । कार्यकारणभावो दुर्नि-रूपः काल्पनिक इति विवर्तवादिन इति सामान्येन पञ्चतयी गतिः ॥

तासामुपव्याख्यानम् । तत्रेत्थमध्यवससुः स्वभाववादिनः— चेतनस्य पुरुषार्थभागित्वलक्षणं सान्निध्यं करणव्यापारानुकूलकृत्यौपयिकबुद्धिमत्त्वलक्षणं पौरुषमधिष्ठानं वा विनैव कान्तारगिरिगह्वरादिषु विविधविचित्रभूतपरिणामदर्शनात् कण्टकतैक्ष्ण्य मयूरचित्रक निम्बरसादिपरिणामस्य बीजशक्त्यैकायत्तत्वानुभवाच्च तत्तद्वस्तुस्वभावशक्तिरेवालं नियतकालदेशस्वभावां जगद्व्यापारपरम्परां निर्वोढुमिति न चेतनो नाम कश्चित्, न च तत्सान्निध्यं, नापि तदधिष्ठानं, नापि कर्म, नैव च किञ्चित् सहकारितया स्वीक्रियत इति ॥

कापिलाः पुनरेतादृशात्केवलात् बाह्यात्सिद्धान्तात् त्रस्यन्तः पुरुषञ्च कूटस्थं कल्पयन्तः तस्य निर्विकारत्वेऽपि तत्त्वान्तरपरिणामापत्त्यनर्हसजातीयचिद्रूपपरिणामलक्षणं भोक्तृत्वं परमार्थमभ्युपगच्छन्तः अनभ्युपगच्छन्तश्च केचित् तदीयभोगापवर्गप्रयुक्तमपि जगद्व्यापारं स्वभावपक्ष एव प्रायः प्रावेशयन् ॥

अथ तार्किकादयः स्वभाववादे पौरुषप्रयत्नस्य सर्वानुभवसिद्धस्य वैफल्यं लौकिकवैदिकविधिनिषेधशास्त्रानर्थक्यमित्याद्यनुपपत्तिपर्यालोचनया बाह्यव्यापारमात्रे आन्तरचेतनप्रवृत्तेः निदानतामपेक्षमाणाः कर्मणः कर्मसाध्यतानिराकरणेन स्वभाववादं दूरीकुर्वाणाः "संयोगाभावे गुरुत्वात्पतनम्, नोदनविशेषाभावान्नोर्ध्वं न तिर्यग्गमनं, प्रयत्नविशेषान्नोदनविशेषः" इत्यादिना वैशेषिकसूत्रेण कर्मणां प्रयत्नान्वयव्यतिरेकमध्यवस्यन्ति । "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम्" इत्यादिना अनुपलब्धप्रयत्नसाध्यताकेषु व्यापारेष्वदृष्टद्वारकपौर्वकालिकप्रयत्नसाध्यताञ्च कल्पयन्ति । सङ्गृह्णन्ति च नव्यास्तत्सिद्धान्तमित्थं वैशेषिकसूत्रोपस्कारवृत्तौ—

**आत्मजन्या भवेदिच्छा हीच्छाजन्या भवेत्कृतिः ।**
**कृतिजन्या भवेच्चेष्टा चेष्टाजन्या भवेत्क्रिया ॥ इति ॥**

अत एवचाख्यातार्थः व्यापारसामान्यं प्रयत्नसामान्यमित्यादिविवादावकाश इत्यन्यत्र विस्तरः ॥

औपनिषदास्तु—न्यायसिद्धस्वतःप्रामाण्यशास्त्रैकप्रमितं परमेश्वरं, कृत्स्नस्य जगद्व्यापारस्य पुरुषाधीनस्यापि परमेश्वरसङ्कल्पायत्तस्वरूप-स्थितिप्रवृत्तिकत्वं चाभ्युपगच्छन्तः एवं चिन्तयन्ति "कर्ता शास्त्रार्थ-वत्त्वात्, परात्तु तच्छ्रुतेः, कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-दिभ्यः, वैषम्यनैर्घृण्ये न सापेक्षत्वात्, लोकवत्तु लीलाकैवल्यम्" इति बादरायणीयनिर्णयम् ॥

विवर्तवादिनस्तु परमार्थं किञ्चिदधिष्ठानं स्वीकृत्य सर्वमाविद्यकमपि अद्वैततादात्म्यानन्यत्वादिपदव्यपदेश्यं सत्कार्यवादमेव ज्ञातसत्त्या व्यव-स्थापयन्ति । शून्यवादिनस्तु वैभाषिकसम्प्रदाये आर्यसत्यवादिसम्मतं प्रतीत्यसमुत्पादलक्षणं कार्यकारणभावमपि दुर्निरूपमिति निःस्वभावलक्षण-शून्यतायामन्तर्भावयन्ति ॥

प्रकृतविचारविषयभूतः कारणपदार्थः समवायिकारणलक्षणः उपा-दानाख्यः, यस्माज्जगत्कारणवादिनः सामान्यतश्चतुर्विधा एव विज्ञायन्ते—शून्यवादिनः, स्वभाववादिनः, अणुवादिनः, ईश्वरवादिनश्चेति । सर्वेषा-मपि दार्शनिकानां जगदुपादानमेव हि विजिज्ञासितम् ॥

### कार्यकारणभावखण्डनयुक्तयः

अत्र विषये चार्वाकमाध्यमिकयोरविशेषात् उभयसम्मतयुक्तिसं-ग्रहः । अत्राकस्मिकतावादिनां चार्वाकाणामयमभिप्रायः अकस्मादेव कार्यं भवतीति । तदयमर्थः—प्रत्यक्षपरिकलितोपादानशक्तिलक्षणवस्तु-

स्वभावेनैव परिणामपरम्परादर्शनात् स्वभाववादः, तत्र च नियतचेतनादिनिमित्तादर्शनान्निरपेक्षवादः, नियतनियामकादर्शनाद्यदृच्छावादः, अप्रार्थितान्यविज्ञातान्येव प्रायेण कार्याण्यनुभूयन्त इति प्रसङ्गवादोऽनुषङ्गवादो वा, देशस्वभाववत्कालस्वभावकल्पना कदाचिद्वादः, एवमादीनां सर्वेषां वादानां समाहारः अकस्माद्वाद इत्याकस्मिकतावादिनो लौकायताः लोकशब्दोक्तप्रत्यक्षप्रमाणैकशरणतया आयतशब्दोक्ता अधिका इति प्रथिताः॥

(१) अथायमस्य प्रपञ्चः—परिवेषादिषु नियतपूर्वसत् किञ्चिन्न दृश्यते। न च घटादिदृष्टान्तेन तदनुमेयम्, विपरिवर्तस्य दुर्वारत्वात्। अतो दृश्यमाना अप्यवधयः केषुचिद्रसोत्पत्तौ रूपादिवद्यदृच्छासिद्धा इति ॥

(२) पूर्वत्वमेव कारणस्य दुर्निरूपम् । पूर्वकालवृत्तित्वं हि तत् । काले च पूर्वत्वमुपाधिकृतम्। स चोपाधिर्यद्ययमेव, तदा तदधीनं कालस्य पूर्वत्वं, कालाधीनं चोपाधेरित्यन्योन्याश्रयः । अन्यापेक्षायां चक्रकम्, अनवस्थाऽपि ॥

(३) यदि कार्यं कारकव्यापारात्पूर्वमस्ति तदा पूर्वसिद्धगगनादिवत् किमपि कार्यं न स्यात् । अथ तदा नास्ति तदाऽपि खपुष्पवत् न कार्यम् । न चासतः सत्त्वापादनसम्भवः । न हि नीलं शिल्पिसहस्रेणापि पीतीकर्तुं शक्यम् ॥

(४) कार्यं कारणेन सह, पश्चाद्वा जायते? आद्ये किं कस्य कारणं कार्यं वा स्यात् । द्वितीये हेतुः स्वेन प्राप्तं साधयेदप्राप्तं वा । आद्ये प्राप्तत्वादेव पूर्वसिद्धेर्न साध्यत्वम्। न चोत्तरकालीनस्य पूर्वकालीनेन प्राप्तिः, उभयस्वरूपसिद्ध्यपेक्षत्वात्तस्याः । आप्राप्तोत्पादने सर्वस्मात्सर्वमुत्पद्येत, प्रकाश्यमप्राप्य वा दीपः प्रकाशयेत्, दाह्यमप्राप्य वा दहनो दहेत् ॥

(५) घटो जायत इत्येतौ तावन्न पर्यायौ, सह प्रयोगात्। अतः कार्यस्वरूपातिरिक्तं जन्म। तच्च जन्यमजन्यं वा? आद्ये जन्मनो जन्यत्वं हि जननकर्मतया, अतस्तस्या अपि जन्म स्वीकर्तव्यम्, एवं तस्यापीत्यनवस्था। अजन्यत्वे तज्जन्मनोऽनादित्वात् तद्वतो घटादेरपि तथात्वं स्यात्। तथा च कार्यत्वक्षतिः स्यादिति ॥

(६) कारणात्कार्यं भिन्नमभिन्नं वा? आद्ये गवाश्वयोरिव कार्यकारणता न स्यात्। अनन्तरे कथं सिद्धस्य साध्यत्वम् ॥

(७) किञ्चित्कारेण वा अकिञ्चित्कारेण वा कारणत्वम्? पूर्वत्र हेतूनामपि किञ्चित्कारजनने किञ्चित्कारान्तरापेक्षयाऽनवस्था। उत्तरत्रातिप्रसङ्ग इति ॥

(८) कार्यत्वकारणत्वयोः स्वभावत्वे पटत्व नीलत्वादिवत् सर्वं प्रत्यपि स्याताम्। अस्वभावत्वे कस्य चिदपि न स्याताम् ॥

(९) कार्यकारणभावस्य द्विष्ठत्वे द्वयोरपि द्वैरूप्यादविशेषः। एकस्थत्वेऽपि यत्रैकस्मिन् तत्रैवमिति ॥

(१०) किञ्च—न तावद्दण्डादयः मृदाद्यवयवाश्च प्रत्येकं घटाद्युत्पादनशक्ताः, अदर्शनात्। अत एव न समुदिता अपि। न हि नद्यस्समेत्यापि दहेयुः, सिकतास्सम्भूय तैलं जनयेयुः। शक्तानामेव सम्भूय करणे सर्वे कृतकराः स्युः ॥

(११) पूर्वं कारणमित्युक्ते नष्टं कारणमित्युक्तं स्यात्। दृष्टा च मृदिते मृत्पिण्डे घटोत्पत्तिः। तथा च स्वात्मानमलभमानस्य कथं परसाधकत्वम्। अन्यथा चिरातिक्रान्तस्य च स्यादेव कारणत्वम्। तुच्छस्य च कारणत्वे कार्यमपि तुच्छं स्यान्नित्यं वेति ॥

(१२) कार्यस्य कादाचित्कत्वं स्वभावो न वा? आद्ये नित्यस्वभाववत् आकाशादेराकाशत्वादिवत् निरपेक्षमेव स्यात्। द्वितीये कथमतत्स्वभावः कारणसहस्रेणापि तत्स्वभावतां नेतुं शक्यः। स्वभावस्य च हेतुमत्त्वे निर्हेतुकमिति किञ्चिन्न स्यात्। अतो नित्यस्वभाववन्नियतकालस्वभावता कार्यस्य स्यात्॥

(१३) परमाणवः स्वांशतस्संयुज्यावयविनमारभेरन्। तदंशोऽवयवरूपः? तदन्यो वा? आद्ये तस्यापि तथेत्यनवस्था। अन्यस्तु स्वाभाविक औपाधिको वा? पूर्वत्र भिन्नाभिन्नता स्यात्। उत्तरत्र उपाधिसम्बन्धेऽप्यंशभेदो दुर्वचः। परिशेषात्तन्निरपेक्षसंयोगैः अन्योन्यानाघ्रातभागभेदरहितैरणुभिः आरम्भः स्यात्। त्यक्तस्तर्हि सप्रतिघत्वविरोधः। ततश्च सर्वेषु परमाणुषु एकपरमाणुप्रदेशमात्रावस्थितेषु स्वाधिकदेशव्यापिकार्यारम्भो न स्यात्। दिक्संयोगायत्तोऽपि भागभेदः सावयवेष्वेव दृष्टः॥

(१४) किञ्च—बुद्धिस्तावत्सर्वतन्त्रसिद्धा। सांवृतीत्यपि हि तां माध्यमिका मन्यन्ते। सा चैकाऽप्यनेकविषया दृष्टेष्टा च। निरंशा सा प्रत्येकं कात्स्न्र्येन अंशतो वा विषयीकुर्यात्? नाद्यः अन्यानुल्लेखप्रसङ्गात्। न द्वितीयः निरंशत्वादेव। तत्रचेत्कश्चित्समाधिः, अणुष्वपि तथा स्यादिति नात्र प्रतिबन्दिः। विषयित्वं हि अंशानपेक्षतयैव दृष्टम्। अतो यथोपलम्भं एकवत् अनेकोऽपि विषयः एकस्या बुद्धेः। एवमेकस्य निरंशस्यानेकबुद्धिविषयत्वमपि निरूढम्। अवयव्यारम्भकसंयोगस्तु न त्वयाऽपि क्वचिदंशनिरपेक्ष उक्तः। क्वचिद्विशेषाङ्गीकारे नियामकाभावः। अथ सङ्घातारम्भकसंयोगेऽपि समः प्रसङ्ग इति। न समः, संयोगसाध्यसङ्घाताभावात्। तत्स्वीकारे ह्यवयविवाद एव वरम्॥

(१५) किञ्च—संयोगस्तर्हिप्रतिबन्दिः स्यात् । स चैकोऽनेकवृत्तिस्सन् अंशानंशविकल्पदौस्थ्यमतिक्रान्तः । न ह्यसौ नास्त्येव, सिद्धयोस्साध्यतया दृष्टेरिति । तदपि न—विषयित्ववन्निस्तारात् । सोऽपि हि द्वयोः न स्वांशाभ्यां वर्तत इति दृश्यते । एवं स्वामित्वादयोऽपि न प्रतिबन्दिः ॥

(१६) किञ्च—अस्तु तर्हि संयुक्तप्रतिबन्दिः । मूर्तैर्विभूनां संयोगोऽस्ति न वा ? न चेदन्यतरकर्मजसंयोगलोपः । अस्ति चेद्यदि कात्स्न्येन विभुद्रव्यमेकेन स्पर्शवता संयुज्यते, कथं स्पर्शवदन्तरेण तस्य संयोगः स्यात् । अंशतश्चेत्सावयवत्वप्रसङ्गः । न हि विभुद्रव्यस्यावयवित्वं सङ्घातत्वं वा सुवचम् । औपाधिको विभूनामंशभेद इति चेन्न—उपाधिसंयोगेपि अंशादिविकल्पानपायात् । निरंशेपि संयुज्यमानं स्वरूपेण तद्भेदोपाधिरिति चेन्न—स भेद उपाधिना छिन्ने चेत् अवयवविश्लेषात्मा स्यात् । अच्छिन्ने तु भेदाभेदवाद एव शरणम् । निरंशानामपि स्वभावत एव विभूनामनेकमूर्तसंयोगक्षमत्वमिति चेत् अणूनामपि तदस्तु अविशेषात् ॥

(१७) वृत्त्यनुपपत्तिर्यथा—यदि प्रत्यवयवं अविभागेनावयवी वर्तते तदैकावयवदर्शनेपि अवयव्युपलभ्येत जातिरिव प्रत्याधारम् । अथ विभज्यावयवातिरिक्तांशभेदेन, अनवस्थापातः ॥

(१८) तस्मात्संसर्गसंसर्गिद्रव्यदेशकालादिविशेषात् अवयवि पारिषद्राशि वनी यूथ पङ्क्ति मण्डल सेना व्यूह पूर्ण चतुरश्रादिवाद इति नातिरिक्तावयविवादस्साधीयानिति ॥

कार्यकारणभावसमर्थनयुक्तयः.

(१) अथ सापेक्षत्वादिनामत्र समाधानसङ्ग्रहः—यदि परिवेषादीनामपि कादाचित्कत्वं दृष्टं, तत्र निपुणं निरूपयतां देशकालादृष्टविशेषादातपादिकारणविशेषस्सिद्धः ॥

(२) अत्र द्वितीयामाशङ्कामाशङ्कमानेन किं पौर्वापर्यमेव न दृष्टम्, दृष्टमपि वा बाधितम्। नाद्यः स्वाभ्युपेतलोकव्यवहारविरोधात्। न द्वितीयः सर्वेषां नित्यत्वतुच्छत्वयोरन्यतरप्रसङ्गात्। अतः काले सत्यसति वा क्रमस्तावद्दुरपह्नवः ॥

(३) यदत्र पूर्वमसत्त्वे कार्यत्वं न स्यादिति। तद्विरुद्धभाषितं, प्रागसत्त्वविशेषितं सत्त्वमेव हि कार्यत्वम्। तत्र प्रागसत्त्वे प्रागसत्त्वमेव न स्यादिति वा तद्विशिष्टं न स्यादिति वा सत्त्वमात्रं न स्यादिति वा प्रसङ्गार्थः स्यात्। तत्र न प्रथमः, कस्यापि स्वाभावेन व्याप्त्यभावात्, अन्यथा शून्यवाद एव स्यात्। न द्वितीयः तदसत्त्व एव तद्विशिष्टसिद्धेः। न हि विशेषणसत्त्वं विशिष्टविरोधि। न तृतीयः असत्त्वस्य स्वकालत्वेन विरोधग्रहणात्, अन्यथा देशान्तरसत्त्वेऽपि विरोधप्रसङ्गेन स एवान्त्य बौद्धपक्षः स्यात् ॥

(४) यत्तु पश्चाद्भाविनः कारणप्राप्तिर्नास्तीति, तत्र पौर्वापर्यलक्षणा प्राप्तिः दृष्टत्वादनिवार्या। संयोगलक्षणा तु मा भूदनङ्गत्वात् प्रकाश्यदाह्यादिषु च यथादर्शनं कारणानां मिथः प्राप्तिरेवाङ्गम्, न तु कार्येण ज्ञानेन सह भस्मादिना वेति ॥

(५) यस्तु जन्मनो जन्यत्वाजन्यत्व विकल्पेन अतिप्रसङ्ग उक्तः, नासाववस्थावादिनां युक्तदोषः, न हि तेऽभिव्यक्तिं वा कारणसमवायादिकं वा जन्मेति ब्रुवन्ति, किन्तूपादानावस्थाविशेषम्, ईदृशस्य जन्मनः उपादानावस्थान्तरसाध्यत्वे कारणानवस्थामात्रमापततीति सा च न दोष इति सर्वाविगीतम् ॥

(६) कार्यकारणयोर्भेदाऽभेदविकल्पोऽपि नावकल्पते, कारणात्कार्यस्य भिन्नस्यैव उत्पत्तिदर्शनात्।

**अन्यथा बुद्धिबोध्यादौ भिन्नत्वादिविकल्पतः ।**
**बोध्यत्वादिक्षतेर्न स्यात् स्वमतस्थापनाऽपि वः ॥ इति ॥**

(७) किञ्चित्कारादिविकल्पोऽप्येवं समाधानेन प्रशाम्यति । यथा—यत्र किञ्चित्कारेण हेतुत्वं दृष्टं, यथा काष्ठादेः ज्वालादिना तत्र तथा । नचानवस्था, हेतुसम्पत्तिपरंपरायाःदोषत्वाभावात् अतिरिक्तस्यात्रा-निरूपणात् । यत्र तु द्वारनिरपेक्षं हेतुत्वं, तत्रापि दर्शनबलात्किंचित्कारा-न्तर न जनयितव्यम्, यतोऽनवस्था स्यात् । नचातिप्रसङ्गः, नियत-पूर्वत्वग्राहिणा प्रत्यक्षेणैव तन्निवारणात् । अन्यथा तदपि ते प्रमाणं न स्यादिति विश्वापह्नवः ॥

(८) कार्यकारणयोः स्वभावत्वादिविकल्पोऽपि नियतप्रतिसम्ब-न्धिकस्वभावत एव तदुभयसिद्धेर्निरस्तः । दण्डादिकार्यत्वं घटादिकार-णत्वं वा नीलादिवदेव पुरुषभेदेऽप्यविपर्यस्तमेव ॥

(९) यस्तु द्विष्ठत्वादिविकल्पस्सोऽप्येवं समाधेयः—कार्ये कार्यत्वं कारणे कारणत्वञ्च वर्तते । तथाऽप्यन्योन्यनिरूप्यतया सम्बन्धव्यवहारा-दिसिद्धिरिति ॥

(१०) अथ च योऽयं प्रत्येकसमुदायशक्तिविकल्पः, अत्रोच्यते—समुदितानां कार्यकरत्वमेव हि प्रत्येकमपि हि शक्तिः । कथमत्र वियुक्तैः कार्यकरणं, कथं वा समेतेषु कृतकरता । अतश्शक्तस्यापि सहकार्याकाङ्-क्षायामतिप्रसङ्गश्च निरस्तः, यावत्कार्यसिद्धि नियतविषयत्वात्तस्या इति ॥

(११) येयं कारणस्य पूर्वत्वानुपपत्तिरुक्ता, तत्रेत्थमुपपत्तिः—पूर्वक्षणसत्त्वमेव हि कारणस्य कार्योपयोगि, न च तत्तदा नास्ति । कार्य-क्षणे तु कस्यचिदसत्त्वं न कारणत्वविरोधि । पूर्वं नष्टमित्यप्यसाधु, स्थिर-वादे तदयोगात् । पिण्डस्य तु न साक्षात्कारणत्वम् । न च पिण्डः तद्ध्वंसो

वाऽत्यन्ततुच्छः, स्वकाले सद्भावात्। कालान्तरासत्त्वेन तुच्छत्वे प्रत्यक्ष-विषयोऽपि तथा स्यात्। तथाचेयं माध्यमिकगतिः॥

(१२) यस्तु कादाचित्कत्वे स्वभावविकल्पः, स इत्थं प्रति-वक्तव्यः। तथाहि—न हि यतःकुतश्चिदनन्तरमनेन भवितव्यमिति कादाचित्कत्वम्, अनियमादृष्टे, अस्मादनन्तरमेवइ दमिति कालविशेष-व्यवस्थादृष्टेः। उक्तनियमानभ्युपगमे सर्वत्र सर्वदा सर्वतः कार्यं स्यात्। न हि धूमादिना यदाकदाचिद्भवितव्यमिति अस्य कादाचित्कत्वं निय-म्यते। तथासति गर्दभादेरनन्तरं तदुपलब्धिर्वा सामग्र्यनन्तरमनुप-लब्धिर्वा स्यात्॥

अथ कादाचित्कस्वभावस्य नित्यस्वभावदृष्टान्तोऽपि वैषम्य-निरूपणेन प्रत्याख्यायते। यथा—कार्यस्य निर्हेतुकत्वं सतोऽसतो वा? पूर्वत्र नित्यता, अन्यत्र तुच्छता वा स्यात्, निरवधित्वात् गत्यन्तरविरहात्॥

(१३) योऽयं परमाणूनामारम्भकत्वानुपपत्तिलक्षणः औलूक्योपा-लम्भः, स एषः "महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्" इति बादरायणा-चार्यैस्सूत्रितः। तस्यायं भावः—अनन्यपरशास्त्रसिद्धेष्वर्थेषु "श्रुतेस्तु शब्दमूलत्वात्" इति न्यायेन गत्यन्तराभावे काचिद्गमनिका स्वीकार्या। अनुमेयेषु तु यथादृष्टान्तं सिद्धिः, अन्यथाऽतिप्रसङ्गात्। ततश्चा-वयविवादिनामवयवाः स्वभागैर्मिथस्संयुज्यावयविनमारभन्त इति सिद्धा-न्तः। एतच्च द्व्यणुकावधि निर्विघातम्। द्व्यणुकारम्भे तु निरवयवा अणवः अवयवा इति कल्पितम्। तत्रायं प्रसङ्गावतारः। तथाचातिरिक्तावय-विवादिनामेष प्रहारः, नत्ववस्थालक्षणपरिणामवादिनाम्॥

स्वलक्षणसमुदायवादिनाऽपि नैरन्तर्यरूपोऽतिशयः कश्चिदिष्यते। अन्यथा दूरस्थवदेकताभ्रान्तिः पुञ्जबुद्धिर्वा न स्यात्। अवयविवादि-

नाऽपि विभूनामणूनाञ्च नित्यानामपि हेतुभेदैरवस्थान्तरापत्तिः स्वीकृतैव। सर्वद्रव्यस्वरूपानित्यत्वं तदवस्थाभेदञ्च वदतामपि तथा किं न स्यात् । संयुक्तावस्था हि परिणामः । नित्यानित्यविभागस्तु द्रव्यतदवस्थयोस्तथा-भावादेव। द्रव्यविवक्षायान्तु अवस्थाविशिष्टवेषेणानित्यत्वव्यवहार इति ॥

येयमधिकारम्भाऽनुपपत्तिः तत्रेदमवधेयम्—संहतैरेवाणुभिरवयव-वत् द्वित्वादिवच्च परिमाणान्तरसृष्टिरुपेयते, अतो न स्थूलधीविरोधः । एकस्याप्रत्यक्षत्वेऽपि समुदायवशात् दृश्यत्वोपपत्तेः । यथा एकस्य दवीयसः केशनीहारादेः अदर्शनेऽपि संहतानां दृश्यत्वम् । एकैकस्या-प्यासत्तौ दर्शनाद्योग्यत्वमस्तीति चेदणूनामपि त्रसरेणुरूपाणां सामग्रीसम्भवे तथैव स्यात्। एतेन "अवयविनमनभ्युपगच्छतामन्ततः पर्वतादयोऽपि परमाणव एव संहतास्स्युः । ते हि न प्रत्यक्षाः। अतस्सर्वाग्रहणमवय-व्यसिद्धेः, इत्यक्षपादोक्तमनतिक्रमणीयं स्यात्। स्थूलद्रव्याभावे चाणुसंहतौ स्थूलत्वाध्यासोऽपि न सिद्ध्येत्" इत्यपास्तम् । प्रत्येकदेशादधिकदेश-त्वधीर्वा स्थूलधीः । अवयव्यभावेऽपि माषादिराशिषु संहतिभेदैः देशतारतम्यं दृश्यते ॥

अतः परस्परानाक्रान्तदेशावष्टम्भेन संहन्यमानेषु त्रसरेणुषु सुग्र-हमेव देशाधिक्यम्, देशस्तु आलोकाकाशादिः कश्चिद्यथायोग्यमस्तु । अवयवधाराविश्रान्त्यभावे मेरुसर्षपयोरविशेषप्रसङ्गोपि जात्यादिप्रतिबन्द्या परिहार्यः । यथा सत्ताप्रभृतिघटत्वादिपर्यन्तानां सर्वासां जातीनां त्रैकालिकानन्तव्यक्तिवृत्तित्वमविशिष्टम्, तथापि न्यूनाधिकवृत्त्यैव परा-परभावः अवयविवादिभिः कल्पितः । तथा अनन्ताः पक्षा मासाश्च. तथापि मासापेक्षया द्वैगुण्यं पक्षाणामेष्टव्यम् तथा घटसमुदायाद्धट-पटसमुदायोऽधिकः । तथा हिमवद्दक्षिणदेशान्मेरुदक्षिणदेशोऽधिकः ।

तथा एकात्मदुःखजातादनन्तात्मदुःखजातमधिकम् । तस्माद्भागानन्त्येऽपि आधिक्यन्यूनते सुग्रहे सूपपादे च । अवयवसङ्ख्यानिबन्धनैवाधिकता न्यूनता चेति शङ्कितुराशयः । प्रतिसम्बन्धिसम्बन्धाधीनाऽपि सा दृष्टा इष्टा चेति समाधातुराशय इति विवेकः ॥

(१४–१६) बुद्धिसंयोगसंयुक्तप्रतिबन्दीनां सङ्कलय्येदं समाधानमवधेयम्—यदि वयं प्रदेशवर्तिगुणनिह्नवाय प्रवर्त्स्यामस्तदा प्रतिबन्द्याऽणुष्वपि तत्सम्भवः प्रदर्श्येत । किंत्ववयव्यारम्भकाणामवयवैरेव संयोग इति नियमस्य तार्किकैरेवान्येषु सर्वेष्वङ्गीकारात्कल्प्येष्वपि तत्प्रसङ्गो दुर्वार इति ब्रूमः । न चान्यत्रैवायं नियम इति स्थाप्यम्, तादृशानामणूनामदृष्टेः, अनन्यथासिद्धलिङ्गाभावाच्च । यदि विभज्यमानेष्वभावपरिशेषायोगात् महत्परिमाणतारतम्यविश्रान्तिवत् परिमाणतारतम्यत्वादणुपरिमाणतारतम्यविश्रान्तिरपि क्वचित्कल्प्येत, तदा दृष्टे त्रसरेणावेव विश्रमोऽस्तु, न मृग्यं ह्यन्यत् । तथाच सिद्धसाधनमनुमानम् । यदि त्रसरेणुरेव परमाणुः स्यादप्रत्यक्षस्तदा स्यादिति चेत्—हन्त कुत्रैषा व्याप्तिः ॥

(१७–१८) वृत्त्यनुपपत्तिरुत्पत्तिविनाशानुपपत्तिश्चावयव्यनङ्गीकारादेव परिहृता वेदितव्या । अपि च लाघवशालिनि संघातमात्रपक्षे राशिन्यायान्न कोऽपि दोषः । असमवायिकारणतयाऽभिमता दृष्टा संयुक्तावस्था परैरपि स्वीकृतेति नैव काचिदधिका च कल्पनेति संक्षेप. ॥

इदमत्रावधेयम्—परमाणूनामारम्भकत्वाद्यनुपपत्तयः यद्यपि वैशेषिकादीन्प्रति माध्यमिकादिभिरेवोद्भाविताः । अनूदिताश्चौपनिषदैः । तथापि कार्यकारणभावानुपपत्तिमध्यवस्यतां चार्वाकाणामप्येतास्सम्मता इत्यत्र संगृहीताः । ताश्चानुपपत्तयः केवलयौक्तिकैरप्रतिसमाधेया इत्यव-

स्थावाद्यभिमतानि समाधानानि सूचितानि विद्यावतां प्रमोदायेति नासङ्गत्याशङ्कावकाशः । अवस्थावादश्च शून्यवादिव्यतिरिक्तैस्सर्वैरप्युपगत इति स्पष्टमग्रे भविष्यति ॥

अत्रायं सङ्ग्रहः—

स्वक्रियादिविरोधश्च सूत्रप्रभृति दुस्तरः ।
गुरुशिष्यादिवाक्यानां परबोधार्थता यतः ॥
तेभ्यश्चैतन्यमित्यादि वदता गुरुणा स्वयम् ।
किण्वादिभ्यः प्रसिध्यन्ती मदशक्तिर्निदर्शिता ॥
प्रत्यक्षाल्लोकशब्दोक्तात् अधिकं च तदायतम् ।
अभाष्यत भवत्पूर्वैः प्रत्यक्षं चार्थसाधकम् ।
अर्थकामौ पुमर्थौ च दृष्टोपायैरुदीरितौ ।
प्रीयसे दूयसे च त्वं बिभेषि च ततस्ततः ॥
इष्टं प्राप्तुमनिष्टं च निवर्तयितुमुद्यतः ।
तत्सिद्धौ चरितार्थः त्वं लोकवत्किं न मन्यसे ॥
बुभुक्षुरन्नमादत्से श्वभक्ष्यादि जहासि च ।
परोक्त्या प्रतिपद्यार्थं प्रतिब्रूषे जिगीषया ॥
तत्त्वावधारणार्थं वा वादे किं न प्रवर्तसे ।
स्वयं वा मानतर्काभ्यां किं न किञ्चित्परीक्षसे ॥
तस्मात्सामान्यतो हेतुनिषेधो न हि लौकिकः ।
निमित्तादिविकल्पस्तु पण्डितैरपि हीष्यते ॥ इति ॥

### सांख्यसत्कार्यवादः.

सांख्यसौगतयोरेव साक्षात्पक्षप्रतिपक्षभाव इति पूर्वं निरूपितम् । तत्र सर्वानित्यतालक्षणासत्कार्यवादनिरासायैव सर्वनित्यतालक्षणसत्कार्यवादसमर्थनम् । तेन सत्कार्यवादेन प्रधानादिसिद्धिः । सच्छब्दार्थश्च देशकालावस्थालक्षणैरुपाधिभिरनवच्छिन्नः । तेन सर्वस्य नित्यत्वविभु-

त्वैकत्वसत्यत्वसिद्धिः । तया च सर्वशून्यवादनिराससिद्धिः । धर्मधर्मिणोरभेदः । तेन प्रागसत्त्वं ततः सत्त्वमिति तार्किकमतनिरासः । सत एवाविर्भावतिरोभावौ । ताभ्यां तु कारकचक्रव्यापारसार्थक्यं बुद्धिव्यपदेशार्थक्रियादिभेदोपपत्तिश्च । उत्पत्तिरभिव्यक्तिश्चेत्यनर्थान्तरम् । तेन चास्तिनास्तीत्यादिव्यवहारोपपत्तिः । सर्वस्य नित्यत्वादाविर्भावोऽपि नित्यः । तेनाविर्भावे च आविर्भावान्तरकल्पनाप्रसंगपरिहारः । यथा च तार्किकमते स्वकारणसमवायलक्षणस्य सत्तासमवायलक्षणस्य वा उत्पत्तिपदार्थस्य नित्यत्वेऽपि तदर्थानि कारणानि व्यापार्यन्त इत्यभ्युपगमः तथाऽस्माकमपि आविर्भावस्य नित्यत्वेऽपि तदर्थकारणापेक्षाभ्युपगम इति ॥

तस्मिंश्च कारककलापे अधिष्ठातृलक्षणस्य तत्त्वरूपाभिज्ञस्य कर्तुर्न प्रवेशः। तेन च वत्सविवृद्धिनिमित्तक्षीरादिप्रवृत्त्युपपत्तिः । सर्वज्ञस्येश्वरस्यापि नात्र प्रवेशः । अवाप्तसकलेप्सितस्य तस्य कारुण्यात्प्रवृत्तावन्योन्याश्रयः । कारुण्येन सृष्टिः सृष्ट्वा च दुःखिनो जन्तूनवलोक्य कारुण्यमिति । किं च करुणया प्रेरितः सुखिन एव जन्तून् सृजेदिति च ॥

प्रकृतेरचेतनायाः स्वाभाविक्यां तु प्रवृत्तौ न स्वार्थो नानुग्रहो न वा कारुण्यं प्रयोजकमिति नोक्तदोषप्रसंगावतारः । पारार्थ्यमात्रं तु प्रयोजकमुपपद्यत इति पुरुषविशेषसिद्धिरिति सिद्धान्तसंक्षेपः ॥

युक्तयस्तु पटादिकं कार्यं कारकव्यापारात्प्राक्सत्, क्रियमाणत्वात्, यन्नैवं तन्नैवं यथा गगनकुसुमम् ॥

तत्रैव प्रतिज्ञायां हेतुप्राप्तिर्द्वितीयो हेतुः । यद्येन प्राप्तं तत्तेन समकालं यथा घटसंयुक्तं भूतलम् ॥

तत्रैव—हेतुवृत्तित्वादिति तृतीयो हेतुः । तद्वृत्तित्वं च स्वशक्तःस्वलक्षणं स्वगर्भत्वमेव, संप्रतिपन्नो दृष्टान्तः ॥

तत्रैव–हेत्वात्मकत्वादिति तुरीयो हेतुः । तत्रासिद्धिवारका हेतवस्तु—न पटः तन्तुभ्यो भिद्यते तन्तु धर्मत्वात्, तन्तूपादेयत्वात् तन्त्वसंयुक्तत्वात् तन्तुसमानदेशत्वात् तन्त्वपेक्षया गुरुत्वकार्यान्तरायोगात् सम्प्रतिपन्नवदिति ॥

अयमत्र तर्कः–यदि प्रागसात् हेतुभिरप्राप्तं हेत्ववृत्ति तादात्म्यरहितं च तत उत्पद्यते सर्वस्मात्सर्वसंभवः स्यात्, न चासावस्तीति ॥

एवं विमतं पूर्वापरकालयोस्सत् प्रमेयत्वात् भावत्वात् सत्त्वात् आत्मवत् । विगीतः कालः एतद्घटादिमान् कालत्वात् एतत्कालवदित्यादयः सत्कार्यहेतवः मनीषिभिरवगन्तव्या इति युक्तिसंक्षेपः ॥

पातञ्जलसत्कार्यवादः.

अथ पातञ्जलानां परिणामवादलक्षणस्सत्कार्यवादः शून्यवादसत्यवादमाध्यस्थ्यरूपः—अथ कोयं परिणामः ? अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः, गुणिनित्यत्वेऽपि गुणानां विमर्दवैचित्र्यात् । न धर्मी त्र्यध्वा धर्मास्तु त्र्यध्वानः । अध्वशब्दः कालपरः । अतोऽन्यत्वेन प्रतिनिर्दिश्यन्ते । यथा एका रेखा शतस्थाने शतं, दशस्थाने दश, एकं चैकस्थाने । यथा चैकत्वेऽपि स्त्री माता चोच्यते दुहिता च स्वसा चेति । अनुभव एवहि धर्मिणो धर्मादीनां भेदाभेदौ व्यवस्थापयति ॥

तथाच —शान्तोदिताव्यपदेश्य।परपर्यायानतीतवर्तमानानागतलक्षणान् धर्मान् योऽनुपतति मृत्सुवर्णादिः, स धर्मी परिणामनित्यः । कूटस्थनित्यविलक्षणः । तस्यास्यधर्मिणः त्रिविधः परिणामः धर्मः लक्षणः

अवस्था चेति। तत्र धर्मिणः धर्मैः परिणामः धर्माणां लक्षणैः परिणामः लक्षणानां चावस्थाभिरिति विभागो ज्ञेयः। एवं धर्मलक्षणावस्थापरिणामशून्यं न क्षणमपि गुणवृत्तमवतिष्ठते। चलं हि गुणवृत्तं, प्रतिक्षणपरिणामिनस्सर्वे भावाः ऋते चितिशक्तेरिति निर्णयः ॥

मृद्धर्मी पिण्डाकाराद्धर्मात् धर्मान्तरमुपसम्पद्यमानः धर्मतः परिणमते घटाकार इति। घटाकारः लक्षणतः परिणमते—लक्षयति कार्यरूपं व्यावर्तयतीति लक्षणं कालत्रयम्। अनागतोऽध्वा वर्तमानोऽध्वाऽतीतोऽध्वेति कालत्रयमेवाध्वत्रयमुच्यते। तत्र धर्मस्य घटस्य अनागतत्त्वं प्रथमोऽध्वा। वर्तमानत्वं द्वितीयः। अतीतत्वं तृतीयः। अनागतत्त्वं हि धर्मं घटं वर्तमानातीतत्वाभ्यां व्यावर्तयति। एवं वर्तमानत्वादिकमपि लक्षणं मन्तव्यम्। एवं लक्षणपरिणामस्यावस्थापरिणामो यथा—आगामिकल्पभाव्यनागततमः। एतत्कल्पभाव्यनागततरः। श्वोभाव्यनागतः। सद्यो जातः वर्तमानतम इत्याद्यूह्यम्। तथा वर्तमानस्य नवत्वपुराणत्वादयोऽवस्थापरिणामाः। धर्मिणोऽपि धर्मान्तरमवस्था। धर्मस्यापि लक्षणान्तरमवस्था। इत्येक एव द्रव्यपरिणामः भेदेनोपदर्शितः। ते च परिणामाः धर्मिस्वरूपमनतिक्रान्ताः, अतो धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यते ॥

एवंविधः त्रिविधो भूतपरिणामः। मनसः निरोधसमाध्येकाग्रतालक्षणः त्रिविधः परिणामः। इन्द्रियस्यालोचितविकल्पितस्फुटत्वादिलक्षणः इत्यन्यत्र विस्तरः ॥

एवं सर्वं कारणं सर्वकार्यात्मकं भवति। दृश्यते हि दावदग्धवेत्रबीजात्कदळीकाण्डोद्भवः। न हि तत्रासत उद्भवस्सम्भवति। अभिव्यञ्जकानां कालदेशकर्मादीनां वैचित्र्यात्किञ्चिदेवोद्भवतीति लोके कार्य-

कारणव्यवस्था। योगसिद्धानां देशादिप्रतिबन्धाभावात् सर्वस्मात्सर्वमुद्भवतीति योगसिद्धानां सिद्धास्सिद्धान्तः ॥

सर्वेषां चैतेषां परिणामानां साङ्ख्यसिद्धान्तवत् पातञ्जलसिद्धान्तेऽपि पुरुषार्थ एव प्रवर्तकः। पुण्यापुण्यलक्षणमदृष्टं तु निमित्तमप्रयोजकमित्युक्तम्। अत्रायं विशेषः—निरीश्वरसाङ्ख्ये हि पुरुषार्थ एवानागतः प्रकृतीनां प्रवर्तकः। सेश्वराणां तदुद्देशेनेश्वरः प्रवर्तकः इत्युद्देश्यतया पुरुषार्थः प्रवर्तक इत्युच्यते। निमित्तं धर्मादिकं तु तासां न प्रवर्तकम्, चित्तपरिणामत्वेन तत्कार्यत्वात्। ततो निमित्तात् प्रतिबन्धकस्य बाधो भवति। धर्मेणाधर्मनिरासे प्रकृतयः स्वयमेव देवादिपरिणामे प्रवर्तन्ते। पापातिशयेन पुण्यप्रतिबन्धे सति तिर्यगादिपरिणामे। यथा नहुषस्य सर्पपरिणामे। यथा क्षेत्रिकः कृषीवलः जलस्योन्नतदेशादिवरणभेदनमात्रं करोति, ततो जलं स्वयमेव केदारान्तरे प्रवर्तते तद्वत्, तदुक्तम्—"निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" (४—३) इति ॥

एतेन ईश्वरधर्मपुरुषार्थानां त्रयाणामप्युपयोगः प्रदर्शित इत्ययं सेश्वरसाङ्ख्य सिद्धान्तः। निरूपितमिदं प्रागपि ॥

### तार्किकासत्कार्यवादः.

अथ तार्किकाणामसत्कार्यवादः। अयमपि विलक्षणो माध्यस्थ्यविशेषः, नित्यानित्यपदार्थोपगमात्। तथाहि—कापिलाः पुनः सत्कार्यवादमूलविभ्रमेण सर्वं सर्वत्रास्तीत्याकारेणान्वयसिद्धिं बुद्ध्यमानाः प्रधानसिद्धावध्यवसिताः। सत्कार्यवादश्च विचार्यमाणो न समस्त्येवेति कुतस्त्या हेतुसिद्धिः। तथाहि—चतुष्टयी गतिरिह स्यात् घटादिकार्यं मृत्पिण्डादिना कारणेन क्रियमाणमपि असद्वा क्रियते सदसद्वा अनुभयं वा सद्वेति ॥

१. (i) असतः करणे खरविषाणादेः करणं स्यात्, असत्त्वे हि घटस्य खरविषाणस्य च को विशेषः। घटस्यापि प्राक्प्रध्वंसाभावदशयोः असत्त्वाविशेषात् प्रागभावदशायामिव प्रध्वंसावस्थायामपि करणं भवेत् ॥

(ii) असत्त्वे कार्यस्य नियतोपादानग्रहणं न प्राप्नोति, तैलार्थी हि तिलसर्षपानुपादत्ते न सिकताः। असत्त्वे च तैलस्य को विशेषः सर्षपाणां सिकताभ्यः ॥

(iii) असति कार्ये निरालम्बनः कारकव्यापारो भवेत्, न ह्यसौ मृत्पिण्डादिविषयो भवितुमर्हति कार्यं चासत् ॥

(iv) अपि चाविद्यमाने कारणव्यतिरिक्ते च कार्ये जन्ये कारणस्य मृत्पिण्डादेः घटादिकार्यं जनितवतः किमिति न स्वरूपमुपलभ्यते। अथ स्वविनाशेन कारणं कार्यस्य जनकमिष्यते, तदियमभावाद्भावोत्पत्तिर्भवेत्। तस्यां च कुतोऽयं नियमः यदनन्तरवृत्त एव मृत्पिण्डाभावः कुम्भमभिनिर्वर्तयति न चिरातिक्रान्त इति। अतश्च परुन्मृत्पिण्डे नष्टे ऐषमः कुम्भोत्पादस्स्यात्। कारणाव्यतिरिक्तत्वे कारणं सत्कार्यमसदिति न वक्तुं युक्तम् ॥

२. सदसतोर्विप्रतिषेधेन एकत्र समावेशायोगात् द्वितीयः कल्पो नावकल्पते। रूपभेदादविरोध इति चेन्न, कार्यस्य विचार्यमाणस्यैकत्वात्। ततश्च तेनैव स्वेन कार्येण रूपेणासच्चेत् न सद्भवेत्। पररूपेण तु असत्त्वं समस्तभावानामस्त्येव ॥

३. अनुभयात्मकं तु वस्तु नास्त्येवेति न तृतीयोऽपि कल्पः प्रक्रमते ॥

४. पारिशेष्यात्सदेव कार्यमिति। किमिति च नोपलभ्यत इति। अनुमानेनापि यदुपलब्धं भवति तत्किमनुपलब्धं भवति। प्रत्यक्षेण तु तदानीमनुपलम्भः अनभिव्यक्तत्वात्। अभिव्यक्तिसम्पादन एव च कारकप्रयत्नसाफल्यम्। कार्यं तु सदेवेति। इति साङ्ख्य-सिद्धान्तानुवादः ॥

अत्रोच्यते—केन रूपेण तदानीं कार्यं सदिति मन्यते? यदि कारकव्यापाराभिनिर्वर्त्येन सलिलाहरणाद्यर्थक्रियासमर्थेन पृथुबुध्नोदराकार-तारूपेण चक्रमूर्ध्नि घटोऽस्ति, तदाऽभिव्यक्तेनापि रूपेण सत्त्वादत्यन्ताय कारकव्यापारवैफल्यम्। इत्थमपि च कारकव्यापृतौ तद्व्यापारानुपरम-प्रसङ्गः। किं हि तदोपलभ्य कारकाणि निवर्तेरन्। कार्यस्य-प्रागुपलब्धत्वात् ॥

अथ मृत्पिण्डरूपेण तदानीं घटोऽस्तीति कथ्यते? नैवम्, पिण्ड एवास्ति घटस्तु ततो निर्वर्तते। यदाऽसौ निर्वर्तते। तदैवास्ति न ततः प्रागिति ॥

अथ पूर्वं शक्त्यात्मना तस्यास्तित्वम्, इदानीमभिव्यक्त्यात्मना क्रियत इति। तदपि न, अभिव्यक्तिरपि स्वरूपाद्भिन्ना वा अभिन्ना वा सती असती वा इति विकल्प्यमाना न पूर्वोक्तं दोषमतिवर्तते ॥

का चेयमभिव्यक्तिः? किं कार्यात्मनाऽवस्थानम्, अथ संस्थान-विशेषः, उत प्रतीतिरिति। नाद्यः, तत्पूर्वं नाभूदधुना भूतमिति असत्कार्यम्। पूर्वमपि यदि तदासीत् कारकव्यापारवैफल्यम् ॥

संस्थानमपि अवयवसन्निवेशविशेषः असन्नेव। अवयवास्तु सन्तीति चेत्कस्यात्र विवादः। न खलु परमाणवोऽस्माभिर्नाङ्गीकृताः ॥

प्रतीतिस्तु घटस्य चक्षुरादिकारकसामग्र्यधीना न मृत्पिण्डदण्ड-चक्रादिकारकचक्रसाध्येति सा चक्रमूर्धनि घटस्य नास्त्येवेत्यसन् घटः ॥

अपि च कार्यस्य सत्त्वे किमित्युपलब्धिकारणेषु सत्सु सत्यामपि जिज्ञासायां नोपलभ्यते? अनभिव्यक्तत्वादिति चेत्केयमनभिव्यक्तिः? यद्युपलब्धेरभावः, तस्यैवानुपपत्तिश्चोदिता कथं तदेवोत्तरम् । अथार्थ-क्रियानिर्वर्तनक्षमताविरहः, तदानीमसन्नेव कार्यम् । अथ चक्षुरादि-वत्कुविन्दादिकारकव्यापारोऽप्युपलब्धिकारणम् , तदा स व्यापारः असंश्ले-दसदकरणम् । संश्लेद्भावोपलम्भप्रसङ्गः । तस्मादागन्तुकमन्तरेण प्राग-नुपलब्धस्य पश्चादुपलम्भो दुर्घटः ॥

शक्त्यात्मनाऽपि यदस्तित्वमस्योच्यते तत्रापि चिन्त्यं केयं शक्ति-र्नामेति । यदि घटस्वरूपाद्भिन्ना सा तर्हि पररूपेण घटोऽस्तीति न स्वरूपेण घटास्तित्वमुक्तं भवेत् , तच्च प्रत्यक्षविरुद्धम् । यद्यभिन्ना सा शक्त्यात्मनाऽस्तीति नाधिकमुक्तं स्यादिति ॥

(१) असत्करणपक्षे यच्चोदितं शशविषाणाद्यपि क्रियेतेति, तन्न—वचनव्यक्त्यपरिज्ञानात् । यदसत्तत्क्रियते इति नेयं वचनव्यक्तिः, अपि तु यत्क्रियते तदसदिति ॥

(२) तैलार्थी सिकताः कश्चित् आददानो न दृश्यते ।
अदृष्ट्वा चाद्य नान्योऽपि तदर्थी तासु धावति ॥
अन्वयव्यतिरेकौ च गृह्येते व्यवहारतः ।
अनादिश्चैष संसार इति कस्यानुयोज्यता ॥
अथवा शक्तिनियमान्नियमश्चोपपत्स्यते ।
शक्तिस्त्वनित्या सूक्ष्मा च नेह का चिदुपेयते ॥
तदभ्युपगमे नित्यं कार्योत्पादप्रसङ्गतः ।
स्वरूपसहकार्यादिसन्निधानं हि सेष्यते ॥

सैवेयं शक्तिः अवस्थिता आगन्तुका चेति द्विविधा। सत्त्वाद्यवच्छिन्नं स्वरूपमवस्थिता शक्तिः। दण्डचक्रादिसंयोगरूपा त्वागन्तुका। शक्तिद्वयकृता च कार्यनिष्पत्तिरसकृत् दृष्टेति तदर्थिभिस्तदुपादाननियमः॥

न च शक्तिरेव कार्यमिति वक्तव्यम्, कार्यस्वरूपस्य ततः पृथग्भूतस्य प्रतीत्या व्यवस्थापनात्। शक्तेश्च कार्यत्वे कार्यादेव कार्योत्पादोऽङ्गीकृतः स्यात्। न च घटाद्घट उत्पत्तुमर्हति। शक्तेश्च कार्यमुत्पद्यत इत्यभ्युपगतम्। अतोऽन्यत्कार्यमन्या च शक्तिः॥

ननु वाच्यवाचकयोः व्यङ्ग्यव्यञ्जकयोश्च दीपघटयोरुभयाश्रिता शक्तिर्दृष्टेति कार्यकारणयोरपि सा कथमनुभयाधिष्ठाना भवितुमर्हति? असति च द्वितीये कार्याख्ये तदाश्रये कथमियमुभयाश्रिता स्यादिति॥

नैतदेवं—यथादर्शनं शक्तेरभ्युपगमात्। नचैकत्र दृष्टरूपमन्यत्रापि मृग्यते। वाच्यवाचकयोः व्यङ्ग्यव्यञ्जकयोश्च द्वयोः पृथक्त्वेन दर्शनात् उभयाश्रिता शक्तिरङ्गीकृतेति। इह तु द्वयस्यानुपलम्भात् केवलकारणवृत्तिरेव शक्तिः। तत्कृतश्चोपादाननियमविचारो युक्तः॥

**उत्पत्तौ किल सिद्धायामुपादानं विचार्यते।**
**सतस्तु सैव नास्तीति किमुपादानचिन्तया॥**

सत्कार्यवादे च सुतरामुपादाननियमो दुर्घटः। सर्वस्य सर्वत्र भावात्। सिकतातिलसरस्तीरकेदारव्युप्तबीजजनिताङ्कुरादिकार्यक्रमोत्पाद्यमानतिलस्वरूपपर्यालोचनया तिलेष्विव सिकतास्वपि तैलसम्भवात् सर्वस्य च सर्वत्रास्तित्वे नियतपदार्थप्रतिष्ठितहानोपादानादिव्यवहारः सकल एव विप्लवेत॥

**अन्नादोऽमेध्यभक्षस्यात् फलं हेतौ यदि स्थितम्।**
**पाटर्घेणैव कार्पासबीजं क्रीत्वा निवस्यताम्॥ (बोधि ३६९)**

(३) यत्तु निरालम्बना कारकप्रवृत्तिरिति चोदितम्, परिहृतं तत् गौतमेन सूत्रकारेण—"बुद्धिसिद्धं तु तदसत्" (४–१–५०) इति। वृद्धव्यवहारतः कार्यकारणभावमवगम्य अमुष्मात्कारणादिदमीदृशं कार्यमुत्पद्यत इति बुद्धौ निर्धार्य कारकाणि कर्ता नियुङ्क्ते इति न निर्विषयः कारकव्यापारः ॥

(४) यत्पुनरभाणि कारणानुपमर्देन कार्यानुत्पादादभावाद्भावोत्पत्तिर्भवेत्। तत्र चानन्तरवृत्त्युत्पत्तिनियमो न स्यादिति, तदप्ययुक्तम्–मूर्तानां समानदेशत्वविरोधात्कार्यकारणयोरेकत्वं नेष्यते, नैतावता भावोत्पत्तिरभावाद्भवितुमर्हति। अतएवानन्तर्यनियमोऽप्युपपन्नः। नच कार्यकारणयोरभेदात्सत्कार्यमिति वक्तव्यम्, तयोः प्रत्यक्षसिद्धाभिन्नरूपत्वात् ॥

प्रागुत्पत्तेः पटस्य धर्मिणोऽभावात् कथमसत्त्वं तस्य धर्म इति चेत्—यादृशो यक्षस्तादृशो बलिरिति न्यायादविरोधः। यदसत्पूर्वमासीत् तस्य कथं सत्त्वमिति चेत् कारणसामर्थ्यादस्ति कोऽपि महिमा तुर्यादीनां, यदेतेषु सम्भूय व्याप्रियमाणेषु असन् एव घटस्सन् भवति ॥

असतोऽसम्बद्धस्य जन्यत्वे अतिप्रसक्तिरिति चेन्नैतत्—तन्तुजातीयस्य पटजातीय एव सामर्थ्यात्। कुत एतत्? त्वत्पक्षेऽपि कुत एतत्तन्तुष्वेव पटात्मता न सर्वत्रेति। वस्तुस्वाभाव्यादिति चेत् स नोऽत्रापि भविष्यति ॥

कार्यकारणयोरव्यतिरेकस्तु स्वरूपशक्तिसंस्थानभेदस्य प्रत्यक्ष सिद्धत्वात् बाधितः। विश्वस्य प्रधानात्मत्वेऽतीन्द्रियत्वप्रसङ्गश्च। तद्देशत्वं त्वस्माकं तदाश्रितत्वनिबन्धनमित्यलमधिकेनेति ॥

वैदिकाभिमतः मध्यस्थवादः

तत्र आर्हतकौमारिलप्रभृतिभिः भेदाभेदयोरविरोधमुपगम्य सत्कार्यवादमसत्कार्यवादञ्च समुच्चित्य माध्यस्थ्यमुपगतम् । इतरैस्तु प्रायेण सर्वैरपि प्रागुक्तं पातञ्जलीयं परिणामवादमवलम्ब्य धर्मधर्मिणोर्भेदञ्चाभ्युपगम्य धर्ममात्रस्यागन्तुकत्वस्वीकारेण विरोधः प्रशमितः । तथाहि— प्राक्सदेव द्रव्यं अवस्थान्तरविशिष्टवेषेण कार्यं, तथैव लोकवेदव्यवहार स्थितिः । ततश्च पूर्वं नित्यं सत् द्रव्यं साङ्ख्यमतमुज्झतामपि कार्यं स्यात्, यात्वागन्तुक्यवस्था सा न प्राक्सतीति वैशेषिकमतमुज्भतामपि असत् कार्यं स्यात् ॥

**विभागादविभागाच्च भूतभौतिकभेदधीः ।**
**सत्येव भवति द्रव्ये सिद्धसाध्यदशान्वयात् ॥**
**एकत्वं च वहुत्वं च मृत्पिण्डकरकादिवत् ।**
**समष्टिव्यष्टिनीत्यैव त्रिगुणे वदति श्रुतिः ॥**
**ईदृक्सत्कार्यवादश्च वैदिकैः परिगृह्यते ।**
**द्रव्यस्य पूर्वसिद्धस्य साध्यावस्थाविशेषतः ॥ इति ॥**

एतदुक्तं भवति—न तावत्कार्यमिति किमपि न दृष्टं, सर्वलोकवेदविरोधात् । अभिव्यक्तिसाधनस्यापि निराश्रयत्वप्रसङ्गात् । न च दृष्टमपि न सत्यं, माध्यमिकादिमतानामनङ्गीकारात् । न च सत्यमपि न कारणाद्व्यतिरेकेण गृह्यते, अवस्थान्तरविशिष्टवेषेण व्यतिरेकग्रहणात् । प्रकृतिविकृतीत्यादिविभागभङ्गप्रसङ्गाच्च । अतः कारणाद्भिन्नत्वेन दृष्टं कार्यं तेनाकारेण पूर्वं नासीदिति त्वयैवाकामेनापि स्वीकर्तव्यम् । न हि घटाकारेण निष्पन्नस्य पुनरपि दण्डादिव्यापारनिष्पाद्यत्वमस्ति ॥

किं च—कार्यव्यङ्ग्यशब्दौ लोके व्यवस्थितविषयौ दृष्टौ । कारकव्यञ्जकभेदश्च । कारकं समग्रमेकमुत्पादयति । व्यञ्जकं तु सहकारि-

सम्पन्नं समानेन्द्रियग्राह्याणि समानदेशानि तादृशानि सर्वाण्यपि व्यनक्ति। तदत्र घटादिव्यक्तिसामग्र्यैव तद्वन्मृत्पिण्डगतानां करकादीनामपि व्यक्तिः स्यात्। व्यञ्जकत्वे सिद्धे हि अवान्तरव्यङ्ग्यभेदप्रतिनियतव्यञ्जकभेद-व्यवस्थाक्लृप्तिः। न चेह तथा। आगन्तुकाभावे च पुरुषवत्प्रकृतिरपि निर्व्यापारैव स्यात्। तथा च गतं सृष्टिप्रलयादिवादैः। सिद्धान्त-सृष्ट्यादिभिश्च ॥

ननु सतोऽभिव्यक्तौ घटतैलतण्डुलादिनिदर्शनमस्ति। असत उत्पत्तौ न किञ्चिदिति चेत्। किमतः? न हि निदर्शनमेव प्रमाणम्, हेतुवैफल्यप्रसङ्गात्। न च निदर्शनाभावो बाधकः, सर्वत्र प्रतिनियत-स्वभावलोपप्रसङ्गात् ॥

अपि चाशेषनित्यत्वे पौर्वापर्यं न कुत्रचित्।
व्यक्तिभोगापवर्गादिसाध्यतोक्तिरतो मुधा ॥
स्वप्रवृत्त्यादिनैष्फल्यं शास्त्रादेरप्यनुत्थितिः।
साङ्ख्यचार्वाकयोः स्यातां साध्यसाधनबाधनात् ॥
अयोग्यत्वं तिरोधानं योग्यत्वं व्यक्तिरित्यपि।
तन्नित्यानित्यताभ्यां ते विवक्षितविघातकृत् ॥ इति ॥

ननु जनिरपि व्यक्तिरेव "जनी प्रादुर्भावे" इति धात्वर्थ पाठात्। न—जनिव्यक्तिशब्दयोरर्थभेदेनैव निरूढेः। प्रादुर्भाव-पाठोऽप्युत्पत्तिपरः। निर्वर्त्यप्राप्ययोर्भेदासिद्धेश्च। जन्यं हि निर्वर्त्यं व्यङ्ग्यं तु प्राप्यम्। अभूततद्भावादिषु च प्रागसतस्सत्त्वमनुस्मृतमेव। इति ॥

अत्र कृत्युत्पत्तिव्यक्तिशब्देषु कृत्युत्पत्तिशब्दयोः समानार्थकत्व-मुपगम्य तदर्थस्यैव कारकव्यापाररूपतां चोपगम्य तस्य च व्यापारस्यान्य-

निष्ठत्वेऽपि कार्यार्थत्वेन कार्यधर्मत्वमुपचारेण स्वीकृत्य कारकव्यापार-वैयर्थ्यानवस्थादयो दोषाः परिहृताः । साङ्ख्यास्तु त्रयाणामपि समानार्थकत्वमुपयन्तीति निर्णयः ॥

अयमवस्थावादस्सर्ववेदान्तिसम्मतः, यतः शाङ्करेऽप्युपनिषद्भाष्ये (बृ. उ. ३-२-१) घटादेः कम्बुग्रीवादिलक्षणसंस्थानरूपेण जलाहरणादिलक्षणार्थक्रियादिरूपेण च प्रागसत्त्वमिष्टं, नतु सर्वात्मनैवासत्त्वमित्यवगम्यते । तथाहि—"अथ प्रागुत्पत्तेः घटः असन्नित्युच्येत, घटार्थं प्रवृत्तेषु कुलालादिषु तत्र यथा व्यापाररूपेण वर्तमानास्तावत् कुलालादयस्तथा घटो न वर्तत इत्यसच्छब्दस्यार्थश्चेत् न विरुध्यते । कस्मात्? स्वेन हि भविष्यद्रूपेण घटोवर्तते । न हि पिण्डस्य वर्तमानता कपालस्य वा घटस्य भवति । न च तयोर्भविष्यत्ता घटस्य । तस्मात्कुलालादिव्यापारवर्तमानतायां प्रागुत्पत्तेः घटोऽसन्निति न विरुध्यते" इति भाषितमस्ति ॥

तस्मादवस्थाविशिष्टवेषेणासत्कार्यवादस्सर्वसम्मतः । द्रव्यस्वरूपेण तु सत्कार्यवादः । साङ्ख्यमते तु धर्मधर्मिणोरैक्याभ्युपगमात् एवं विभागस्य नावकाश इत्यभिव्यक्त्याश्रयणमिति संक्षेपः ॥

दुर्निरूपतालक्षणसत्कार्यवादः

अथ परमार्थदृष्ट्या तादात्म्यपदवाच्यः अनन्यत्वलक्षणः भेदप्रतिषेधरूपः सत्कार्यवादः ब्रह्माद्वैतवादिसम्मतः तार्किकसिद्धान्तनिरासायैव प्रवृत्तः निरूप्यते । श्रीशाङ्करे सूत्रभाष्ये (२-१-१८) "युक्तिस्तावद्वर्ण्यते—दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते । न हि दध्यर्थिभिः मृत्तिकोपादीयते न घटाद्यर्थिभिः क्षीरम् । तदसत्कार्यवादे नोपपद्यते ।

अविशिष्टे हि प्रागुत्पत्तेः सर्वत्र सर्वस्यासत्त्वे कस्मात् क्षीरादेव दध्युत्पद्यते न मृत्तिकायाः । मृत्तिकाया एव च घट उत्पद्यते न क्षीरात् ॥

अथाविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयः न मृत्तिकायाम्, मृत्तिकायामेव घटस्य कश्चिदतिशयः न क्षीर इत्युच्येत, तर्ह्यतिशयवत्त्वात् प्रागवस्थायाः असत्कार्यवादहानिः सत्कार्यवादसिद्धिश्च । शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्याऽप्यसती वा कार्यं नियच्छेत् । असत्त्वाविशेषात् अन्यत्वाविशेषाच्च । तस्मात्कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्यम् ॥

अपि च कार्यकारणयोः द्रव्यगुणादीनां च अश्वमहिषवद्भेदबुद्ध्यभावात् तादात्म्यमभ्युपगन्तव्यम् । तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पनानर्थक्यम् ॥

कथं च कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं वर्तेत? किं समस्तेष्ववयवेषु वर्तेतोत प्रत्यवयवम् । यदि तावत्समस्तेषु वर्तेत ततोऽवयव्यनुपलब्धिः प्रसज्येत, समस्तावयवसन्निकर्षस्याशक्यत्वात् । न हि बहुत्वं समस्ताश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते । अथावयवशः समस्तेषु वर्तेत, तदाऽऽरम्भकावयवव्यतिरेकेणावयविनोऽवयवाः कल्प्येरन्, यैरवयवैरारम्भकेषु अवयवेषु अवयवशः अवयवी वर्तेत । कोशावयवव्यतिरिक्तैर्ह्यवयवैः असिः कोशं व्याप्नोति । अनवस्था चैवं प्रसज्येत । तेषु तेष्ववयवेषु वर्तयितुं अन्येषामन्येषामवयवानां कल्पनीयत्वात् ॥

अथ प्रत्यवयवं वर्तेत, तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात् । न हि देवदत्तः स्रुघ्ने सन्निधीयमानः तदहरेव पाटलिपुत्रे सन्निधीयते ।

युगपदनेकत्र वृत्तौ अनेकत्वप्रसङ्गात् । देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः ॥

गोत्वादिवत् प्रत्येकं परिसमाप्तेरदोष इति चेत् न, तथा प्रतीतेरभावात् । यदि गोत्वादिवत्प्रत्येकपरिसमाप्तोऽवयवी स्यात्, यथा गोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यते एवमवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत । न चैवं नियतं गृह्यते । प्रत्येकपरिसमाप्तौ चावयविनः कार्येणाधिकारात् तस्य चैकत्वात् शृङ्गेणापि स्तनकार्यं कुर्यात्, उरसा च पृष्ठकार्यम् । न चैवं दृश्यते ॥

प्रागुत्पत्तेः कार्यस्यासत्त्वे उत्पत्तिरकर्तृका निरात्मिका च स्यात् । उत्पत्तिर्नाम क्रिया । सा सकर्तृकैव भवितुमर्हति गत्यादिवत् । क्रिया च नाम स्यादकर्तृकेति विप्रतिषिद्ध्येत । घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका । किं तर्हि? अन्यकर्तृकेति कल्प्या स्यात् । तथा कपालादीनामप्युत्पत्तिरुच्यमानाऽन्यकर्तृकैव कल्प्येत । तथा च सति घट उत्पद्यत इत्युक्ते कुलालादीनि कारणान्युत्पद्यन्त इत्युक्तं स्यात् । न च लोके घटोत्पत्तिरित्युक्ते कुलालादीनामप्युत्पद्यमानता प्रतीयते, उत्पन्नताप्रतीतेः ॥

अथ स्वकारणसत्तासम्बन्ध एवोत्पत्तिरात्मलाभश्च कार्यस्येति चेत् कथमलब्धात्मकं सत् सम्बध्येतेति वक्तव्यम् । सतोर्हि द्वयोस्सम्बन्धस्सम्भवति । न सदसतोरसतोर्वा ॥

अभावस्य च निरुपाख्यत्वात् प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नम् । सतां हि लोके गृहक्षेत्रादीनां मर्यादा दृष्टा नाभावस्य । न हि वन्ध्या पुत्रो राजा बभूव प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते ।

यदि च वन्ध्यापुत्रः कारकव्यापारादूर्ध्वमभविष्यत् तत इदमपि उपापत्स्यत कार्याभावोऽपि कारकव्यापारादूर्ध्वं भविष्यतीति । वयं तु पश्यामः वन्ध्यापुत्रस्य कार्याभावस्य च अभावत्वाविशेषात्, यथा वन्ध्यापुत्रः कारकव्यापारादूर्ध्वं न भविष्यति, एवं कार्याभावोऽपि कारकव्यापारादूर्ध्वं न भविष्यतीति ॥

[अत्र सौगतसम्मततुच्छलक्षणाभावात् विलक्षणस्य वस्तुलक्षणस्याभावस्य तार्किकैरभ्युपगमात् युक्तिरेषा चिन्त्या।]

नन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत । यथैव हि प्राक्सिद्धत्वात्कारणस्य स्वरूपसिद्धये न कश्चिद्व्याप्रियते एवं प्राक्सिद्धत्वादनन्यत्वाच्च कार्यस्वरूपसिद्धये न कश्चिदपि व्याप्रियेत, व्याप्रियते च । अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागुत्पत्तेरभावः कार्यस्येति चेन्नैष दोषः—यतः कार्याकारेण कारणं व्यवस्थापयतः कारकव्यापारस्यार्थवत्त्वमुपपद्यते । कार्याकारोऽपि कारणस्यात्मभूत एव । अनात्मभूतस्यानारभ्यत्वादित्यभाणि ॥

नच विशेषदर्शनमात्रेण वस्त्वन्यत्वं भवति । न हि देवदत्तः सङ्कुचितहस्तपादः प्रसारितहस्तपादश्च विशेषेण दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति । स एवेति प्रत्यभिज्ञानात् । तथा प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति । मम पिता मम माता मम भ्राता मम पुत्र इति प्रत्यभिज्ञानात् ॥

जन्मोच्छेदानन्तरितत्वात् तत्र युक्तं नान्यत्रेति चेन्न, क्षीरादीनामपि दध्याद्याकारसंस्थानस्य प्रत्यक्षत्वात् । अदृश्यमानानामपि वटधानादीनां समानजातीयावयवान्तरोपचितानां अङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा । तेषामेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा ।

तत्रेदृग्जन्मोच्छेदान्तरितत्वेन चेदसतस्सत्त्वापत्तिः सतश्चासत्त्वापत्तिः तथासति गर्भवासिनः उत्तानशायिनश्च भेदप्रसङ्गः । तथा बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः । पित्रादिव्यवहारलोपप्रसङ्गश्च ॥

यस्य तु पुनः प्रागुत्पत्तेः असत्कार्यं तस्य निर्विषयः कारकव्यापारस्स्यात् । अभावस्य विषयत्वानुपपत्तेः । आकाशहननप्रयोजनखड्गाद्यनेकायुधप्रयुक्तिवत् । समवायिकारणविषयः कारकव्यापारस्स्यादिति चेत् न—अन्यविषयेण कारकव्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् । समवायिकारणस्यैवात्माऽतिशयः कार्यमिति चेत्, तर्हि सत्कार्यतापत्तिः ॥

तस्मात् क्षीरादीन्येव द्रव्याणि दध्यादिभावेनावतिष्ठमानानि कार्याख्यां भजन्ते इति न कारणादन्यत्कार्यं वर्षशतेनापि शक्यं कल्पयितुम् । तथा च मूलकारणमेवान्त्यात्कार्यात् तेन तेन कार्याकारेण नटवत् सर्वव्यवहारास्पदत्वं प्रतिपद्यते । एवं युक्तेः कार्यस्य प्रागुत्पत्तेस्सत्त्वमनन्यत्वं च कारणादवगम्यते । तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेस्सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात् सत्त्वानन्यत्वे प्रसिद्ध्यतः” इति भाषितमस्ति ॥

एतेन प्रपञ्चो न तुच्छः नापि स्वतन्त्रः नैव ब्रह्मणा एकीभूतः । किं तु सन्नेवानन्य इति तुरीयः पक्षः स्वीकृत इति निर्णयो भवति । अधिकं प्रागेव निरूपितम् ॥

दुर्निरूपतारूपः कार्यकारणभावापलापः

अथ सदसदनिर्वचनीयकार्यकारणवादसारांशः । कार्यकारणसदसत्त्वविचारो विफलः दुरन्तः दुर्निरूपश्चेत्येषां सिद्धान्तः । तथा हि—सच्चेत्किञ्चिन्न बाध्येत, सर्वथा सर्वत्र सर्वदा च स्यात् । नान्यथा, स्वभावपरित्यागायोगात् । असच्चेन्न ख्यायेत, न च कदाचित्कुत्रचित्कथं-

चिदपि स्यात्, तत एव । नापि क्वचित् सत्त्वासत्त्वसमुच्छयः उक्तदूषणसमुच्चयात् व्याघाताच्च । उभयशून्यत्वं च तत्समुच्चयसमानदूषणम् । अतस्सदादिरूपकोटिचतुष्टयविनिर्मुक्तमेव निरधिष्ठानमेव संवृतिशक्त्या भाति । इदमेव तत्त्वम् । अयमेव च सर्वज्ञोपदेशसारः इति मध्यमागमनिष्ठानां निष्ठा । यथाऽऽहुः—

न सतः कारणापेक्षा व्योमादेरिव युज्यते ।
कार्यस्यासंभवी हेतुः खपुष्पादेरिवासतः ॥
न सन्नासन्न सदसन्न चाप्यनुभयात्मकम् ।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः ॥
बुद्ध्या विवेच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः ॥ इति ॥

अपिच कार्यकारणभावाख्यस्संबन्धो दुर्निरूपस्साङ्केतिको न वास्तव इति संबन्धतत्त्वापलापिनां सिद्धान्तकारिकाः प्रमेयकमलमार्ताण्डोदाहृतास्संगृह्यन्ते – (४ प. १४९ पु.)

पारतन्त्र्यं हि संबन्धः सिद्धे का परतन्त्रता ।
तस्मात्सर्वस्य भावस्य संबन्धो नास्ति तत्त्वतः ॥
रूपश्लेषो हि संबन्धः द्वित्वे स च कथं भवेत् ।
तस्मात्प्रकृतिभिन्नानां संबन्धो नास्ति तत्त्वतः ॥
परापेक्षा हि सम्बन्धः सोऽसन् कथमपेक्षते ।
संश्च सर्वनिराशंसो भावः कथमपेक्षते ॥
द्वयोरेकाभिसंबन्धात्संबन्धो यदि तद्द्वयोः ।
कस्संबन्धोऽनवस्था च न संबन्धमतिस्ततः ॥
तौ च भावौ तदन्यश्च सर्वे ते स्वात्मनि स्थिताः ।
इत्यमिश्रास्स्वयं भावाः तान्मिश्रयति कल्पना ॥
तामेव चानुरुन्धानैः क्रियाकारकवाचिनः ।
भावभेदप्रतीत्यर्थं संयोज्यन्तेऽभिधायकाः ॥

कार्यकारणभावोऽपि तयोरसहभावतः ।
प्रसिद्ध्यति कथं द्विष्ठोऽद्विष्ठे सम्बन्धता कथम् ॥

क्रमेण भाव एकत्र वर्तमानोऽन्यनिस्पृहः ।
तदभावेऽपि तद्भावात्सबन्धो नैकवृत्तिमान् ॥

यद्यपेक्ष्य तयोरेकं अन्यत्रासौ प्रवर्तते ।
उपकारी ह्यपेक्ष्यस्स्यात् कथं चोपकरोत्यसन् ॥

यद्येकार्थाभिसंबन्धात्कार्यकारणता तयोः ।
प्राप्ता द्वित्वादिसंबन्धात् सव्येतरविषाणयोः ॥

द्विष्ठो हि कश्चित्संबन्धः नातोऽन्यत्तस्य लक्षणम् ।
येनचैतस्य संख्यादेः व्यवस्थाप्येत भिन्नता ॥

भावाभावोपाधियोगः कार्यकारणता यदि ।
योगोपाधी न तावेव कार्यकारणताऽत्र किम् ॥

पश्यन्नेकमदृष्टस्य दर्शने तददर्शने ।
अपश्यन् कार्यमन्वेति विनाप्याख्यातृभिर्जनैः ॥

दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसंभवात् ।
कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥

तद्भावभावतः कार्यगतिर्याऽप्यनुवर्ण्यते ।
संकेतविषयाख्या सा सास्नादेः गोगतिर्यथा ॥

भावे भाविनि तद्भावः भाव एव च भाविता ।
प्रसिद्धे हेतुफलते प्रत्यक्षानुपलंभतः ॥

एतावन्मात्रतत्त्वार्थाः कार्यकारणगोचराः ।
विकल्पा दर्शयन्त्यर्थान्मिथ्यार्थाः घटितानिव ॥

भिन्ने का घटनाऽभिन्ने कार्यकारणताऽपि का ।
भावे ह्यन्यस्य विश्लिष्टौ श्लिष्टौ स्यातां कथं च तौ ॥

संयोगिसमवाय्यादि सर्वमेतेन चिन्तितम् ।
अन्योन्यानुपकाराच्च न सम्बन्धी च तादृशः ॥

जनने चापि कार्यस्य केन चित्समवायिना ।
समवायी तदा नासौ न ततोऽतिप्रसंगतः ॥
तयोरनुपकारेऽपि समवाये परत्र वा ।
संबन्धो यदि विश्वं स्यात्समवायि परस्परम् ॥
संयोगजननेऽपीष्टौ ततस्संयोगिनौ न तौ ।
कर्मादियोगितापत्तेः स्थितिश्च प्रतिवर्णिता ॥ इत्यादि ॥

एतेषां श्लोकानामप्यर्थः विस्तरेणात्रैव प्रमेयकमलमार्ताण्डे प्रकाशितः विस्तरापेक्षिभिः द्रष्टव्यः । विश्वापह्नववादिनामयं सिद्धान्त इति सर्वं भद्रम् ॥

एवं सकलसिद्धान्तमूलभूतो महत्तरः ।
कार्यकारणभावांशविचारः समगृह्यत ॥

इति दर्शनोदये कार्यकारणभावनिरूपणं नाम सप्तमः परिच्छेदः.

# श्रीभाष्य भूषण प्रारम्भः

## 1. उपोद्घात प्रकरणम्.

---

१. मङ्गलवादः.

जगज्जन्मस्थेमप्रलयरचनाकैतववशात्
दयाधीनस्तापत्रितयपरितप्तान् जनिमतः ।
समुद्धर्तुं श्रेयः प्रदिशतुमनन्तं व्यवसितः
श्रियः कान्तः पायादखिलदुरपायाज्जगदिदम् ॥

श्रीशैलपूर्णभगिनीकान्तिमतीगर्भसिन्धुचन्द्रमसम् ।
हारीतकेशवसुतं कलये रामानुजार्ययतिराजम् ॥

वैश्वामित्रं पुण्डरीकाक्षपौत्रं
तोतारम्बाऽनन्तसूरीन्द्रपुत्रम् ।
आत्रेयश्रीवादिहंसाम्बुदार्य
च्छात्रं श्रीमद्वेङ्कटेशं श्रयेऽहम् ॥

यः श्रीवत्सान्ववायद्युमणिरगणि यं श्रीसदार्योऽन्वगृह्णात्
विद्याभिर्येन पुत्री सकलजनसुहृद्राममिश्रो बभूव ।
यस्मै श्रीरङ्गधामा निजपदमदिशत् स्यामहं चापि यस्मात्
यस्य ख्याता विरक्तिः मम भवतु मनो राघवार्ये सदाऽस्मिन् ॥

श्रीरङ्गनाथकलिवैरिकृपाकटाक्ष-
संपूर्णपात्रमखिलागमलब्धवर्णम् ।
वाधूलवंशतिलकं विबुधेन्द्ररत्नं
कस्तूरिरङ्गगुरुमन्वहमाश्रयामः ॥

**लक्ष्मीपुरं श्रीनिवास विपश्चिच्चक्रवर्तिना ।**
**श्रीभाष्यभूषणं नाम टीका तन्वी विलिख्यते ॥**

२. मङ्गलपद्यव्याख्या.

अथ खलु भगवान् श्रीभाष्यकारः श्रीमान् रामानुजाचार्यः प्रारीप्सित प्रबन्धस्याविघ्नेन परिपूर्त्यर्थं प्रचयार्थं च शिष्टाचारादि प्रमाण सिद्धमिष्टदेवताभक्त्याशीरूपं मङ्गलं स्वानुष्ठितमपि शिष्याणां शिक्षार्थं तदनुकीर्तनेन महिष्ठमङ्गळावाप्त्यर्थं च आदौ निबध्नाति—**अखिलेति ॥**

**प्रारिप्सितं निमित्तं स्यादविघ्नेन समापनम् ।**
**प्रचयश्च फलं तस्मान्मङ्गळाचार इष्यते ॥**
**विषयश्च फलं चैव संबन्धश्चाधिकार्यपि ।**
**ज्ञेयं श्लोके क्रमात्पादैरनुबन्धिचतुष्टयम् ॥**

प्रथमे पादे जगत्कारणरूपविषयप्रदर्शनम्, द्वितीये रक्षालक्षण-प्रयोजनसूचनम्, तृतीये श्रीभाष्यरूपप्रबन्धेनायोगान्ययोगव्यवच्छेदा-त्मकसंबन्धसूचनम्, विशिष्टाधिकारिव्यञ्जनं तुरीय इति ॥

अखिलेत्यादिना प्राप्यत्वौपयिकं परत्वमुक्तम् । आदिपदेनान्तः प्रवेशनियमनमोक्षप्रदाने गृह्येते । स्वकार्यस्थजन्मादेः लीलात्ववर्णनात् लीलायाश्च स्वबुद्धिपूर्वकस्वगतस्वप्रीत्यात्मकव्यापाररूपत्वादुपादानत्व-निमित्तत्वयोस्सिद्धिः । अभिगम्यत्वौपयिकं सौलभ्यमुच्यते—**विनतेति ॥** भूतसंबन्धी व्रातो भूतव्रातः, भूतानि तदीयानि च, षष्ठ्या संबन्ध-मात्रोक्तेः, अन्यथा व्रातपदनैरपेक्ष्यात् । रक्षायामेका दीक्षा यस्येति वा रक्षायामेकदीक्ष इति वा विग्रहः । अस्मिन्नर्थे प्रमाणमाह—**श्रुति-शिरसीति ॥** कारणस्य ब्रह्मत्वमाह—**ब्रह्मणीति ॥** ब्रह्मशब्दस्य साधा-रण्यमन्वारुह्य श्रीनिवास इति विशेषानिष्कर्षः । तेन रूढिः स्थापिता ।

उपायं निरूपयति—**परस्मिन् शेमुषीति** ॥ शमदमाद्यङ्गिका बुद्धि श्शेमुषी । महनीयविषये प्रीतिः भक्तिः ॥

**भक्तेः पूजादिमात्रत्वं धियश्चिन्तादिरूपताम् ।**
**व्यवच्छेत्तुमिह न्यस्तं शेमुष्यादिपदद्वयम् ॥**

अत्र प्रथमेन पादेन जगदनादिवादनिरासः । द्वितीयेन निरनुग्रहेश्वरवादनिरासः । तृतीयेन त्रिमूर्तिसाम्यैक्यव्यक्त्यन्तरपरत्वपक्षाणां निरासः । तुरीयेन उत्तीर्णवादरूपः व्योमातीतवादश्च निरस्तः ॥

परमगुरुं सङ्कीर्त्यावान्तरगुरून् सङ्कीर्तयन् श्रीभाष्यरचनानुपपत्तिं प्रशमयति—**पाराशर्येति** ॥ यदीदं शारीरकशास्त्रं लोकायतादिवत्प्रतारकप्रोक्तं, भ्रान्तिमूलं, निष्प्रयोजनं, अपरिगृहीतं, स्पष्टार्थं, विवक्षिते नेतुमशक्यं, अनाधिकारिकं वा स्यात्; न तर्हि व्याख्येयमिति शङ्काः क्रमेण पदैः प्रतिक्षिप्यन्ते । **व्याघातेति** ॥ परस्पर पीडनेनाबोधासमग्रबोधान्यथाबोधार्हामित्यर्थः । **निजेति** ॥ कद्रूसुपर्ण्याख्यानप्रसिद्धेः गायत्र्यवयवैरमृताक्षरैरिति सोमाख्यसुधापक्षे व्याख्या ॥

आख्यानं चेदं तैत्तिरीयसंहितायां (६–१–५) "कद्रूश्च ह वै सुपर्णी चात्मरूपयोरस्पर्धेतां सा कद्रूस्सुपर्णीमजयत्साऽब्रवीत्तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणीष्वेति । छन्दांसि सौपर्णेयास्साऽब्रवीदस्मै वै पितरौ पुत्रान् बिभृतः तृतीयस्यामितो दिवि सोमस्तमाहर तेनात्मानं निष्क्रीणेष्वेति मा कद्रूरवोचदिति । जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताम् । त्रिष्टुगुदपतत्त्रयोदशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताम् । गायत्र्युदपतच्चतुरक्षरा सती सोमं चाहरच्चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत" इति ॥

## 2. सूत्रपदार्थप्रकरणम्.

### ३. संप्रदायसूचनम्.

**सूत्राभिप्रायसंवृत्या स्वाभिप्रायनिवेदनात् ।**
**व्याख्यातं यैरिदं सूत्रं व्याख्येयं तन्निवृत्तये ॥**

इति भास्करभाष्यम्, "अपराण्यपि सूत्राणि यथासंभवं द्रष्टव्यानि". इत्यानन्दमयाधिकरणस्थं शाङ्करंभाष्यं चाभिसन्धायाह— **भगवदिति ॥**

अत्राथशब्दस्यानन्तर्यार्थिकत्वे "साधनचतुष्टयं पूर्ववृत्तम्" इति शाङ्करभाष्यम् । "तापत्रयाभिहतिः पूर्ववृत्तम्" इति यादवप्रकाशभाष्यम्। "कर्मविचारः पूर्ववृत्तम्" इति भास्करभाष्यम्"। "देवादिभ्योऽनृणीभावः प्रज्ञापरिपाककषायश्चेत्यन्ये" इति भास्करभाष्योल्लिखितं मतान्तरम् ॥

तथा—पञ्चपादिकायां तृतीयवर्णकेऽनूदितं "कर्मणामधिकारपरम्परया शब्दतो वा संस्कारतया वा यथाविभागं तादर्थ्यावगमान्निश्श्रेयसप्रयोजनत्वाच्च आनन्तर्यवचनोऽथशब्दः । अधिगतादनन्तरम्" इति वृत्त्यन्तरवाक्यम् ॥

तथा—तत्रैवानूदितं "तत्राथातश्शब्दौ प्रथम एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति पूर्वप्रकृतां धर्मजिज्ञासामपेक्ष्य अनन्तरं ब्रह्मजिज्ञासाप्रारम्भार्थः । अत इति पूर्वनिर्दिष्टस्यैवार्थस्य हेतुतामाचष्टे ब्रह्मजिज्ञासां प्रति" इत्यपरवृत्तिवाक्यम् ॥

"वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति बोधायनापराभिधानोपवर्षाचार्यविरचितपूर्वोत्तरमीमांसाव्याख्यानरूपवृत्तिग्रन्थवाक्यम् । एतत्सर्वमभिसन्धाय बोधायन मत मङ्गीकृतम् ॥

४. अथातश्शब्दार्थः.

अयमथशब्दः आनन्तर्यवाचकः प्रसिद्धिप्रकर्षात्संमतवत् । प्रसिद्धिश्च प्रयोगप्राचुर्यमित्यभिप्रेत्याह—**अत्रायमिति** ॥ भवतिना प्रसिद्धिस्सूचिता । **अयमेतच्छब्दशिरस्कः** । अतश्शब्देऽप्ययमेव न्यायः । **वृत्तस्येति** ॥ शाबरभाष्ये "वृत्तस्यापदेशको हेत्वर्थः" इति दृश्यते । एतेन वृत्तविशेषस्य संभवप्रदर्शनपरं शांकरं भाष्यं सूचितं भवति । अत्र—

**आनन्तर्येऽप्यहेतुत्वं हेतुत्वेऽपि विलम्बनम् ।**
**दृष्टमिष्टं च तत्सार्थमथातश्च पदद्वयम् ॥**

इति विज्ञेयम् ॥

एतेन—अयमथशब्दो नानन्तर्यवाचकः असाधारणवृत्तविशेषशून्यशास्त्रारम्भसूत्रघटकत्वात् सामान्यतः "अथ शब्दानुशासनम्" इत्यादिसूत्रघटकाथशब्दवत् । ततश्चासाधारणवृत्तविशेषादर्शनात्प्रसिद्धिप्रकर्षहेतुरसिद्धः इत्याक्षेपे कर्मविचारो ब्रह्मविचारपूर्ववृत्तः तन्नियतपूर्ववृत्तित्वात् सामान्यतः कर्मविचारपूर्ववृत्तसाङ्गाध्ययनवदिति न्यायेन पूर्वपक्षहेतुरसिद्धीकृत इत्यवधेयम् ॥

**अधीतेति** ॥ **अधिगतिः** प्राप्तिः । **कर्मज्ञानं** कर्मनिर्णयः । केवलपदेन विद्याङ्गकर्मव्यवच्छेदः । अल्पं अस्थिरं फलं यस्येति बहुव्रीहिः । इदं कर्मविशेषणम् । अनन्तं स्थिरं फलं चेति कर्मधारयवृत्त्या ब्रह्मविशेषणम् ॥

अत्र षष्ठ्यन्तद्वयेन कर्मविशेष्यकाल्पास्थिरफलत्वप्रकारकानिर्णयविशिष्टब्रह्मविशेष्यकानन्तस्थिरफलत्वप्रकारकापातप्रतीतिमान् विशि-

ष्टाऽधिकारी निष्कर्षितः। तेन च निरधिकारिकत्वात् शास्त्रमनारम्भणीयमिति पूर्वपक्षेऽपि स्वरूपासिद्धिरुक्ता भवति। तदुक्तम्——

**व्युत्पत्त्यभावः प्रतिपत्तिदौस्थ्य मन्येन सिद्धत्वमथाफलत्वम्।**
**एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि॥ इति॥**

सिद्धे व्युत्पत्त्यभावो नाम सिद्धविषयकबोधनसामर्थ्यानवधारणप्रयुक्ततद्वस्तुविषयकतात्पर्यग्रहविरहः॥

५. ब्रह्मजिज्ञासापदार्थः.

धर्मजिज्ञासेत्यत्र शबरस्वामिना धर्माय जिज्ञासेति भाषितम्। गुरुमते तथैवाभ्युपगतम्। कुमारिलेन तु शेषषष्ठ्यर्थविवरणपरतया तद्वाक्यं व्याख्याय चतुर्थीसमासो दूषितः। शाङ्करे ब्रह्मजिज्ञासेत्यत्र शैषिकी षष्ठी दूषिता। यादवप्रकाशेन शैषिक्येव षष्ठी भाषिता। "प्रयोजनविवक्षया तु चतुर्थीसमासोऽपि स्यादिति" पञ्चपादिकाविवरणे प्रोक्तम्। रत्नप्रभायां "वृत्त्यन्तरकर्तृभिः ब्रह्मणे जिज्ञासेत्युक्तं चेदस्तु ज्ञानत्वेन ब्रह्मणः फलत्वात्" इत्यप्यनूदितम्। एवं वैविध्येऽपि "तद्विजिज्ञासस्व" इति श्रुत्यनुरोधेन कर्मणिषष्ठ्येव सूत्रकृदभिप्रेतेति हृदि निधायाह——**ब्रह्मण इति॥**

ननु किमर्थलभ्ये शब्दव्यापारेण? कृद्योगषष्ठ्यनुशासनस्य कर्मादिविवक्षायामपि द्वितीयादिनिषेधेन षष्ठीसाधुत्वतात्पर्यात्। विशेषविधिः न शैषिकीं षष्ठीमपवदेत्। तदूहे च ब्रह्मतदनुबन्धिकृत्स्न शास्त्रार्थविचार्यत्वसूचनमधिकं प्रयोजनमित्यभिप्रायेणाशङ्का—**यद्यपीति॥** यद्यपिपदमवधारणार्थकं सिद्धिरित्यनेनान्वेति। अयं पूर्वपक्ष्यभिप्रायः। परप्रत्यायनार्थे शब्दप्रयोगे विलम्बितधीहेतूपादानस्यानुचितत्वात् अर्थलभ्यार्थग्रहणापेक्षया क्लृप्तशक्तिकशब्दार्थग्रहणस्योचितत्वात् अनुबन्धि-

विचारस्य मुख्यविचारान्तर्नीतत्वात् कृद्योगषष्ठ्यैव विग्रहस्समुचित इति समाधत्ते—**तथापीति** ॥

"सर्वा प्रतिपदविधाना शेषलक्षणां वर्जयित्वा" इति भाष्येष्टिसिद्धात् प्रतिपदविहितत्वात् समासनिषेधमाशङ्क्य परिहरति—**नचेत्यादिना** ॥

शब्दस्वभावमनुस्मृत्याह—**ब्रह्मशब्देन चेति** ॥ उभयलिङ्गत्वेन क्षराक्षरविलक्षण इत्यर्थकः ब्रह्मशब्दः । अत्र निरतिशयोत्कर्षः योगनिमित्तम् । पुरुषोत्तमत्वलक्षणं श्रियः पतित्वं रूढिनिमित्तम् । बृहच्छब्दवत्साधारण्यमपाकरोति—**बृहत्वं चेति** ॥ **भगवच्छब्दवदिति** ॥ इदं वैष्णवपुराणवचनं हृदयस्थितम्—(६—५).

**तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः ।**
**शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥**
**ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।**
**भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥**

इति । अर्थस्वभावमनुसृत्याह—**तापेति** ॥ **जिज्ञासाकर्मभूतं** जिज्ञासयाऽऽप्तुमिष्टतममित्यर्थः । जिज्ञासेत्यत्र प्रकृत्यर्थस्योपसर्जनत्वात् प्रत्ययार्थस्य विषयानुकूल्यनिघ्नतया रागप्राप्तत्वादुभयमपि न विधेयमित्याशङ्कायामाह—**ज्ञातुमिति** ॥ प्रत्ययार्थस्य शाब्दे प्राधान्येऽपि आर्थ प्राधान्यं प्रकृत्यर्थस्यैवेत्यतः क्रियायाः कर्मसिद्ध्यर्थतया कर्मैव प्रोक्षणीयव्रीह्यादिवत् तात्पर्यमुख्यविशेष्यं विधेयमिति भावः । तथाच ज्ञानं विचारात्मकं विधेयं इष्यमाणत्वात् इच्छया आप्तुमिष्टतमत्वात् प्रधानत्वादिति प्रयोगः । तेन उपसर्जनत्वादिति हेतुरसिद्ध इति भावः । अयमर्थः शाङ्करेपि दृश्यते। सन्प्रयोगस्तु विचाररूपज्ञानस्य रागप्राप्तत्वसूचनार्थः । **विधीयत** इत्यु-

क्तिस्तु अनारम्भणार्हत्वभ्रमनिषेधार्था । विधिरत्राज्ञातसिद्धव्युत्पत्तिज्ञापनरूपः । उपासनस्यापि प्रीतिरूपतया रागप्राप्तत्वेऽपि तस्य श्रेयस्साधनत्वमलौकिकमिति वैधत्वोपपत्तिः ॥

६. शास्त्रैकत्वम्.

गुरूपासनादीनां पूर्ववृत्तत्वव्यावृत्तये विशिष्टवाक्यार्थमाह— **मीमांसेति** ॥ **विशेषण** हेतुहेतुमद्भावादिसम्बन्धेन । **विशिष्टक्रमं** नियतक्रमम् । एतेन नियतपौर्वापर्यभागद्वयात्मकवेदाख्यैकव्याख्येयव्याख्यानरूपत्वादेकशास्त्रत्वासिद्धिः । ततश्च अथशब्दः कर्मविचारानन्तर्यार्थकः एकशास्त्रीयभागान्तरारम्भसूत्रघटकत्वात्सामान्येन अथातश्शेषलक्षणमित्यादिस्थलीयाथशब्दवदिति न्यायेन गुरूपासनादीनां नियतपूर्ववृत्तित्वेऽपि नाथशब्दार्थत्वप्रसङ्गः । चतुर्लक्षण्यात्मको देवताकाण्डस्तु कर्मशेषभूतः । अतो देवताविचारान्तरमित्ति नार्थः ॥

७. अथ शब्दार्थसमर्थनम्—स्वाध्यायविधिवाक्यार्थः.

अथ कर्मणो हानार्थं तद्विचारस्य पूर्ववृत्तत्वं समर्थयितुं प्रारभते । तत्र कर्मविचारो ब्रह्मविचारपूर्ववृत्तः तन्नियतपूर्ववृत्तित्वादिति निरुक्तानुमाने ब्रह्मविचारनियतपूर्ववृत्तित्वहेतुरसिद्धः, अन्वयव्यतिरेकाभ्यां व्यभिचारादिति चेन्न—कृतकर्मविचारेषु क्वचित् ब्रह्मविचारविरहः नियतिविशेषनियतवैराग्याभावाधीन इति नाद्यो व्यभिचारः । द्वितीयेऽपि किमध्ययनात्प्राच्यो ब्रह्मविचारः ? आहोस्वित्प्रतीच्यः ? इति विकल्प्य आद्यः कल्पः शक्त्यभावान्निरस्यते—**तथाहि प्रथममिति** ॥ **ग्रहणं विधीयते** ॥ फलत्वेन बोध्यत इत्यर्थः ॥

यद्यपि "स्वाध्यायोऽध्येतव्यः" इति विधिनित्यः, अकरणे प्रत्यवायदर्शनात्, निमित्तादर्शनाच्च । तथापि दृष्टफलस्यापरित्याज्य

तथा तदंशे नियमः—यथा जपादिः, अनुष्ठानौपयिकं विज्ञानं चाध्ययनगृहीतेनैवेति । अक्षरराशिग्रहणकामना तु वैतुष्यकामनावदधिकारिविशेषणम् । अतो न काम्यत्वशङ्का । इदमत्रावधेयम्—

तत्रार्थकर्माध्ययनं सम्मतं सक्तुहोमवत् ।
स्वरूपतो विधेयं स्याद्ध्यापनविधेर्बलात् ॥
प्रयुक्तं चोपनयनमङ्गमध्यापनस्य च ।
प्राभाकरस्याभिमतमेतदर्थचतुष्टयम् ॥
गुणकर्म त्वध्ययनं अवघातादिवन्मतम् ।
नियमोऽत्र विधेयस्स्यात् प्रयुक्तं स्वविधेर्बलात् ॥
स्वस्योपनयनं चाङ्गं एवमर्थचतुष्टयम् ।
कुमारिलस्याभिमतं ज्ञानान्तत्वं द्वयोस्समम् ॥
तत्रौपनिषदानां तु मतं स्याद्भाट्टसम्मतम् ।
विशेषस्स्यादुभयतो ह्यक्षरग्रहणान्तता ॥

इति । मानमेयश्लोकवार्तिके (४५८ पु.) विस्तरो द्रष्टव्यः ॥

"अष्टवर्षं ब्राह्मणमुपनयीत" इत्याद्या उपनयनपूर्वकत्वादिविधयश्चापेक्षितविधयः । "अध्यापयेत्" इत्यादयस्तु याजनादिवत् वृत्त्यर्थतया प्राप्तत्वात् "द्वादशाहेन प्रजाकामं याजयेत्" इत्यादिवत्स्युः । तथाचाष्टवर्षो ब्राह्मणः स्वाध्यायग्रहणकामः उक्तप्रकाराचार्योपनीतः सदुपसत्त्या यथोक्तव्रतनियमवान् अधीयीतेति सोपबृंहणाद्याध्ययनशास्त्रार्थः ॥

ननु वृत्त्यर्थाध्यापनान् अन्यदेव धर्मार्थमध्यापनमस्ति । तद्विधिप्रयुक्तमध्ययनं स्यादिति चेदुच्यते–स च नित्यो नैमित्तिकः काम्यो वा? नाद्यः, लघुविषयाध्ययनविधिनान्तरीयकत्वात् । न द्वितीयः, नियतनिमित्तादर्शनात् । न तृतीयः, दृष्टे संभवत्यदृष्टकल्पनानौचित्याच्चेति ॥

अथाध्ययनस्य नियोगविषयत्वलक्षणार्थकर्मत्वप्रतिक्षेपेण व्यतिरेकव्यभिचारे द्वितीयः कल्पो निरस्यते—**अध्ययनंचेति** ॥ अयं भावः—अध्ययनस्य नियोगविषयत्वलक्षणप्रधानकर्मत्वे "सकृत्कृतश्शास्त्रार्थः" इति न्यायेन अध्ययनेन स्वाध्यायग्रहणासंभवात् तत्र संशयानुदयाच्च तदर्थविचारे प्रवृत्तिरेव नोत्पद्येत । संस्कारकर्मत्वे तु अधीतसाङ्गसशिरस्कवेदानां त्रिवर्गप्रवणानां प्रथमं स्वरसतः कर्मविचारप्रवृत्तिः । ततश्च स्वारसिकी ब्रह्मविचारप्रवृत्तिरित्यध्ययनादनन्तरं कर्मविचाराभावेऽपि ब्रह्मविचारोऽसिद्ध इति न व्यतिरेकव्यभिचार इति ॥

स्वाध्यायोऽध्ययनसंस्कार्यः उत्पाद्यत्वप्राप्यत्वविकार्यत्वविरहसहकृतकर्मत्वात् प्रोक्षणीयव्रीह्यादिवदिति न्यायोऽभिमतः! इदमवधेयम्—

**उत्पत्ति राप्तिर्विकृतिस्संस्कृतिश्चेति भज्यते ।**
**आधानाधीत्यवाघातप्रोक्षणानीत्युदाहृतिः ॥**

इति मीमांसकमतेन यद्यपि स्वाध्यायस्य आप्यत्वं युक्तम् । तथापि फलान्तरे संभवति तावन्मात्रपर्यवसानमयुक्तमिति भावः । अध्ययनस्य स्वाध्यायसंस्कारत्वं शालिकनाथेनापि वाक्यार्थमातृकायां संप्रदायतः प्रोक्तम्—

**संस्कार्यगणनायां च युक्तैवाक्षरसंस्क्रिया ।**
**स्वाध्यायो हि स्फुटं कर्म साक्षात्संस्क्रियते हि सः ॥ इति ॥**

अध्ययनसंस्कार्यत्वानुमाने बाधं परिहरति—**धर्मार्थेति** ॥ भाविदृष्टादृष्टविविधप्रयोजनप्रयोजकत्वादुपयोक्ष्यमाणसंस्कार इति भावः । अर्थकामतदुपायानां लोकसिद्धत्वेऽपि त्रैलोक्यविभवादिरूपफलतदुपायानां धृतिलक्षणसुखसाधनत्वेन शास्त्रग्राह्यत्वात् युक्तं धर्मत्वम् । आत्मा कदाचित्समस्तविशेषगुणशून्यः अनित्यविशेषगुणवत्त्वात् घटादिवदित्याद्यनु-

मानानां मोक्षसाधकानामप्रयोजकत्वमिति भावः । **जपादिने**त्यादिपदेन अध्यापनं गृह्यते ।

**वेदस्वीकरणं पूर्वं विचारोऽध्ययनं जपः ।**
**तद्दानं चैव शिष्येभ्यः वेदाभ्यासो हि पञ्चधा ॥**

इति दक्षादिस्मृतेः । जपविधिश्च निरर्थकोच्चारणविषयोऽपि स्वाध्यायस्यार्थपरतां न बाधते । यदाहुः—

**स्वरूपेण जपाद्यर्थः स्वशक्त्याऽर्थविबोधकः ।**
**रूपभेदाद्विरोधो नो यथाग्नेर्दाहभासयोः ॥** इति ॥

अध्ययनविधेरनुष्ठानोपयोग्यर्थज्ञानपर्यन्ततां मीमांसकाभिमतां प्रतिक्षिपति—**एवमिति ॥ मन्त्रवन्नियमवदिति ॥** मन्त्राः काण्डव्रताद्यङ्गभूताः अध्ययनदशायां जप्याः "शं नो मित्रः" इत्याद्याश्च । नियमाः "श्रावण्याम्" इत्यादिना प्रागुक्ताः । तद्वैशिष्ट्यमनूच्चारणगतमक्षरग्रहणे उपचरितम् ॥

अत्रायमाशयः—अध्ययनस्य स्वयंप्रयोगानुगुणाक्षरग्रहणार्थतैव लौकिकवाक्याध्ययनस्येव युक्ता "यो ह वा, अविदित्वा ऋषिम्, यदधीतम्, स्थाणुरयम्, यश्च मीमांसतेऽध्वरम्," इत्यादिभिस्तु अर्थज्ञानप्रशंसया स्वतः प्रवृत्तिरुत्तभ्यते, यथा रागप्राप्तऋतुगमनादेः अकरणे दोषः विधिवत्करणे संतत्यादिलाभश्च फलत्वेन स्मर्यते, एवमिहापीति ॥

यद्यप्यङ्गाध्ययनस्य अङ्ग्युपकारकतानिर्वाहायार्थज्ञानपर्यन्तत्वे अङ्गिनः उपकार्यतानिर्वाहायाध्ययनमर्थज्ञानपर्यन्तमित्यापतति विध्यैकरूप्यात् । तथापि अङ्गाध्ययनस्य केवलदृष्टार्थत्वाभ्युपगमादस्ति किंचिद्वैषम्यम् । विचारे स्वयंप्रवृत्तावपि तदुपायभूतश्रवणादौ गुर्वभिगमनं नियम्यते ॥

नन्वध्ययनस्यापातधीजननद्वारा कर्मविचारप्रवर्तकत्वमुक्तमयुक्तम् "आचार्यकुलाद्वेदमधीत्य, अधीत्य स्नायात्" इत्यादिभिः स्नानविधिभिः अनवसरावगमादिति चेदत्राहुः—

**अनुज्ञातं च सर्वत्र न स्वाङ्गं व्यवधायकम्।**
**अतो मीमांसया नात्र व्यवधानं विरोधकृत्॥**
**गृहस्थस्य श्रावयितुर्यथाऽवसरसम्भवः।**
**समावृत्तस्य वा तद्वत्समयः श्रोतुरिष्यते॥ इति॥**

अथाध्ययनविधेरर्थज्ञानपर्यन्तत्तानिरासमुपसंहरति—**अध्ययनगृहीतस्येति॥** अत्र स्वभावत एवेत्यनेन विधेरक्षरग्रहणमात्रपर्यन्तत्वे अर्थातत्परत्वाद्वेदो निरर्थकस्स्यादिति शङ्कानिरासः। दर्शनादित्यन्तेन परम्परया पुरुषार्थपर्यवसानतत्परेण विधिर्निरर्थकस्स्यादपुरुषार्थत्वादिति शङ्कानिरासः। अवगम्यमानानित्यन्वितेन दृष्ट्वेत्यनेन मीमांसाऽप्यनारभ्या प्रवर्तकविरहादिति शङ्कानिरासः। श्रवणे इत्यन्तेन एकव्याख्येयव्याख्यानरूपासम्भवात् शास्त्रैक्यं दुर्भणमिति शङ्कानिरास इति भावः। **तत्रेति॥** स्वयं प्रवृत्तावित्यर्थः॥

८. अतश्शब्दार्थसमर्थनम्

एवमथशब्दार्थं स्वाध्यायविधिवाक्यार्थेन समर्थ्य अतश्शब्दार्थं श्रुतिभिरेव समर्थयति—**तथाचेति॥** कर्मविचारनिश्चितसंवादेनानिश्चिते श्रद्धां समर्थयद्वाक्यं—**तद्यथेति॥** लोक्यत इति लोकः भोग्यः। कर्मवैयर्थ्यशङ्कामपनुदद्वाक्यं—**अन्तवदिति॥** प्रायिकत्वशङ्कामपनुदद्वाक्यं—**नहीति॥** तमर्थं द्रढयद्वाक्यं—**प्लवा इति॥** उभयविधफलं समुच्चित्य वदद्वाक्यं—**परीक्ष्येति॥** य इत्यध्याहार्यम्। **ब्रह्म** अणति अधीते इति **ब्राह्मणः** त्रैवर्णिकः। **येन** विद्याविशेषेण। **वेद** विद्यात्। **प्रोवाच** प्रब्रूयात्। ब्रह्मफलस्य निरतिशयत्वं वदद्वाक्यं—

**ब्रह्मविदिति** ॥ पुनरावृत्तिशङ्कामपनुदद्वाक्यं–**न पुनरिति** ॥ सर्वज्ञत्वं वदद्वाक्यं—**न पश्य इति** ॥ पश्य पदस्य विषयं वदद्वाक्यं—**तदेकमिति** ॥ सर्वात्मकमित्यर्थः । स्वातन्त्र्यं निराकुर्वद्वाक्यं – **स स्वराडिति** ॥ अकर्मवश्य इत्यर्थः । उपायवैलक्षण्यं वदद्वाक्यं–**तमेवेति** ॥ उपायस्य विषयं वदद्वाक्यं—**पृथगिति** ॥ पृथक् मत्वेत्यन्वयः । **ततः** पृथक्त्वमननात् । **तेन** प्रेरकेण । **जुष्टः** वरणीयः । आदिशब्दः "भूयसां स्याद्बलीयस्त्वम्" इति न्यायसूचनार्थः । कर्मविचाररूपहेतोरन्यथासिद्धिमनूद्य परिहरति–**ननु च साङ्गेति** ॥

## 3. लघुपूर्वपक्षः

### १. साधनचतुष्टयं पूर्ववृत्तम्.

अथ कर्मण उपादानार्थं पुनरथशब्दार्थ एव समर्थ्यते । अत्र न कर्मविचारः ब्रह्मविचारपूर्ववृत्तः ब्रह्मविद्यासमुच्चयानर्हविषयकत्वात् अर्थकामविचारवदिति सत्प्रतिपक्षमभिप्रेत्याशङ्कते— **ननु च ब्रह्मेति** ॥

इदमत्र शाङ्करभाष्यवाक्यद्वयं हृदि निधेयम् । "एवं ब्रह्मजिज्ञासाऽपि यत्पूर्ववृत्तं नियमेनापेक्षते तद्वक्तव्यम्, स्वाध्यायानन्तर्यं तु समानम् । नन्विह कर्मावबोधानन्तर्यं विशेषः, न—धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः" । "उच्यते—नित्यानित्यवस्तुविवेक· इहामुत्रफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वञ्च । तेषु हि सत्सु प्रागपि धर्मजिज्ञासायाः ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये" इति । साधनचतुष्कं पूर्ववृत्तं नियमेनापेक्षितत्वादिति न्यायोऽत्राभिप्रेतः । इममेव हेतुं सिद्धान्तेऽन्योन्याश्रयदोषेणासिद्धयति । **अधीतवेदान्तस्येति** ॥ वेदान्तमात्राध्यायिन इत्यर्थः । अवयुत्याध्ययने मानाभावोऽनुवादेन व्यञ्जितः ॥

१०. उद्गीथविचारः.

**कर्मेति**॥ उद्गीथाद्युपासनानि अनधिगतकर्मणोऽशक्यचिन्तनानि कर्माङ्गविषयत्वात् प्रणयनाश्रयगोदोहनादिवादिति प्रयोगोऽभिप्रेतः। इयं सिद्धान्तिसम्मता प्रधानयुक्तिः। तामुपालभते—**अनभिज्ञ इति**॥ **शारीरको** जीवः। **मिथ्याज्ञानं** भ्रान्तिज्ञानं मिथ्याभूतमज्ञानं वा। **प्रतिपिपादयिषितं** प्रदातुं प्रापयितुं वा इष्टमित्यर्थः। प्रस्तावोद्गीथ-प्रतिहारोपद्रवनिधनाख्येषु सामावयवेषु द्वितीय उद्गीथः। **न साक्षा-दिति**॥ प्रसङ्गादित्यर्थः। उक्ता युक्तिरप्रयोजिकेति भावः॥

११. कर्मसमुच्चय विचार.

अथ भास्करयादवसिद्धान्तिमतावमर्शी मध्यस्थः प्रत्यनुमाने हेत्वसिद्धिं शङ्कते—**बाढमिति**॥ **कर्मसमुच्चितादिति**। साहित्यं विवक्षितं, तच्च यथायथम्। तथाहि–भास्करमते प्रयाजादिवन्निष्पन्नस्य करणस्य फलोत्पत्तौ सहकारित्वलक्षणं आरादुपकारकत्वरूपाङ्गत्वं कर्मणोऽ-भिमतम्। यादवप्रकाशमते प्रथमं ज्ञानोत्पादकतया द्रव्यादेरिव करण-शरीरनिष्पादकत्वलक्षणं सन्निपत्योपकारकत्वरूपमङ्गत्वं, ततश्च मृत्यु-तरणरूपफलभेदसाधनत्वेन ज्ञानसमप्रधानत्वम्। साध्यद्वित्वं साधनद्वित्वं चाभिमतम्। सिद्धान्तिमते सन्निपत्योपकारकत्वरूपमङ्गत्वमेवेति विशेषः। **केन समुच्चय इति**॥ नित्यनैमित्तिकाभ्यां समुच्चयः निषिद्धकाम्याभ्यां नेत्यर्थः॥

यद्यपि यादवप्रकाशमते तापत्रयाभिहतेः पूर्ववृत्तत्वमभिहितम्। तथापि विषमत्वेन समत्वेन च कर्मणः क्रमेण समुच्चेतव्यत्वात् अन्ततः कर्मविचारपूर्ववृत्तत्वं दुस्त्यजमित्याशयः॥

१२. विरोधाभिहेतुषट्कम्.

समसमुच्चयपक्षनिरासेन हेत्वसिद्धिं परिहरति—**नैतद्युक्तमिति**॥

**सकलेति** साधनद्वित्वनिरासः । **अविद्येति** साध्यद्वित्वनिरासः । **प्रत्यनीकत्वं** निवर्तकधीगोचरत्वम् । तुच्छत्वव्यावृत्तये चिच्छब्दः । विरोधं व्यनक्ति —**वर्णाश्रमेति** ॥ **निवृत्तिरूपेति** ॥ अज्ञानसदसद्भावयोः भेददर्शनसदसद्भावनिरूप्यत्वात्तद्रूपत्वोक्तिः। कर्म न मोक्षसाधनं अनित्यत्वात् सम्प्रतिपन्नवदिति युक्तिमभिप्रेत्य तदनुग्राह्यं मानं दर्शयति—**श्रुतयश्चेति** ॥ अनित्यत्वं वदद्वाक्यं—**अन्तवदिति** ॥ स्वरूपतः फलतश्च बोध्यम् । तदुपपादकं वाक्यं—**तद्यथेति** ॥ ज्ञानस्य साधनत्वं वदद्वाक्यं—**ब्रह्मविदिति** ॥ भेदनिषेधेन कर्मणस्साधनत्वं नास्तीति व्यञ्जयद्वाक्यं—**ब्रह्मवेदेति** ॥ मृत्युतरणमपि ज्ञानसाध्यमिति वदद्वाक्यं—**तमेवेति** ॥ चित्तशुद्ध्युपयोगं वक्ष्यन् विषमसमुच्चयपक्षनिरासेन तामेवासिद्धिं परिहरति—**यदपि चेति** ॥ **वस्तुविरोधः** भेदाभेदवासनयोः तत्फलयोः बन्धमोक्षयोश्च विरोधः । **श्रुत्यक्षरं** सम्प्रत्ययः । असिना जिघांसतीत्यादावगतिका क्लिष्टा गतिरिति भावः ॥

अयमाशयः—"यज्ञेन" इत्यादिश्रुत्या इच्छासाधनत्वमवगम्यते, "क्रियावान्" इति श्रुत्या वेदनसाधनत्वम्। तथापि "शान्तो दान्तः" इत्युत्पत्तिवाक्यशिष्टेन निवृत्तिरूपशमादिगुणेनावरुद्धे ज्ञाने गुणान्तरसामान्यस्याप्यनिवेशे किंपुनः प्रवृत्तिरूपस्य कर्मलक्षणस्य गुणस्येति न्यायेन क्रियावानिति श्रुतिः स्तुतिः न तु विनियोक्त्रीति स्वीकर्तुमुचितमिति ॥

शमादीनां ज्ञानाङ्गत्वमाह—**विविदिषायां जातायामिति** ॥ ज्ञानमात्रस्य हेतुत्वं श्रावयति—**तदेवमिति** ॥ तत्र कारणत्वेन लक्ष्यत्वात् ब्रह्मणः प्रथमं कारणवाक्यं—**सदेवेति** ॥ एकमेवाद्वितीयपदैः विजातीयसजातीयस्वगतभेदत्रयनिषेधः । कारणत्वशङ्कितदोषान् शोधयद्वाक्यं—

**सत्यमिति ॥** अनृतजडपरिच्छिन्नव्यावृत्तिरिहाभिप्रेता । शाब्दं विशेष-निषेधमाह—**निष्कलमिति ॥** जीवब्रह्मैक्यविधिः-- **अयमात्मेति ॥** तात्पर्यभूम्नाऽऽम्नातो विधिः—**तत्त्वमसीति ॥** एवं च मोक्षसाधनं ज्ञानं न कर्मजन्यं निवर्तकज्ञानत्वात् नेदं रजतमित्यादिज्ञानवदिति न्यायोऽत्राभिमतः । अत्र अप्रमाणत्वादिति हेतुस्सूचितः । श्रवणादि-विधिं सफलयति—**वाक्यार्थेति ॥ प्रतिपादकानि** प्रदायकानि । कर्ममीमांसा कर्तव्यस्थापिका अविद्वद्दर्था । ब्रह्ममीमांसा तु कर्तव्य-निवर्तिका तत्त्वबोधिका इति तत्त्वदर्शिन इत्यर्थः । आपातधीव्यावृत्तये न्याययुक्तत्वोक्तिः । संशयादेः पुनरनङ्कुरत्वाय मननम् । साक्षात्कारप्रति-बन्धकभेदवासनानिरसनाय ध्यानम् । "द्रष्टव्यः" इति फलानुवादः ॥

वस्तुसामर्थ्यहेतुं व्यनक्ति—**तच्चेति ॥** "नास्त्यकृतः कृतेन, शान्तो दान्तः, येनाऽहं नामृतास्यां किमहं तेन कुर्याम्, मा भगवान् शोकस्य पारं तारयतु" इत्यादिभिरेतच्चतुष्टयसिद्धिः । अनित्यवस्तु-विवेकाद्विरागः । नित्यवस्तुविवेकात् मुमुक्षा । तत्पूर्वकविचारस्तु शमा-द्यपेक्ष इत्युपयोगप्रकारः । **अर्थस्वभावादिति ॥** वस्तुसामर्थ्यादित्यर्थः । तच्च कर्मणः भेदावलम्बित्वम्, ज्ञानस्य निरपेक्षत्वं, शमादेर्निवृत्ति-रूपत्वञ्च । एतेन शमाद्यङ्गत्वमपि व्यक्तम् । आच्छादकाविद्येत्येव पाठस्स्यात् । आच्छादिकाऽविद्येति पाठस्तु भावप्रकाशिकायां समर्थितः । **अतः** हानार्थमुपादानार्थञ्च कर्मज्ञानस्यानपेक्षितत्वादित्यर्थः । अत्रायं तूलिकास्थः लघुपूर्वपक्ष सङ्ग्रहः—

**विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात् ।**
**ज्ञानमात्रस्य हेतुत्वश्रुतेस्सामर्थ्यतोऽपिच ॥**
**शमाद्यङ्गकताज्ञानान्न धीकर्मसमुच्चयः ।**
**श्रवणादिक्रमोन्निद्रवाक्यजा धीर्विमोचिका ॥** इति ॥

अत्राद्यत्रिकं कर्मपक्षकानुमानम्। अनन्तरत्रिकं धीपक्षकानुमानम्। न धीकर्मसमुच्चय इति मतत्रयसाधारण्येन प्रतिज्ञा। विरोधः स्वरूपतः फलतश्च। अप्रमाणत्वं श्रुत्यादिप्रमाणशून्यत्वम्। सामर्थ्यं मिथ्याभूतवस्तुबाधने पर्याप्तत्वम्। एवञ्च एतैः हेतुभिः समुच्चयानर्हविषयकत्वादिति प्रतिहेतोः स्वरूपासिद्धिः परिहृता भवति ॥

१३. वाक्यजन्यं ज्ञानं मोक्षसाधनम्.

मोक्षसाधनं ज्ञानं प्रमाणजन्यं (वस्तुतन्त्रम्) निवर्तकज्ञानत्वात् सामान्येन सम्मतवदिति युक्तिरभिप्रेता। वस्तुतन्त्रं नाम तत्, यत् नियोगशतेनापि कारयितुं प्रतिषेधशतेनापि वारयितुमशक्यम् ॥

## 4. लघुसिद्धान्तः.

१४. वाक्यजन्यज्ञानस्य मोक्षहेतुत्वे शास्त्रप्रत्यक्षविरोधः.

अथ कर्मविचारः न पूर्ववृत्तः विद्यासमुच्चयानर्हविषयकत्वादिति प्रत्यनुमाने स्वरूपासिद्धिं स्थापयति—**अत्रोच्यत इति** ॥ साध्यसाधनद्वित्वनिरासोऽभिमत इत्याह- **यदिति** ॥ **अविद्येति** ॥ अत्र विकल्पः परमत स्वमतयोः। मोक्षसाधनं ज्ञानं प्रमाणजन्यमित्यनुमानस्य शास्त्रप्रत्यक्षाभ्यां बाधमभिप्रेत्य दूषयति—**नतावदिति** ॥ वाक्यार्थज्ञानस्या पुरुषतन्त्रत्वात् "द्रष्टव्यः" इत्यादिशास्त्रविरोधः। तावन्मात्रेणेति प्रत्यक्षविरोधः "बुद्धे क्षेमप्रापणम्। तच्छास्त्रैर्विप्रतिषिद्धम्। बुद्धे चेत् क्षेम प्रापणमिहैव न दुःखमुपलभेत" इति आपस्तम्बधर्मसूत्राण्यनुसंहितानि। शास्त्रविरोधं मण्डनमतमाश्रित्य प्रतिवक्ति—**न च वाच्यमिति** ॥ शाङ्करमतमाश्रित्य प्रत्यक्षविरोधं प्रतिवक्ति—**जातेऽपीति** ॥ **चन्द्रेति** ॥ अङ्गुल्यवष्टम्भादिमतः चन्द्रैकत्वे वाक्यतो ज्ञातेऽपीत्युपस्कार्यम्। **अनिवृत्तामिति** ॥ खण्डिता लता न पुनः प्ररोहेत्। विज्ञाता प्रतिमायोषित् न

रागादिकं जनयेत् । दग्धः पटः नाच्छादयेत् । हेतुविकलः चक्रभ्रमः न घटमालामुत्पादयेदिति भावः। शास्त्रविरोधं स्थापयति—**सत्यामिति** ॥ प्रत्यक्षविरोधं स्थापयति—**सत्यपीति** ॥ बाधितानुवृत्तावुक्तः दृष्टान्तः विषम इत्याह—**द्विचन्द्रेति** ॥ प्रमितप्रामाणिकत्वं प्राबल्यम् । सर्पादि-भ्रमापेक्षया भयग्रहणम् । ज्ञानानुत्पत्तिपक्षं पुनर्दूषयति—**अपिचेति** ॥ अत्र दृष्टद्वारा निवर्तकत्वेऽनुपपत्तिरियम् । अदृष्टद्वारा निवर्तकत्वे निव-र्त्यसत्यत्वप्रसङ्गः । अयमर्थस्समन्वयनये षष्ठवाक्यार्थे विस्मृतोऽवधेयः ॥

१५. पुरुषतन्त्रं ज्ञानमुपासनं मोक्षसाधनम्.

मोक्षसाधनं ज्ञानं प्रयत्नसाध्यं शास्त्रविहितत्वादिति युक्तिमभि-संधाय स्वमतमाह—**अत इति** ॥ वाक्यार्थज्ञानस्य मोक्षहेतुत्वे शास्त्र-प्रत्यक्षविरोधादित्यर्थः । पूर्वपक्ष्यनुमानस्य बाधितत्वादिति भावः । एतेन ज्ञानमात्रहेतुत्वश्रवणहेतोः सिद्धसाधन दोष इत्युक्तं भवति । अत्र ध्यानादिशब्दोक्तविशेषपरता वेदनादिशब्दानामभिमता। यथोक्तम्—

**वेदनं ध्यानविश्रान्तं ध्यानं श्रान्तं ध्रुवस्मृतौ ।**
**सा च दृष्टित्वमभ्येति दृष्टिः भक्तित्वमृच्छति ॥ इति ॥**

श्रवणे मनने वा विश्रमं वारयति—**श्रोतव्य इति** ॥ एतेन श्रवणादित्रिकं दर्शनसाधनतया विधीयत इति भास्करपक्षः, चतुर्णां विकल्पेन मोक्षसाधनत्वमिति यादवप्रकाशपक्षश्च अपास्तः ॥

**श्रोतव्यश्श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।**
**मत्वा च सततं ध्येयः एत दर्शनहेतवः ॥**

इतिश्लोकेऽपि श्रवणादित्रिकस्य दर्शनहेतुत्वमात्रोक्तौ साध्यस्यापि विधे-यत्वे विरोधाभावेन रागप्राप्तश्रवणादिपूर्वकविधिपदान्तरोपात्तदर्शनाकार-विशेषितं ध्यानमेवात्र विधेयमिति भावः। संवादयति—**वक्ष्यति चेति** ॥ सूत्रविवरणं—**तदिदमित्यादिः** ॥ वेदनमुपासनं व्यतिकरितशब्द-

निर्दिष्टत्वात् सामान्यतः प्रसिद्धमुदाहरणम् । **व्यतिकरः** मिथःस्थानापत्तिः । अयमर्थः शाङ्करभाष्ये आवृत्त्यधिकरणेऽप्युक्तः । क्वचिदादौ । क्वचिदाद्यन्तयोः । क्वचिदन्ते विशेषशब्दः । "न स वेद" इत्यत्र तूभयत्र उपासिः, "अथ योऽन्यां देवतामुपास्ते" इत्युपक्रमात् । "यस्तद्वेद" इत्यस्यायमर्थः—ब्रह्म ब्रह्मविच्चेत्येतद्द्वयं तवोक्तमिति । नैरन्तर्यलक्षणविशेषवत्त्वं ध्यानत्वम् । विसदृशबुद्धिव्यवधानरहितप्रवाहत्वं ध्रुवत्वम् ॥

१६. उपासनं स्मृतिरूपम्.

**सा चेति** ॥ ध्यानधारणयोस्समाधिलक्षणदर्शनसाधनत्वमपि वैशद्यातिशयाधायकत्वमेव, न तु ध्यानफलमन्यद्दर्शनमिति भावः । **दर्शनरूपं** दर्शनस्य रूपमिव रूपं यस्येति विग्रहः । रूपं च वैशद्यातिशयः । प्रत्यक्षं तु—"इन्द्रियजं, समनन्तरप्रत्ययजं, मानसजं, भावनाबलजं चेति चतुर्विधम्" इति न्यायबिन्दौ धर्मकीर्तिराह । तदनुयायिनोऽन्ये ध्यानानियोगादिवादा इति ध्येयम् । मोक्षसाधनज्ञानस्य प्रमाणजन्यत्ववादोऽप्येतत्सोदर एव ॥

योगिप्रत्यक्षस्य तु बाह्येन्द्रियाणां मनसश्च सुक्रुनविशेषैरतिशयाधानान्नानुपपत्तिः । तत एवानधीतसूक्तकाण्डमन्त्रसाक्षात्कारस्यापि नानुपपत्तिः । मन्वादीनां धर्मसाक्षात्कारेऽपि न खलु चोदनैकसमधिगम्यत्वविरोधः, चोदनालक्षणत्वेनैव धर्मस्य साक्षात्करणात् ॥

**अतः श्रुतिस्मृतिशतैश्चोदिता स्मृतिरूपिणी ।**
**भाष्यते परविद्येयं भवारम्भस्य निष्कृतिः ॥** इति ॥

उक्तं न्यायवर्गं द्रढयति—**वाक्यकारेणेति** ॥ वाक्यकारश्च ब्रह्मनन्दी आत्रेयवंश्यः टङ्काचार्यापराभिधानः छान्दोग्योपनिषदः वाक्यनामकग्रन्थकारः । तस्या एवोपनिषदः सूत्रकारस्तु जैमिनिः । तयो-

भाष्यकारस्तु द्रमिडाचार्यः । अतस्सूत्रं वार्तिकं भाष्यञ्चेति प्रस्थान त्रयप्रसिद्धिः । जैमिनीयं बादरायणीयादिकं च वेदान्तसूत्रजातं बादरायणापराभिधानेन कृष्णद्वैपायनेन वेदव्यासेन परिष्कृतमिति रहस्यम् । **सिद्धं त्विति ॥** वेदनमुपासनमिति सिद्धमित्यर्थः । **दर्शनादिति ॥** श्रुतेः स्मृतेश्चेत्यर्थः ॥

१७. सैव भक्तिः.

अनेनैव सामान्यविशेषन्यायेन पूर्वाचार्याभिमतेन श्रुत्यन्तरसिद्धं भक्तिरूपत्वं विशेषान्तरमाह—**एवं प्रत्यक्षेति ॥**

**भज इत्येष धातुर्वै सेवायां परिकीर्तितः ।**
**तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसा ॥**
**इति बोधायनवचः प्रस्पष्टं समुदाहृतम् ।**
**प्रकाशिकादीपिकयोः श्रीसुदर्शनसूरिभिः ॥ इति ॥**

अत्र श्रीभाष्यकारस्यायमतिशयः अपूर्वः अवगन्तव्यः, यत् उपासनमार्गभक्तिमार्गयोः विभिन्नप्रस्थानत्वेन निगमागमसम्प्रदायभेदनपरैः व्याख्यातयोः ऐक्यस्य पूर्वाचार्यसंमतस्य प्रकाशीकरणम् ॥

यद्यप्यत्र सर्वत्र प्रकरणभेदः। तथापि फले तारतम्यरहिते उपाये गुरुलघुविकल्पानुपपत्त्या वस्तुसामर्थ्यलक्षणं लिङ्गं प्रकरणाद्बलीय इति सर्वप्रमाणप्रामाण्यवादिनः साधवस्सन्धिमिच्छन्ति ॥

यथा "नान्तरिक्षे न दिवि" इत्यप्राप्तप्रतिषेधसहपठितो "न पृथिव्याम्" इति प्राप्तप्रतिषेधः केवलपृथिव्यामन्तरिक्षादिवदधिकरणत्वव्युदासेन हिरण्योपधानत्ववैशिष्ट्यविधौ विश्राम्यति तथाऽनुपायभूतश्रवणमननसहपठितोपायभूतनिदिध्यासनप्रतिषेधः केवलनिदिध्यासनस्य श्रवणवदनुपायत्वोक्तिमुखेन भक्त्यात्मकविधौ विश्राम्यतीति "नायमात्मा" इति श्रुतिसारार्थः ॥

१८. भक्तेः कर्माङ्गकत्वम्.

ननूपात्तश्रुतिस्मृतिस्वारस्यात् केवलभक्तेरेवोपायत्वावगमान्न कर्मापेक्षेत्यत्राह—**एवंरूपाया इति** ॥ **तदुत्पत्तये** यज्ञादिसाध्यविविदिषोत्पत्तये इत्यर्थः । एतेन चित्तशुद्ध्युपयोजनहेतुस्सिद्धसाधनदोषेण दूषितः । आश्रमार्थस्यापि विद्यार्थत्वसूचनाय अग्निहोत्रसूत्रोपादानम् । विनियोगपृथक्त्वसूचनाय सहकारिसूत्रोपादानम् । एतेनाप्रमाणत्वादिति हेतुरसिद्धीकृतः ॥

१९. साधन सप्तकम्.

समुच्चयानर्हविषयकत्वादिति प्रतिहेतुमसिद्धयितुं वृद्धवचनमुपादत्ते—**वाक्यकारश्चेति** ॥ इदमेव साधनसप्तकमिति व्यवह्रियते । **संभवः** उपपत्तिः । **निर्वचनं** प्रमाणम् । अत्र सर्वत्र इति शब्दनिर्वचनशब्दाः, तथा "तद्विपर्ययोऽनवसादः, तद्विपर्ययोऽनुद्धर्षः" इति च वाक्यशेषः श्रीभाष्यकाराया अवगन्तव्याः ॥

अत्र भाष्यकारः ब्रह्मनन्दिवाक्यव्याख्याता द्रमिडाचार्यः । वाक्यकारेणवान्यत्र श्रुतिरुदाहृता । अत्र तु भाष्यकारेणैव स्मृतिरिति । **शोकवस्त्विति** ॥ भूतभाव्यनिष्टगोचरधीरूपे दुःखे शोकभये, तद्धेतुभूतं वस्त्वित्यर्थः । **तज्जं दैन्यमिति** ॥ मनसो यदभास्वरत्वं यच्च तज्जं परदुःखदुःखित्वादि तद्विपर्ययः अनवसाद इत्यर्थः । **तद्विपर्ययजेति** ॥ देशकालसाद्गुण्येन भूतभाविसुखहेतुधिया बन्धुसुखेन च जातेत्यर्थः ॥

सन्नूराहितत्वेनोक्तार्थे स्फुटार्थं श्रुत्यन्तरमुपादत्ते **तथाचेति** ॥ "नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थावगतिः" इति वैयाकरणपरिभाषान्यायेनाविद्यापदार्थमाह—**अत्रेति** ॥ उभयं सह वेदेति वेद्यत्वे सहभावकथनात् अङ्गाङ्गित्वेनानुष्ठेयतया बुद्ध्यारोहणे साहित्यमभिप्रेतम् ॥

तथाच चशब्दसहशब्दयोरन्यथासिद्धत्वात् समसमुच्चयपक्ष आरादुपकारकत्वपक्षश्च प्रतिक्षिप्तौ । अविद्याशब्दस्य अज्ञानार्थकत्वमङ्गीकृत्य अविद्यया मृत्युं प्राप्य वर्तमान इति परसम्मतयोजनाऽपि प्रत्युक्ता ॥

**विद्ययाऽमृतमश्नुत इति** ॥ अत्र धीसङ्कोचनिवृत्तेर्विद्यासाध्यत्वे भावान्तराभावनयेन अमृतत्वं विद्यासाध्यमेव । प्रतिबन्धकनिवृत्तेर्विद्यासाध्यत्वे सेतुभङ्गस्रोतःप्रवृत्तिनयेन स्वतस्सिद्धममृतत्वं विद्यासाध्यत्वेनोपचर्यत इति विशेषः ॥

२० धर्मेण पापमपनुदति.

अस्योपबृंहणम्—**यथोक्तमिति** ॥ **ज्ञानव्यपाश्रयः** आगमोत्थज्ञाने प्रतिष्ठितः । **ब्रह्मविद्यामधिष्ठाय** भक्तिलक्षणां निष्पाद्यत्वेनाभिसन्धायेत्यर्थः । पापस्य भोगेन विनापि निवर्त्यत्वं स्पष्टयति—**तथाचेति** ॥ प्रकृतवाक्यार्थमुपसंहरति—**तदेवमिति** ॥ **अवसेयं** साध्यमित्यर्थः । अनेन संदर्भेण विरोधादिति हेतुरसिद्धीकृतः ॥

२१. साधनचतुष्कस्य पूर्ववृत्तत्वानुपपत्तिः

अथ साधनचतुष्कं पूर्ववृत्तं नियमेनापेक्षितत्वादिति परानुमाने हेतुं अन्योन्याश्रयदोषेणासिद्धयति—**अपि चेति** ॥ अत्र मीमांसापदं भागद्वयपरम् । उपासनवेलायामपेक्षितं साधनचतुष्टयं श्रवणवेलायामेवापेक्षितमिति वादः लोभमूल इति भावः ॥

शमादिविनियोगस्य कर्मविचाराधीनत्वेन श्रवणं प्रति हेतुत्वमन्यथासिद्धमिति नियमेनापेक्षितत्वमसिद्धमित्याह—**एषामिति** ॥ शमादीनामित्यर्थः । **विनियोगः** अङ्गाङ्गिभावबोधनम् । इह तृतीयाध्याये तु प्राक् व्युत्पादितैर्न्यायैराक्षेपसमाधानमात्रं क्रियते, न तु न्याया व्युत्पाद्यन्ते । अनेन भाष्येण शमाद्यङ्गकताम्नानादिति हेतुः निषिद्धकाम्यव्यर्थलक्षणकर्मभ्यो निवृत्तिरूपत्वेन साधारणीकृतः ॥

२२. उद्गीथसमाधिः.

अथ युक्त्यन्तरेण प्रधानप्रतिपाद्यावश्यापेक्षितत्वरूपेण कमावचारस्य पूर्ववृत्तत्वं साधयति—**उद्गीथादीति** ॥ प्रधानप्रतिपाद्यस्योपासनस्याङ्गभूते कर्मणि समृद्ध्यर्थत्वेन अवश्यापेक्षितत्वमवधेयम् । **सुतरामिति** ॥ सादृश्यादिना धीस्थत्वं प्रसङ्गात्सङ्गतिः । उभयापेक्षया धीस्थत्वं साक्षात्सङ्गतिः । ततश्च विचारेऽनुष्ठाने च उभयापेक्षा बोध्या । उद्गीथाद्युपासनं नाम छान्दोग्यादिषूक्तम्—उद्गीथावयवे प्रणवे रसतमत्व सर्वकामाप्ति समृद्धि प्राण बृहस्पत्यादित्यादिदृष्टिः । आदिपदेन पञ्चविधसामसु पृथिव्यादिलोकदृष्टिप्रभृतयः ग्राह्याः ॥

वेदान्तमात्राध्यायिनः विध्यतिलङ्घित्वादापन्नत्वाद्वा न तत्र व्यभिचारशङ्का । अत्र शांकरे भाष्ये "अधीतवेदान्तस्य" इति वाक्यपरामर्शेन "वर्णाश्रमधर्माणां व्याकुलत्वात्" इति देवताभिकरणवाक्य परामर्शेन च वर्णाश्रमधर्मनियमे अनादरस्तदानींतनम्सूच्यते ॥

एतेन मोक्षसाधनं ज्ञानं प्रमाणजन्यं (वस्तुतन्त्रं) निवर्तकज्ञानत्वान्नेदं रजतमित्यादिबाधज्ञानवदित्यनुमानं, एवं कर्मविचारो न ब्रह्मविचारपूर्ववृत्तः विद्यासमुच्चयानर्हविषयकत्वादित्यनुमानं च प्रमाणोपपत्तिभ्यां बाधितं स्वरूपासिद्धं चे॒युक्तं भवतीति वेदितव्यम् । अत्र पूर्वपक्षोक्तहेतुषट्के सामर्थ्यव्यतिरिक्तं हेतुपञ्चकमाभासीकृतम् । सामर्थ्यं तु महासिद्धान्ते तुच्छीक्रियते इति सक्षेपः ॥

२३. विरोधादिहेतुनिरास

अथैषोऽस्मदीयः विरोधादिहेतुनिरासरूपः लघुसिद्धान्तसङ्ग्रहः—

फलाभिसन्धिराहित्यात्क्रियावानिति मानतः ।
जिज्ञासाचित्तशुद्ध्योश्च चीयमानत्वतोऽन्वहम् ॥

**साधनद्वित्वशून्यत्वात् बन्धसत्यत्वतोऽपि च ।**
**निषिद्धकाम्यव्यर्थेभ्यो निवृत्तेश्शमरूपतः ॥**
**अपेक्ष्यते नियमतो धिया कर्माङ्गना यतः ।**
**उपादेयं ततः कर्म जिज्ञास्यं प्राङ्मुमुक्षुभिः ॥ इति ॥**

अयमर्थः —कर्म न धीसमुच्चितमित्यत्र अनभिसंहितफलत्वात् विरोधहेतुरसिद्धः । क्रियावानिति विनियोजकप्रमाणस्य निरूपणेन द्वितीयोऽप्यसिद्ध. । अङ्गत्वेऽपि चित्तशुद्ध्युपयुक्तत्वस्याभ्युपगमात् तृतीयस्साधारणः । धीः न कर्मसमुच्चितेत्यत्र—समसमुच्चयानभ्युपगमात् ज्ञानमात्रहेतुत्वश्रवणहेतोः सिद्धसाधनं दोषः । मिथ्याभूतवस्तुबाधनपर्याप्तत्वरूपं वस्तुसामर्थ्यमसिद्धमिति महासिद्धान्तसारार्थः । षष्ठोऽपि शमाद्यङ्गकताम्नानरूपः हेतुः शमशब्दस्य निषिद्धकाम्यव्यर्थरूपकर्मनिवृत्तिपरत्वेन भिन्नविषयत्वेन साधारणः । सर्वेषामागमेन बाधश्चेति ध्येयम् । ततश्च मोक्षसाधनं ज्ञानं प्रमाणजन्यं निवर्तकज्ञानत्वात सामान्येन सम्मतवदिति पूर्वपक्षन्यायस्य स्वरूपासिद्धिः, आगमबाधश्चेति दोषः । मोक्षसाधनं ज्ञानं प्रयत्नसाध्यं शास्त्रविहितत्वात् सामान्येन ज्योतिष्टोमादिवत् इति सिद्धान्तन्यायोऽवधेयः ॥

एवं च कर्मणो ब्रह्मविद्याङ्गतयोपादानाय तद्विचारः पूर्ववृत्त इति लघुसिद्धान्तसारार्थः । तत्पूर्वतनस्य सूत्रपदार्थप्रकरणश्रीभाष्यस्य सारार्थस्तु अल्पास्थिरफलतया हानाय तद्विचारः पूर्ववृत्त इति न पुनरुक्तदोष इति विवेकः ॥

## 5. महापूर्वपक्षे प्रतिज्ञाप्रकरम्.

### २४. निर्विशेषं ब्रह्म सत्यम्.

अथ कर्मविचारो ब्रह्मविचारपूर्व वृत्तः, तन्नियतपूर्ववृत्तित्वादित्यनुमानस्य अन्वयव्यतिरेकव्यभिचारपरिहारेणासिद्धिपरिहारेऽपि सत्प्रति-

पक्षलक्षणस्य, कर्मविचारः न ब्रह्मविचारपूर्ववृत्तः ब्रह्मविद्यासमुच्चयानर्ह-विषयकत्वात् अर्थकामादिविचारवदिति लघुपूर्वपक्षसारार्थभूतस्य प्रतिहेतोः स्वरूपासिद्धिपरिहारायोपात्तस्य ज्ञानं न कर्मसमुच्चयार्हं मिथ्याभूतवस्तु-बाधनपर्याप्तत्वलक्षणवस्तुसामर्थ्यादित्यस्य पञ्चमस्य हेतोः विस्तरेणोप-पादनेन स्वरूपासिद्धिनिराकरणाय महापूर्वपक्षप्रारम्भः—**यदप्याहुरिति** ॥ अस्य च ज्ञानस्य निवर्तकरूपस्य निरुक्तसामर्थ्यसिद्धये निवर्त्यस्य मिथ्यात्वरूपं वस्तुसामर्थ्यं साधनीयम् । तत्सिद्धये च प्रथममधिष्ठान-भूतस्य ब्रह्मणः सत्यत्वं साधयति –**अशेषेति** ॥ तदुच्यते माध्यमिक-मतनिराकरणावसरे शाङ्करे—"न ह्ययं सर्वप्रमाणप्रसिद्धो लोकव्यवहारः अन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्" इति ॥

अयं भावः—अपह्नवे आरोपितत्वं हेतुः । आरोपे च तत्त्वा-धिष्ठानत्वं हेतुः । दृष्टश्च शुक्तिकादिषु रजतादेः । अपह्नवश्च शास्त्र-सिद्धः । ततश्च सकारणस्य संसारस्य सत्यत्वेन ज्ञानबाध्यत्वाभावान्न तदर्थं शास्त्रमारम्भणीयमित्यत्र तस्य मिथ्यात्वेन धीबाध्यत्वात् तत्प्रधानं शास्त्रं प्रारभ्यमिति हि परेषां वस्तुसामर्थ्योपन्यासः ॥

सिद्धान्ते तु निवर्तकमुपासनं, निवर्त्यं भगवन्निग्रहलक्षणं कर्म, फलमुभयलिङ्गं ब्रह्म । एवं निर्णयः सिद्धव्युत्पत्तिनिबन्धन इति । उपास्यस्य भगवतो निरवद्यमहामहिमवत्त्वात् निस्सीमप्रीतिरूपं निर्व्याजस्वाम्याद्या-स्यैकरुचिगर्भं चेदमुपासनं विविच्यत इति भक्तित्वव्यपदेशः ॥

२५. ब्रह्मातिरिक्तं सर्वं मिथ्या.

तथा चात्र प्रथमेन वाक्येन माध्यमिकमतनिरासाभिप्रायगर्भेण ब्रह्मसत्यत्वं साध्यते । तत्र च निर्विशेषत्वं चिन्मात्रत्वञ्च व्यतिरेकिहेतु-द्वयमुक्तम् । द्वितीयेन वाक्येन तु योगाचारमतनिरासाभिप्रायगर्भेण सर्वस्य

तद्व्यतिरिक्तस्य मिथ्यात्वं सदसद्विलक्षणत्वरूपं साध्यते । तत्रापि ब्रह्मान्यत्वं भिन्नत्वं ज्ञातृत्वं ज्ञेयत्वमित्यादिकं अन्वयिहेतुजातमुक्तम्—**तद्व्यतिरेकीत्यादिना** ॥ अनेन प्राप्यस्वरूपं निवर्त्यस्वरूपञ्च प्रदर्शितम् ॥

अत्र अशेषविशेषप्रत्यनीकत्वं अशेषविशेषनिवर्तकधीगोचरत्वम् । तत्कृतज्ञानं नाम अहङ्काररूपान्तःकरणविकाररूपं कर्मकर्त्रवच्छिन्नं वृत्तिज्ञानं विवक्षितम् । **कल्पितं मिथ्याभूतमिति** ॥ स्वात्यन्ताभाववन्निष्ठतया प्रतीयमानत्वात्सदसद्विलक्षणमित्यर्थः ॥

## 6. श्रुतिप्रकरणम्.

### २६. निर्विशेषब्रह्मसत्यत्वे श्रुतिः.

उक्तप्रथमन्यायानुगृहीतं श्रुतिजातमुदाहरति—**सदेवेति** ॥ इदं वाक्यं लक्ष्यस्वरूपानन्तर्गतत्वे सति व्यावर्तकत्वमितिलक्षणलक्षितेन तटस्थलक्षणेन कारणत्वेन ब्रह्मण उपलक्ष्यत्वप्रतिपादनपरम् । अत्र एवैकाद्वितीयपदैः विजातीयसजातीयस्वगतभेदाः निषिध्यन्ते । भेदनिषेधकण्ठोक्तिमत्कारणवाक्यं—**अथ परेति** ॥ नित्यं विभुं सर्वगतमिति पदैः कालदेशवस्तुपरिच्छेदाः व्यावर्त्यन्ते । सुसूक्ष्मपदेन योग्यानुपलब्धिबाधशङ्काव्यावृत्तिः । अथ स्वरूपाभिन्नेन कल्पितधर्मधर्मिभावरूपोपेतेन स्वरूपलक्षणेन शङ्कितदोषव्यावृत्तिं व्यञ्जयद्वाक्यं—**सत्यं ज्ञानमिति** ॥ अनृतजडपरिच्छिन्नव्यावृत्तिः पदत्रयेण लभ्यते । विशेषतो व्यावृत्तिमत्कण्ठोक्तिः—**निष्कलमिति** ॥ चिन्मात्रपदसूचितं ज्ञेयत्वज्ञातृत्वनिषेधमभिदधद्वाक्यं—**यस्यामतमिति** ॥ **न दृष्टेरिति** च ॥ मननोपासनाद्यविषयत्वं प्रथमवाक्यार्थः । ज्ञानव्यतिरिक्तो ज्ञाताऽपि नास्तीति द्वितीयवाक्यार्थः । अत्र दृष्टेरिति पञ्चमीविभक्तिः । परमप्रेमास्पदत्वादानन्दरूपो जीवः, स्वप्रकाशत्वात्परमार्थश्च, तेन सद्वितीयत्व-

शङ्कां वारयितुं असुखाद्यावृत्तिमाह—**आनन्दो ब्रह्मेति** ॥ जीवोऽपि ब्रह्मानतिरिक्ततयैव आनन्दरूप इति भावः ॥

२७. अतिरिक्तमिथ्यात्वे श्रुतिः.

अथ द्वितीयन्यायानुगृहीतश्रुतिजातमुच्यते—**इदमिति** ॥ चोरः स्थाणुरितिवत् बाधायामत्र सामानाधिकरण्यम् । स्थाणुरेवायं न चोर इति हि तस्यार्थः । बाधस्य कण्ठोक्तिः—**नेहेति** ॥ इह प्रपञ्चे यन्नानात्वं भाति तन्न सत्यमित्यर्थः । भेददर्शनस्य प्रत्यवायोक्त्या भेदनिषेधः—**मृत्योरिति** ॥ भेदस्यासत्त्वे खपुष्पादिवन्न दृश्येत, असतोऽपि दृश्यत्वे खनैल्यवन्नित्यं दृश्येत इत्यत्र बद्धमुक्तदशाभेदेन व्यवस्थामाह—**यत्रत्विति** ॥ **यत्र** यदा, **तत्** तदेत्यर्थः । कार्यमात्रस्य मिथ्यात्वं लोकदृष्ट्या निदर्शितमाह—**वाचेति** ॥ **वाचारम्भणं** वागालम्बनं, व्यावहारिकं, असत्यमित्यर्थः । असत्यत्वं नाम कारणापेक्षया कार्यस्य अनन्यत्वतादात्म्यादिलक्षणं भेदनिषेधात्मकमतिरिक्तसत्ताशून्यत्वरूपं दुर्निरूपत्वापरपर्यायं मिथ्यात्वं सर्वत्रानुगतमस्तीत्यवधेयम् । संसारजनकधीगोचरतया भेदस्य मिथ्यात्वमाह—**यदाहीति** ॥ **उ** इत्यवधारणे । **दरमन्तरं इषद्भेदं** मन्यते इत्यर्थः ॥

२८. उभयत्र सूत्रम्.

निर्विशेषसत्यत्वे सूत्रं—**न स्थानत इति** ॥ नोभयलिङ्गमित्यन्वयः । सविशेत्वं सविशेषत्वे सति निर्विशेषत्वं च नास्ति किन्तु निर्विशेषत्वमेवेत्यर्थः । तदन्यमिथ्यात्वे सूत्रं—**मायामात्रमिति** ॥ इदं स्वप्नविषयमपि दुर्निरूपत्वाविशेषात् कृत्स्नामिथ्यात्वप्रदर्शनपरमिति भावः ॥

## 7. स्मृतिप्रकरणम्.

२९. उपबृंहणं विष्णुपुराणम्.

पाराशर्योक्तमर्थद्वयं पराशरश्लोकाभ्यां संवादयति—**प्रत्यस्तमितेति** ॥ सत्तामात्रमित्यनेन धर्मधर्मिभावभेदस्यापि व्यावृत्तिः । आत्म-

संवेद्यमिति तुच्छत्वव्यावृत्तिः। एतेन निर्विशेषं ब्रह्म सत्यमित्युक्तम्। जगन्मिथ्येत्युच्यते—**ज्ञानस्वरूपमिति** ॥ **अर्थस्वरूपेण** कृत्स्नप्रपञ्चात्मना विभिन्नरूपेणेत्यर्थः। अत्र प्रथमः श्लोकः विष्णुपुराणोपसंहारस्थः (६ ७-५३) केशिध्वजेन खांडिक्यायोपदिष्टः। द्वितीयस्तूपक्रमस्थः (१-२-६) नमस्कारश्लोकः। **परमार्थ** इत्यर्धेनोभयमुच्यते वराहस्तुतिचतुःश्लोक्याम्। (१-४-३८) नान्योस्तीत्यस्य विवरणम्—**यदेतदिति** पद्यद्वयम् ॥ अत्र मूर्तपदं स्वरूपार्थकं विधेयसमर्पकम्। ज्ञानात्मकं ज्ञानाभिन्नं प्रपञ्चं अर्थात्मकं ज्ञानभिन्नं पश्यन्तीति पद्यद्वयार्थः। परमार्थस्त्वमित्यस्य विवरणं—**येत्विति** पद्यद्वयम् ॥ एकमयमित्यत्र मयट् स्वार्थिकः। एकाकारं यद्विज्ञानं ततोऽसौ परमार्थः इत्यर्थः। अत्र प्रथमं पद्यं चतुःश्लोकीगतम्। (१-४-४१)। अपरमादिभरतवाक्यम्। (२ १४-३१)। अथ जीवानामैक्यम्—**यद्यन्य इति** ॥ (२-१३-९०)। अत्र निदर्शनं—**वेण्विति** ॥ (२-१४-३२) उपदिष्टस्यार्थस्याप्तिः—**इतीरित इति** ॥ (२-१६-२४)। अथ तेषां जीवानां ब्रह्मैक्यम्—**विभेदेति** ॥ (६-७-९६).

३०. भगवद्गीता.

स्पष्टार्थतया पुराणोक्तिमुक्त्वा जीवैक्ये ब्रह्मैक्ये अन्यमिथ्यात्वे च इतिहासोक्तयः—**अहमात्मेति** ॥ **आदिभिरिति** भूयोऽनुग्रहन्यायसूचनार्था। (१०-२०, १३-२, १०-३९)

## 8. अविद्याप्रकरणम्.

३१. स्वरूपमनिर्वचनीयम्.

नन्वेतेषु मिथ्याशब्दो न दृष्टः। भेदनिषेधादितात्पर्यतस्तत्सिद्धावपि मिथ्यात्वस्यासत्त्वरूपत्वे निवर्त्याभावेन मिथ्याभूतवस्तुबाधनपर्याप्तरूपहेतोरसिद्धिस्तदवस्था, अन्यथाख्यातिगोचरत्वरूपत्वे क्वचित्सत्यत्व-

प्रसङ्गात्, ब्रह्मव्यतिरिक्तसर्वनिवर्तकत्वासिद्ध्याऽसिद्धिस्स्युस्था, अत आह— **मिथ्यात्वं नामेति** ॥ प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं मिथ्यात्वमिह विवक्षितम् । तदेव हि सदसद्विलक्षणत्वम् । तदेवोच्यते— **प्रतीयमानत्वेति** ॥ ज्ञानप्रागभावब्रह्मणोः दळद्वयेन क्रमेण व्यावृत्तिः । ततश्च सच्चेन्न वाध्येत, असच्चेन्न प्रतीयेत इति अत्र युक्तिः ॥

इदमत्र मूलं आनन्दबोधीयप्रमाणमालायामुदाहृतं मण्डनमिश्रीयब्रह्मसिद्धिव्याख्यायाः ब्रह्मतत्त्वसमीक्षायाः वाचस्पतिमिश्रीयायाः वचनम्—"एतदेवोपजीव्य प्रतीतिबाधान्यथानुपपत्तिः प्रवृत्तिबाधान्यथाऽनुपपत्तिश्चेत्यर्थापत्तिद्वयमपि तद्वादिनं प्रत्यभिधातव्यम्" इति । तदेतद्वचनमनुसृत्य इष्टसिद्धाविदमुक्तम्—

**सत्त्वे न भ्रान्तिबाधौ स्तो नाऽसत्त्वे ख्यातिबाधने ।**
**सदसद्भ्यामनिर्वाच्याऽविद्या वेद्यैस्सह भ्रमः ॥** इति ॥

अत्र भ्रमः वेद्येस्सह अविद्येत्यन्वयः । तथाच विषयः विषय्यप्याविद्यक इत्यर्थः । एतेनासत्ख्यातिनिरासः । अतएवालीकाकारविकल्पविज्ञानोदय इत्युच्यते । **एवमिति** ॥ दोषेत्यादिपदैः निरुक्तार्थद्वयातिदेशः । **इदं** प्रतीयमानमित्यर्थः ॥

३२. तिरोधानम्.

**दोषश्चेति** ॥ अविद्यायाः दोषत्वार्थं तिरोधानादिशक्तिमत्त्वं, निवृत्त्यर्थमनिर्वचनीयत्वं, अनवस्थापरिहारार्थमनादित्वं चोक्तम् । **विक्षेपः** विशेषप्रतिभासः । आच्छादिका विक्षेपिका चेति विभागश्च स्वरूपतः स्वभावतश्चेति केचित् । आकारभेदादित्यन्ये । अवस्थाभेदादित्यपरे ॥

३३. प्रमाणम्.

तत्रादौ तिरोधाने प्रमाणम्—**अनृतेनेति** ॥ **प्रत्यूढाः** प्रतिरुद्धाः । जीवभेदविवक्षया बहुवचनम् । एतस्य विवरणं पूर्ववाक्यम्—

**तेषामिति** ॥ अनिर्वचनीयत्वे मानं—**नासदिति** ॥ तमश्शब्दार्थ-स्पाष्ट्याय – **मायामित्यादि**वचनद्वयम् ॥ मायामिति विधेयपदम् । अनादित्वे मानं—**अनादीति** ॥ विशिष्टो वाक्यार्थः—**निर्विशेषेत्यादिः** ॥ यत इति पूरणम् ॥

३४. विष्णुपुराणं प्रमाणम्.

अत्रोपबृंहणं —**यथोक्तमिति** ॥ वस्तुपदं देवादिपरम् । **विज्ञानं** अविद्या । भेदस्याविद्याकार्यत्वेऽन्वयमुक्त्वा व्यतिरेकमाह—**यदेति** ॥ **सङ्कल्पः** अविद्या । विजातीयभेदनिषेधः—**तस्मादिति** ॥ सजातीय-भेदनिषेधः—**विज्ञानमिति** ॥ स्वगतभेदनिषेधः—**ज्ञानमिति** ॥ **विशुद्धं विमलं** अविद्यातत्कार्यरहितम् । **सदैकं** वृद्ध्यादिरहितम् । नेदं पर-मतं—**सद्भाव इति** ॥ भुवनाश्रितं यत्सांव्यवहारिकं सत्यत्वं तत्राप्य-विद्यैव कारणमुक्तमित्यर्थः । इयं पञ्चश्लोकी (२-१२) भुवनकोशदश-श्लोक्यन्तर्गता ॥

३५ निवृत्तिः निवर्तकं च.

एवं मिथ्याभूतवस्तुबाधनपर्याप्तत्वहेतौ मिथ्याभूतत्वमुपपादि-तम् । अथ बाध्यबाधकभावमुपपादयन् असिद्धिं निराह—**अस्याश्चेति निवृत्तिर्युक्तेत्यन्तेन** । तत्र प्रथमं प्रमाणमाह—**न पुनरिति** ॥ एकं पश्यतीति यत्ततो न मृत्यवे इत्यर्थः । अत्र कारणनिवृत्त्या कार्यनिवृत्तिः—**न पश्य इति** ॥ कार्यनिवृत्त्या कारणनिवृत्तिसूचनं **यदाहीति** ॥ **आत्म्यं** शरीरं **निरुक्तिः** नाम । **अभयं** भयाभावाय। अव्ययीभावः । पर्याप्तत्वोपपादनाय कर्मणोपि निवर्त्यतामाह—**भिद्यते इति** ॥ पर्याप्त-त्वकण्ठोक्तिः—**ब्रह्म वेदेति** ॥ **तमेवेति च** ॥ पूर्वमिदं वक्यद्वयं ज्ञान-स्यैव मोक्षसाधनत्वायोदाहृतमिति न पौनरुक्त्यम् । मृत्युपदव्याख्या—**अत्रेति** ॥ अथ ज्ञानस्य विषयनिरूपणेन पर्याप्तत्वनिष्कर्षः—**सत्य-**

**मित्यादि सिद्धमित्यन्तम्** ॥ अत्र निर्विशेषत्वं शोधकवाक्यसिद्धम् । ऐक्यं—**अथ य इति** वाक्यसिद्धम् । अभ्योपदेश.—**तत्त्वमिति** ॥ अथ देवतां प्रत्युक्तिः—**त्वं वा इति** ॥ स्वस्मिन्ननुसन्धानं—**तद्योह-मिति** ॥ अथ सूत्रकृतः सूत्रविदश्च सम्मतिः **वक्ष्यतीति** ॥ **तन्नि-ष्पत्तेः** ॥ तस्मिन्नध्यस्तत्वादित्यर्थः ॥

## 9. शास्त्रप्राबल्यप्रकरणम्.

### ३६. बाध्यबाधकभावनिर्णयः.

एवंविधस्य निर्विशेषब्रह्मात्मैक्यबोधकस्य शास्त्रस्य प्रत्यक्षविरुद्ध-त्वेन अप्रामाण्यात्तज्जन्यज्ञानस्य बाधकत्वाभावेनासिद्ध्याशङ्कां शास्त्रस्य प्राबल्योपपादनेन प्रामाण्यं व्यवस्थाप्य निराह - **नन्वित्यादिना तस्मा-त्सदनुभूतिरेवेत्यन्तेन** ॥ **प्रत्यक्षविरुद्धेति** ॥ **क्रियते** विषयीक्रियते इत्यर्थः । भेदावगाहिप्रत्यक्षविरोधान्न कथञ्चित् निर्विशेषचिन्मात्रब्रह्मै क्यावबोधकं शास्त्रं प्रमाणं स्यादिति भावः ॥

अत्र यत्र प्रत्यक्षत्वं न तत्र बाध्यत्वमिति नियमोऽभिमतः । अन्यथा आदित्यो यूपः, पावकोऽनुष्ण इत्यादेरपि प्रत्यक्षबाधकत्वं स्यादिति । अस्य नियमस्य रज्जुसर्पप्रत्यक्षे व्यभिचारं वक्ति—**कथमिति** ॥ अथ यत्र परोक्षत्वं तत्राबाधकत्वमिति नियममभिप्रेत्य शङ्कते—**तत्रेति** ॥ अत्रापि समव्याप्तौ व्यतिरेके यत्र परोक्षत्वाभावः तत्र बाधकत्वमिति नियमे सति रज्जुसर्पप्रत्यक्षे व्यभिचारमभिप्रेत्य प्रतिवक्ति—**तुल्ययो-रिति** ॥ यत्र दुष्टकारणजन्यत्वं तत्र बाध्यत्वमिति नियम इत्याशङ्क्य प्रत्यक्षस्यापि तादृशस्य बाध्यत्वमित्याह—**पूर्वोत्तरयोरित्यादिना** ॥

अथ मूलमूलिभावरहितं तुल्यत्वसहितं दुष्टकारणजन्यत्वं यत्र तत्र बाध्यत्वमिति चेदत्राह—**एतदिति** ॥ **ज्वालेति** ॥ **अयोगात्**

अयोगप्रसङ्गादित्यर्थः । ज्वालैक्यप्रत्यक्षस्यासङ्कूहप्रसङ्ग इति भावः । ज्वालभेदानुमानाकारश्च—प्राथमिकदीपजनकसामग्रीनाशः स्वजन्यदीपनाशवान् दीपजनकसामग्रीनाशत्वात् चरमदीपजनकसामग्रीनाशवत् इति प्रभानिरूपणप्रकरणे तत्त्वटीका ॥

**संभाव्यमानेति** ॥ स्वविषयसत्यत्वमन्तरेणापि स्वरूपलाभलक्षणमन्यथासिद्धत्वं बाध्यताप्रयोजकं, तच्च सावकाशत्वात्, तदपि द्विचन्द्रादिवदप्रमाणकोटिनिवेशार्हत्वात्, अथवा पदाहवनीयादिनयेन अविरुद्धविषयलाभात् । अनन्यथासिद्धत्वं चैतद्विपरीतम् । एवंचाप्रणाणकोटिनिवेशार्हत्वाविरुद्धविषयलाभैतदन्यतरप्रयुक्तसावकाशत्वनिबन्धनान्यथासिद्धत्वं बाध्यत्वौपयिकमिति फलितार्थः । यत्रान्यथासिद्धत्वं तत्र बाध्यत्वमिति निष्कृष्टो नियमः ॥

३७. शास्त्रं प्रबलम्.

प्रकृते शास्त्रस्याप्रमाणकोटिनिवेशार्हत्वप्रयुक्तान्यथासिद्धिमपाकरोति—**तस्मादिति** ॥ सर्गप्रलयकालेष्वप्यानुपूर्व्यविपर्यासादनादिनिधनत्वम् । मन्वन्तरादिष्वप्यनुपप्लवादविच्छिन्नसंप्रदायत्वम् । अपौरुषेयत्वात् स्वतन्त्रानुपूर्व्यनवच्छिन्नत्वरूपात् भ्रमप्रमादाशक्तिविप्रलिप्सारूपदोषसंभावनाऽनर्हत्वम् । अथाविरुद्धविषयालाभनिबन्धनामन्यथासिद्धिमपाकरोति—**निर्विशेषेति** ॥ नित्यत्वं शुद्धत्वादौ सर्वत्रान्वेति । **शुद्धं** वस्तुतोऽविद्यादोषरहितम् । **बुद्धं** अतिरोहितप्रकाशम् । **मुक्तं** कर्मसंबन्धविधुरम् । **स्वप्रकाशं** पराधीनप्रकाशानर्हम् । तच्च चिन्मात्रत्वात् । **ब्रह्मात्मभावः** ब्रह्मण एव प्रत्यगात्मत्वम् ॥

प्रत्यक्षस्य प्रकारद्वयादपि सावकाशत्वादन्यथासिद्धिमाह—**संभाव्यमानेत्यादिना** ॥ **विविधाविकल्पेति** ॥ अनेन विषयान्तरलाभस्सूच्यते ।

"आदित्यो यूपः" इति वाक्यस्य यूपाञ्जनविधि शेषत्वेनान्यपर्यात् न व्यभिचारः निष्कृष्टनियमस्येति भावः ॥

३८. मोक्षशास्त्रं प्रबलं (अपच्छेदनयः).

ननु भेदग्राहिप्रत्यक्षस्यास्यान्यथासिद्धत्वे भेदावलम्बिनः कर्मकाण्डस्याप्यन्यथासिद्धिसंभवाद्बाध्यत्वप्रसङ्ग इत्याशङ्क्य इष्टापत्त्या परिहरति—**नन्विति ॥ पूर्वापरेति ॥** "पञ्चर्त्विजस्समन्वारब्धाः प्रसर्पन्ति अध्वर्युं प्रस्तोताऽन्वारभते । प्रस्तोतारं प्रतिहर्ता । प्रतिहर्तारमुद्गाता । उद्गातारं ब्रह्मा । ब्रह्माणं यजमानः" इति । अस्मिन् प्रयोगे "यदि बहिष्पवमानं प्रसर्पतां प्रस्तोताऽपच्छिद्येत" इत्यादिना विच्छेदप्रायश्चित्तविधौ—"यदि प्रतिहर्ताऽपच्छिद्येत पशुभिर्यजमानो व्यृद्ध्येत सर्ववेदसं दद्यात्, यद्युद्गाता यज्ञेन यजमानो व्यृद्ध्येत अदक्षिणस्स यज्ञः संस्थाप्यः पुनराहार्यः तत्र तद्दद्यात् यत्पूर्वं दास्यन् स्यात्" इति वाक्यविषयकः अपच्छेदन्यायः पूर्वतन्त्रे षष्ठे माञ्चमिकः प्रसिद्धः । तत्र युगपदपच्छेदे विकल्पः । यथा न्यायमाला—

> **समुच्चयो विकल्पो वा प्रायश्चित्तद्वयेऽग्रिमः ।**
> **अदक्षिणत्वं पूर्वस्मिन् प्रयोगेऽन्यत्तु पश्चिमे ॥**
> **प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद्द्वयम् ।**
> **प्राप्तमेकप्रयोगेऽतो विरुद्धत्वाद्विकल्प्यते ॥ इति ॥**

तथा क्रमेणापच्छेदे परस्य प्राबल्यम्—

> **अपच्छेदक्रमे पूर्वः प्रबलस्स्यादुतोत्तरः ।**
> **असञ्जातविरोधेन पूर्वेणोत्तरबाधनम् ॥**
> **निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया ।**
> **न बाधकान्तरं तस्य तेन प्रबलमुत्तरम् ॥ इति ॥**

तदुक्तं "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" (६—५—५४) इति। पूर्वापरापच्छेदयोः पूर्वस्य दुर्बलत्वं, कुतः? आख्यातेन योऽर्थः कर्तव्य इत्युच्यते तत्रैतदनुबद्धं यथा शक्येत तथेति। तत् पूर्वविज्ञानबाधेन शक्यते! नान्यथा। तेन पूर्वविज्ञानं बाधित्वा इदं कर्तव्यमिति भवति प्रत्ययः। प्रकृतिवदिति॥ यद्धि प्राकृतं वैकृतेन बाध्यते तत्राप्येतदेव कारणम्, नाबाधित्वा पूर्वविज्ञानं वैकृतं संभवतीति। कर्मशास्त्रस्य पूर्वत्वं च पाठक्रमादर्थक्रमात् प्राक् त्रिवर्गप्रावण्याच्च ज्ञेयम्॥

३९ निर्गुणवाक्यं प्रबलम्.

अथ वेदान्तवाक्येष्वपि सगुणोपासनविधीनां भेदावलम्बित्वात् पौर्वापर्यनियामकविरहात् सगुणवाक्येनैव निर्गुणवाक्यबाधस्स्यादित्यत्राह—**वेदान्तवाक्येष्विति॥ अयमेवेति॥** तेषामुपासनाविधिपरत्वेन उपास्यांशे तात्पर्यविरहात् पूर्वत्वफलभूतः बाधः तात्पर्यसिद्ध इत्यपच्छेदन्यायोऽवतीर्ण एवेति भावः॥

४०. सत्यादिवाक्यविचारः.

अथ स्वरूपपराणां सगुणवाक्यानां पूर्वत्वान्यपर्ययोरयोगात् न बाध्यत्वमित्याशङ्क्य परिहरति—**ननु चेति॥** निषेध्यप्रसंजकत्वेन पूर्वत्वम्, उपास्तिविधिशेषत्वक्लृप्त्या च सार्थक्यमिति भावः। निर्गुणवाक्यत्वेनोपात्तमेव सत्यादिवाक्यं सगुणपरमिति बुद्ध्या चोदयति—**ननु च सत्येति॥** भावप्रधानोऽत्र निर्देशः। प्रतीतिः दुरपह्नवोऽनुभवः। प्रतीतिर्न प्रमितिरित्याह—**नेतीति॥** एकार्थतात्पर्यार्थत्वरूपसामानाधिकरण्येन भेदप्रतीतिः बाध्येत्याह—**सामानाधिकरण्येनेति॥** एकत्वानेकत्वयोः विशेष्यविशेषणस्थत्वात् न विरोध इत्याशङ्कते—**अनेकेति॥** समाधत्ते—**अनभिधानेति॥** देवानांप्रिय इत्यज्ञातनाम्ना-

मुपचारः । अयं भावः—त्रिविधं हि पदानामर्थैक्यम् । प्रकृतिप्रत्ययसमुदायबोध्यं विशिष्टैक्यमेकम् । कारकभेदेऽपि क्रियैक्यवत् प्रधानैक्यात् एकार्थत्वं द्वितीयम् । पदभेदेऽप्यर्थभेदाभावलक्षणं तृतीयम् । तत्राद्यं पदसामान्ये । द्वितीयं व्यधिकरणवाक्ये । तृतीयं समानाधिकरणवाक्ये कोटिद्वयविलक्षणमभिप्रेतमिति । **विशेषणभेदेनेति** ॥ विशेषणानां परस्परं विशेष्याच्च भेदेन विशिष्टभेदेन विशेष्यभेदेन चेत्यर्थः ॥

अथ विशेष्यमात्राभिधाने पदानामन्यूनानतिरिक्तार्थत्वलक्षणं पर्यायत्वं पदान्तरवैयर्थ्यं सामानाधिकरण्यलक्षणभङ्गश्चेति चोदयति— **एवं तर्हीति** ॥ **एकार्थेति** ॥ अयमाशयः—पदार्थोपस्थितिदशायां तत्तद्विशेषणभानेऽपि सामानाधिकरण्यविरोधात् तदभिधानं त्यक्तम् । तत्फलभूतव्यावृत्तिपरत्वं परं स्थितम् । वाक्यार्थप्रतीतिदशायां तत्तद्व्यावृत्त्युपलक्षितस्वरूपमात्रं प्रतीयते । ततश्चैकार्थत्वं सिद्धम् । अनन्तरं च व्यावृत्त्युपस्थितिः धर्म्युपस्थितिश्च मिलित्वा विकारजडादिभ्रमं निवर्तयतः । अयमेव फलतो व्युदासः । यथा प्रत्यभिज्ञास्थले ग्रहणस्मरणे भेदभ्रमं विनिवर्तयतस्तथाऽत्रापीति । ततश्चार्थवत्त्वं निमित्तभेदव्युत्पत्फलैः अपर्यायत्वमेकार्थत्वं चेति ॥

ननु सत्यज्ञानादिवाक्यमप्यन्वयमुखेन उपलक्षणं स्यात्तत्त्वमस्यादिवाक्यवदित्यत्राह—**एतदुक्तमिति** ॥ कारणत्वेनोपलक्षितस्य ब्रह्मणः स्वरूपविशोधनप्रकरणत्वात् पुनरुपलक्षणकथनमयुक्तमित्याशयः । **अपित्विति** ॥ यथा व्यावृत्तिः स्वत एव स्वेतरव्यावृत्तिस्तथा ब्रह्मस्वरूपमपि सकलेतरविरोधित्वात् स्वयं व्यावृत्तिः । मण्डनमिश्रीयः भावाद्वैतपक्षस्तु भीरुकल्पित इति भावः ॥

तत्र भावान्तराभावपक्षं निदर्शयति—**यथेति** ॥ कार्ष्ण्यपीतिमरक्तिमाद्यनेकव्यावृत्तिरूपं शौक्ल्यं प्रतिबन्दितयाऽभिमतम् । **अपर्यायमिति** ॥ यस्य पदत्रयस्य मिथः पदानि पर्याया न भवन्ति तदपर्यायमिति विग्रहः । **तस्मादिति** ॥ शास्त्रस्य प्राबल्यात्तज्जन्यज्ञानस्य बाधकत्वसम्भवात् मिथ्याभूतवस्तुबाधनपर्याप्तत्वहेतोर्नासिद्धिरिति भावः ॥

सत्यादिवाक्यस्य सगुणपरत्वे कारणवाक्यविरोधमाह—**एवमिति** ॥ कारणवाक्योक्तस्वरूपशोधकस्य वाक्यस्य तच्छेषतया तदेकार्थकत्वं युक्तम् । "यस्सर्वज्ञस्सर्ववित्" इत्यादिकारणवाक्यान्तरे गुणोक्त्या तदैकार्थ्यं स्यादित्याशङ्कायां अनुक्तार्थस्वीकारफलसर्वशाखाप्रत्ययन्यायेनात्रापि निर्गुणब्रह्मसिद्धौ अपच्छेदनयमुपजीव्य कारणशोधकवाक्ययोरैकार्थ्यसम्भवे मिथः कारणवाक्यानां किमुतेत्याशयेनाह—**तत्रेति** ॥ **अद्वितीयत्वेति** ॥ सम्राडद्वितीय इत्यादौ समनिषेधार्थकत्वेऽप्यत्रावधारणाभ्यां सजातीयविजातीयनिरासौचित्यात् समनिषेधसिद्धेः परिशेषात् गुणनिषेधः प्राप्त इति भावः । शोधकान्तरं च विरुध्येतेत्यत्याह—**अन्यथेति** ॥ सामानाधिकरण्यसामर्थ्यात् कारणवाक्यैकार्थ्यात् शोधकवाक्यान्तरैकार्थ्याच्चेत्यर्थः । **अखण्डैकरसं** अखण्डैकस्वभावं नित्यनिर्विशेषस्वप्रकाशस्वभावमिति यावत् ॥

अथ "ब्रह्मविदाप्नोति परम्" इत्यनन्यथासिद्धफलकरणदर्शनकल्पितविधिशेषतया सत्यादिवाक्यस्य विशिष्टविधितात्पर्ये सम्भवति न लक्षणा न्याय्येत्यभिप्रायेण चोदयति—**ननु चेति** ॥ विशेष्यांशात्यागेऽपि विशेषणांशत्यागात् न शक्तिः, किन्तु लक्षणेति भावः । मोक्षसाधनीभूताविधेयवाक्यार्थज्ञानानुवादितयाऽन्यथासिद्धे विधिकल्पनायोगात् तात्पर्यार्थविरुद्धत्वाच्च मुख्यार्थसम्भवे लक्षणाऽनुगुणैवेत्यभि-

प्रायेण परिहरति—**नैष दोष इति** ॥ तात्पर्यस्थापकस्य मुख्यस्य कस्यचिद्वाक्यांशस्य पदस्यादर्शनात् लक्षणैव न स्यादित्यभिप्रायेण पुनराशङ्का—**ननु चेति** ॥ तात्पर्यस्थापकानां प्रकरणादीनामन्यतमेन सामानाधिकरण्येन तात्पर्यव्यवस्थितेः अन्यस्यादर्शनमकिञ्चित्करमिति समाधिः—**ततः किमिति** ॥ **न दोषायेति** ॥ विषं भुङ्क्ष्व इत्यादौ निषिद्धभोजनं न कर्तव्यमित्यर्थे सर्वपदलक्षणाऽपि दृश्यत इति भावः ॥

४१. कार्यवाक्यार्थवादः.

अत्र परीक्षकसम्मतिमाह—**तथा चेति** ॥ एते हि वाच्यापूर्ववादिनः प्राभाकराः, न तु कल्प्यापूर्ववादिनः कौमारिलाः । वृद्धव्यवहारोपक्रमा वेदावसाना कार्यमुखेनापूर्वकार्यप्रधाना व्युत्पत्तिस्तत्सम्मता । तत्र कृतिसाध्यत्वविशिष्टकृत्युद्देश्यत्वरूपकार्यत्वविशिष्टे कार्ये अपूर्वे नियोगापरपर्याये वैदिकलिङादेश्शक्तिः । क्रियालक्षणे कार्ये तु प्रवृत्तिनिमित्तैकदेशेन कृतिसाध्यत्वमात्रेण लोके लक्षणा । स्वर्गकामो यजेतेत्यत्र स्वर्गसाधनं यागविषयकं स्वर्गकामनियोज्यकं कार्यमित्यध्याहृतेन स्वर्गसाधनरूपार्थेन सह प्रथमं बोधः । ततश्चापूर्वे कृतिसाध्यत्वं यागे कृतिसाध्यत्वमन्तराऽनुपपन्नमिति अनुपपत्तिज्ञानरूपोपादानसहकृतेन शब्देन स्वर्गसाधनं स्वर्गकामनियोज्यको यागः स्वर्गकामकृतिसाध्य इत्यौपादानिको यागविशेष्यको बोधः । गामानयेत्यादौ गवानयनं कार्यं कृतिसाध्यमिति बोधः । एवं च वेदवाक्ये अपूर्वकार्यान्विते स्वस्वार्थे सर्वेषा कारकपदानां शक्तिः । लोके तु क्रियाकार्यान्विते । शब्दस्य कार्यपरत्वात् अपूर्वकार्यान्वयांशत्यागात्सर्वत्र लक्षणेष्टा । इति ॥

## 10. प्रत्यक्षाविरोधप्रकरणम्.

४२ प्रत्यक्षं सन्मात्रग्राहि.

एवं प्रत्यक्षस्य दौर्बल्यं प्रसाध्य शास्त्रस्याप्रामाण्यशङ्कां परिहृत्य तज्जन्यज्ञानस्य बाधकत्वं प्रसाध्य सामर्थ्यलक्षणस्य मिथ्याभूतवस्तु-बाधनपर्याप्तत्वहेतोरसिद्धिः निराकृता। ज्ञानं न कर्मसमुच्चयार्हमिति प्रतिज्ञा निर्व्यूढा। अथ शास्त्रस्य प्रत्यक्षविरोधाभावेनाप्रामाण्यशङ्कां परिहृत्य निरुक्तप्रतिज्ञा निरूह्यते। तथाहि—

**कल्पनापोढमभ्रान्तं प्रमाणं निर्विकल्पकम्।**
**विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः॥**

इत्यस्य स्वलक्षणरूपविशेषमात्रग्राहिनिर्विकल्पकप्रत्यक्षवादपरस्य धर्मकीर्तिश्लोकस्य प्रतिपक्षतया—

**आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।**
**नैकत्वे आगमस्तेन प्रत्यक्षेण विरुध्यते॥**

इति ब्रह्मसिद्धौ मण्डनमिश्रः प्राह। तस्यायमर्थः—प्रत्यक्षं विधातृ विधायकं न निषेद्धृ न निषेधकं सामान्यग्राहि न विशेषग्राहीत्यर्थः। सन्मात्रग्राहि, न भेदग्राहीति यावत्। शास्त्रमपि निर्विशेषसन्मात्रग्राहि। तथा च तयोरेकत्वे ग्राह्यैकत्वे सति आगमः प्रत्यक्षेण न विरुध्यते शास्त्रप्रत्यक्षयो र्विरोधो नास्तीत्यर्थः। सोऽयं सामान्यमात्रग्राहिनिर्विकल्पकप्रत्यक्षप्रामाण्यवादः अन्यत्र निरूपितः॥ (मान. ३५०)

४३. भेदे प्रमाणानुपपत्तिः तर्कः.

प्रत्यक्षं न शास्त्रविरुद्धं सन्मात्रग्राहित्वादिति युक्तिरुक्ता। तत्र स्वरूपासिद्धिमाशङ्क्य निराह— **ननु चेति। तथैवात्र विविच्यत**

**इति** ॥ सर्वेषु भ्रमेषु अधिष्ठानाध्यस्तव्यवहारांशयोः यथा विभागः तथैवात्र व्यवहारद्वये विविच्यत इत्यर्थः ॥

नभःस्तलमलिनत्वादाविव अत्र स्वारसिकबाधाभावेपि यौक्तिकं बाधं वक्तुं प्रमाणानुपपत्तिमाह—**घटोऽस्तीति** ॥ सामान्यविशेषात्मकयोः अस्तित्वघटत्वरूपयोः स्वरूपभेदयोरैक्यम्? उत भेदः? इति विकल्पः । आद्यपक्षप्रतिषेधः—**घटोस्तीति** ॥ तद्भेदः तत्संबन्धितया ततोन्यत्वेनोल्लिख्यमानः घटत्वादिलक्षणः भेदः । अस्तिघटशब्दयोश्चापर्यायतया व्युत्पत्तेः तदर्थयोर्भेदः अवश्यमभ्युपेयः । तथाच भिन्न इति व्यवहार इव घट इति व्यवहारेऽपि घटस्य पटाद्यावृत्ततया प्रतीतौ प्रतियोगिसापेक्षत्वात् घटव्यवहार एव भेदव्यवहार इत्यर्थः ॥

भेदपक्षे प्रत्यक्षमुभयमन्यतरद्वा गृह्णातीति विकल्पः । तत्राप्याद्यपक्षे युगपत् क्रमेण वेति विकल्प्य यौगपद्यपक्षं प्रतिक्षिपति—**नचेति** ॥ भेदग्रहणस्यानुयोगिग्रहणपूर्वकत्वनियमात् स्वरूपस्यैवात्रानुयोगित्वात् यौगपद्यासम्भव इत्यर्थः । क्रमेण ग्रहणपक्षं प्रतिक्षिपति—**प्रत्यक्षेति** ॥ भेदपक्षे द्वितीयविकल्पमन्यतरग्रहणरूपं स्वेष्टं परिशेषयति—**तत्रेति** ॥ **अत इति** ॥ अनुपपन्नतैकवेषायां भ्रान्तौ क्रमयौगपद्यादिपरामर्शानवकाशात् भेदव्यवहारोऽन्यथोपपद्यत इति भावः ॥

### ४४ भेदरूपप्रमेयानुपपत्तिः तर्कः.

एवं भेदे प्रमाणानुपपत्तिमुक्त्वा सन्मात्रग्राहित्वं प्रत्यक्षस्य समर्थितम् । अथप्रमेयानुपपत्तिरूपं अनुकूलतर्कं तत्रैवाह—**किंचेति** ॥ स्वरूपं धर्मो वेति विकल्पे प्रथमं निरस्यति—**भेदस्तावदिति** ॥ अयमाशयः—स्वरूपस्य भेदत्वे तद्ग्रहे कथं भेदाग्रहः, तदभावे कथंतरां संशयविपर्ययादिः । तदभावे कथंतमां बाधकसाध्यं किंचित्स्यात् । तथाच

सर्वेभ्यो भेदव्यवहार एव स्यादिति । अत्र प्रसङ्गान्तरं—**हस्त इति** ॥ स्वरूपभेदशब्दयोः घटभेदशब्दयोर्वा पर्यायत्वं स्यादिति वक्तव्ये घटभिन्नशब्दयोः पर्यायताप्रसङ्गोक्तेरयं भावः--घटस्य स्वरूपमेव भेदश्चेत् घटस्य भेदसंबन्धित्वेन अनुयोगित्वात् भिन्नत्वात् भिन्नशब्दपर्यायताप्रसङ्ग इति । चकारेण भेदशब्दस्समुच्चीयते ॥

धर्मपक्षे धर्मभूतो भेदः स्वरूपेणाभिन्नो भिन्नो वेति विकल्प्य आद्यं निरस्यति--**धर्मत्व इति** ॥ **अन्यथा** भेदाभावे धर्मधर्मिभावो न स्यात्, स्वरूपपक्षोक्तदोषश्च स्यात् । द्वितीयं निरस्यति—**भेदेचेति** ॥ **तस्यापिभेदस्तद्धर्म इति** ॥ तस्य धर्मतया स्वीकृतस्यापि भेदस्य स्वरूपापेक्षया यो भेदः सोऽपि तस्य धर्मतया स्वीकृतस्य भेदस्य धर्म इत्यर्थः । ग्रहणद्वारापि दोषमाह --**किञ्चेति** ॥ तज्जातीयत्वातज्जातीयत्वतद्गुणकत्वातद्गुणकत्वविशेषणत्वविशेष्यत्वधर्मत्वधर्मित्वादावपि भेदग्रहेऽन्योन्याश्रयत्वमभिप्रेत्य जात्याद्युक्तिः ॥

### ४५ तर्कानुग्राह्यमनुमानम्.

एवं प्रत्यक्षस्य सन्मात्रग्राहित्वेन शास्त्रविरोधं परिहर्तुं भेदे साधकप्रमाणाभाव उक्तः। अथ तदनुगृहीतेन भेदस्यापारमार्थिकत्वसमर्थनरूपेण बाधकप्रमाणेन विरोधं परिहृत्य शास्त्रजन्यस्य अनुभूत्यात्मकनिर्विशेषसन्मात्रब्रह्मविषयकस्य ज्ञानस्य मिथ्याभूतवस्तुबाधनपर्याप्तत्वहेतावसिद्धिं निराकरोति—**किञ्चेति** ॥ अत्र सत् परमार्थः अनुवर्तमानत्वात्, घटादयोऽपरमार्थाः व्यावर्तमानत्वादिति विवक्षितस्यानुमानद्वयस्य पक्षसिद्धिमाह—**घटोऽस्तीति** अनुभूत्यनुवृत्तिप्रदर्शनं सदनुभूत्यैक्याधानार्थम् । स्वरूपासिद्धिं व्याप्यत्वासिद्धिं च व्युदस्यति—**अत्रेति** ॥ **परमार्थसती** व्यावहारिकावस्थयेति शेषः ॥

अनुवर्तमानत्वं नाम उत्तरोत्तरप्रतीतिविषयेषु विद्यमानत्वम् । व्यावर्तमानत्वं तेष्वविद्यमानत्वम्। सत्त्वमनुवर्तते । घटत्वादिकं व्यावर्तते । अत्र धर्मधर्मिणोर्भेदो न विवक्षितः ॥

इदमत्रावधेयम्—अस्मिन् सिद्धान्ते विवरणकृन्मतरीत्या सत्तात्रैविध्यमभ्युपगम्यते पारमार्थिकसत्ता व्यावहारिकसत्ता प्रातिभासिकसत्ता चाति। आद्या बाध्यत्वसामान्याभावरूपा। द्वितीया व्यवहारकालाबाध्यत्वे सति बाध्यत्वरूपा । तृतीया व्यवहारकालेऽपि बाध्यत्वरूपा । बाध्यत्वं निषेधप्रतियोगित्वम् । आद्या ब्रह्मस्वरूपा द्वितीया घटपटादिरूपा तृतीया रज्जुसर्पादिरूपा । अत्र पूर्वं पूर्वं सत्त्वमधिकं परंपरं न्यूनम् ॥

तथाच इह सिषाधयिषितं पारमार्थ्यमधिकसत्ताकत्वरूपम् । अपारमार्थ्यं न्यूनसत्ताकत्वरूपम् । यथा रज्ज्वपेक्षया व्यावर्तमानं सर्पभूदलनादिकं रज्ज्वपेक्षया न्यूनसत्ताकम्। रज्ज्वादीनां व्यावहारिकं सत्त्वं ह्यधिकम्। सर्पादीनां प्रातिभासिकं सत्त्वं न्यूनम् । एवं सत्पदार्थे पारमार्थिकं सत्त्वं घटाद्यपेक्षयाऽधिकम्। घटादेर्व्यावहारिकं सत्त्वं सदपेक्षया न्यूनम्॥

एवं च सत् घटाद्यपेक्षयाऽधिकसत्ताकम्, तदपेक्षयाऽनुवर्तमानत्वात् । घटादयः सदपेक्षया न्यूनसत्ताकाः, तदपेक्षया व्यावर्तमानत्वात् रज्ज्वादिवत् सर्पादिवच्चेति सामान्येनोदाहरणम् । ततश्च ब्रह्मणो न रज्जुतुल्यतापत्तिः रज्जोर्वा पारमार्थ्यापत्तिरिति ॥

## ४६. अनुमानस्य निरुपाधिकत्वम्

अत्र क्रमेण बाधितत्वाबाधितत्वे उपाधी शङ्कते—**ननु चेति** ॥ अत्र माध्यमिकनयेन घटादितुल्यतया सतोऽपि बाधकस्य सुवचत्वात् अबाधितत्वोपाधेः साधनाव्यापकत्वमित्याशयेनाह—**अत्रत्विति** ॥ बाधितत्वस्योपाधित्वं परिहरति—**घटादाविति** ॥ घटोस्तीत्यत्र घटत्वं भासते,

तद्धि विशेषलक्षणं भेदरूपं घटेतरव्यावृत्तिपदवाच्यमित्यनुभवसिद्धमित्यर्थः । **सा** व्यावृत्तिः **किंरूपा?** किं सत्यसर्पनिवृत्तिवद्भ्रान्तिसिद्धा उत रज्जुसर्पनिवृत्तिवत् प्रमाणसिद्धेति विकल्पः । तत्राद्यः घटपटतादात्म्यस्य पारमार्थिकत्वप्रसङ्गादयुक्त इति द्वितीयं दूषयति—**किमिति** ॥ घटोऽस्तीति प्रतीतेऽर्थे पटाभावः प्रमितश्चेदित्यर्थः । **घटोऽस्तीत्यनेनेति** ॥ नेदं रजतमिति बुद्ध्यभावेऽपि यथा शुक्तिरिति बुद्ध्या रजतबाधः तथेहापीति भावः । एवं पटादिविधौ घटस्यापि व्यावृत्तिर्बोध्या । **बाधफलभूता** नास्तीति धीस्थाप्या **विषयनिवृत्तिः** घटादिविषयाभावः । व्यावर्तमानत्वस्य निरुपाधिकत्वमुपसंहरति—**सेति** ॥ अबाधितत्वस्याप्युपाधित्वं परिहरति—**रज्जुवदिति** ॥ सतोऽपि माध्यमिकयुक्त्या बाधोक्तिः निरधिष्ठानभ्रमासंभवादयुक्तेति भावः । हेतुद्वयफलितमाह—**तस्मादिति** ॥ उक्ततर्कानुग्राह्यं निष्कृष्याह—**प्रयोगश्चेति** ॥

४७. सदेवानुभूतिः

उक्तन्यायेनैव सदनुभूत्योः मिथो व्यावृत्त्याऽपारमार्थ्यं स्यादित्यत्राह—**सैव सतीति** ॥ व्यावृत्तिरसिद्धेति भावः । सत् अनुभूतिभिन्नं विषयत्वात् घटवत् इत्यनुमानमाशङ्कते—**ननुचेति** ॥ प्रमाणतः प्रमेयतश्च भेदस्यानुपपन्नत्वात् साध्याप्रसिद्धिबाधाभ्यां दूषयति—**नैवमिति** ॥ स्वरूपासिद्धिमाह—**अत इति** ॥

## 11. अनुभूतिप्रकरणम्.

४८. अनुभूतिस्वतस्सिद्धा

एवं शून्यवादं निराकृत्य विज्ञानवादं निराकर्तुमुपक्रमते—**सा चेति** ॥ इदमत्रावधेयम्—निर्विशेषसल्लक्षणब्रह्मरूपानुभूतेर्निर्धर्मक-

त्वात् तां पक्षीकृत्यानुमानप्रयोगः कथमिति शङ्का जायते । अयमत्र समाधिः—कल्पितेन धर्मधर्मिन्यायेन व्यवहार इति । अभ्युपगतं चेदं प्रतिवादिभिस्सौगतैः । यथा "सर्व एवायं अनुमानानुमेयव्यवहारः बुद्ध्यारूढेन धर्मधर्मिन्यायेन, न बहिस्सत्तामपेक्षते" इति दिङ्नाग-वाक्यम्. (२५८) न्यायरत्नाकरोदाहृतम् ॥

अथ सल्लक्षणानुभूत्यात्मकसंविद एवात्मत्वमुत्तरत्र सिषाधयिषि-तम् । तत्र हेतूनामसिद्धिपरिहाराय प्रक्रमते—

**याऽनुभूतिरजाऽनन्ताऽमेयाद्यानन्दविग्रहा ।**
**महदादिजगन्मायाचित्रभित्तिर्नमामि ताम् ॥**

इतीष्टसिद्धौ विमुक्ताचार्योक्तक्रमेणोपरितनोऽयमुपन्यासः । येति स्वतस्सि-द्धतां सूचयति । अनुभूतिरिति हेतुगर्भं विशेषणम् । अनुभूतिः स्वत-स्सिद्धा अनुभूतित्वात् इति व्यतिरेक्यनुमानम् । स्वतस्सिद्धत्वं स्वेत-रनिरूपितविषयतानाश्रयत्वम् । अनुभूतित्वमनुभवस्वरूपत्वम् ॥

विपक्षे बाधं दर्शयति—**अन्यत इति** ॥ अनुभूतिर्नानुभाव्या यावत्सत्तं प्रकाशमानत्वात् इति व्यतिरेक्यनुमानान्तरमाह—**किञ्चेति** ॥ अथवा—अनुभूतिः परप्रकाशा भासमानत्वात् इति प्रत्यनुमाने विद्य-मानत्वे सत्यविदितावस्थायोगित्वमुपाधिमाह—**किञ्चेति** ॥ प्रथमपक्षे हेतोरसिद्धिं द्वितीयपक्षे उपाधेस्साधनव्यापकत्वञ्च निरस्यति-—**न हीति**॥

४९. ज्ञानतालिङ्गकानुमानवादः.

असिद्धिं भाट्टमतेनाशङ्कते—**अथैवमिति** ॥ मात्रपदेनानुभूति-र्व्यवच्छिद्यते । तत्र हेतुः—**घट इति** ॥ घटस्यानुभूतिकर्मत्वात् धियः स्वकर्मकत्वविरोधात् तदानीं न भानमिति भावः । तस्यैव विवरणं—**न हीति** ॥ विषयः पृथुबुध्नोदराकारः घटः । तस्य देशकालविशेषसा-

न्निध्यमिदंभावः । **तस्मादिति** ॥ हेतुतया उपाधिनिवृत्तितया च विवक्षितस्य यावत्सत्त्वंप्रकाशमानत्वस्यानुपलब्धिपराहतत्वादित्यर्थः ॥

ननु ग्राहकासिद्धौ ज्ञेयस्यासिद्ध्या सर्वासिद्धिरित्यत्राह—**तदनन्तरमिति** ॥ इयं घटनिष्ठा ज्ञातता घटज्ञानजन्या ज्ञाततात्वात् । पटगतज्ञाततावदिति प्रकाशातिशयलिङ्गकानुमानम् । अत्र लिङ्गपदं कार्यलिङ्गकं उपदेशलिङ्गकं अदृष्टलिङ्गकमिति व्यवहारवत् ज्ञाततालिङ्गकमिति व्यवहारः । अर्थगतप्रकाशस्य प्राकट्यनामकस्य ज्ञातताख्यस्य पुरुषविशेषधीजन्यतया तत्प्रतियोगिकतयैव भानात् न रूपादिवत्साधारण्यप्रसङ्गः ॥

अनुभूतेरन्यतस्सिद्धावननुभूतित्वप्रसङ्ग इति प्रागुक्तं स्मारयन् स्वप्रकाशवादी चोदयति—**एवं तर्हीति** ॥ अन्यतस्सिद्धावित्यर्थः । प्रसङ्गं दूषयितुं प्रसञ्जनीयविपर्ययं प्राकट्यवादी विकल्पयति—**किमिदमिति** ॥ हेतुत्वेनोक्तं स्वसत्ताव्यापकप्रकाशमानत्वकत्वम्? उत साध्यत्वेनोक्तं स्वतस्सिद्धत्वमिति विकल्पः । आद्यमसिद्धिव्यभिचाराभ्यां निरस्यति—**न तावदिति** ॥ हेतोर्दुष्टत्वात्साध्यमपि नेति द्वितीयं निरस्यति—**अत इति** ॥ अनुभूतित्वहेतुना तत्सिद्धिरित्येतत् साध्याप्रसिद्ध्या दूषयति—**अर्थान्तरमिति** ॥

अथ स्वप्रकाशानुभववाद्याह—**तदिदमिति** ॥ **विभवः** स्वव्यतिरिक्तकृत्स्नप्रकाशकत्वम् । तेनानन्यापेक्षत्वसिद्धिः । तेन च यावत्सत्त्वं प्रकाशमानत्वसिद्धिः । तेन च स्वरूपासिद्धिनिरासः, उपाध्यनिवृत्तिश्च । अथ ज्ञाततालिङ्गकानुमानमाश्रयासिद्ध्या दूषयितुं किं प्राकट्यं रूपादिवद्दृष्टं? उत गुरुत्वादिवत्कल्प्यमिति विकल्पमभिप्रेत्य प्रथमं निरस्यति—**अनुभूतीति** ॥ घटादिः प्राकट्याख्यधर्मवान् प्रकटो घटः,

प्रकाशते घटः इति व्यवहारविषयत्वात् सम्मतवदिति कल्पनाकल्पं द्वितीयमर्थान्तरेण दूषयति—**उभयेति** ॥ घटः प्रकाशते घटमनुभवतीत्येकस्य कर्मकर्तृव्यवहारः स्वदते रोचते इत्यादिवत् धातुभेदनिबन्धनो नार्थभेदनिबन्धनः । अङ्गुल्यादिदृष्टान्तेन कर्मकर्तृभावविरोधोऽपि कारकस्थल एव, संयोगस्य द्विष्ठत्वेन स्पर्शासम्भवात् । ज्ञापकस्थले तु दीपादिदृष्टान्तेन स्वपरनिर्वाहरीत्या न विरोधः ॥

**धीरस्तीति मतौ शब्दशब्दे लक्षणलक्षणे ।**
**इष्टः स्वपरनिर्वाहः सर्वमित्यादिधीष्वपि ॥ इति ॥**

५०. मानसप्रत्यक्षवेद्यतावादः.

अथ ज्ञानं मानसप्रत्यक्षवेद्यं क्षणिकात्मविशेषगुणत्वात् सुखादिवदिति नैयायिकमतं निरस्यति—**नापीति** ॥ अनुपलब्धेः कल्पनाऽयोगाच्चेत्यनुषञ्जनीयम् । तेन चानुमानस्य बाधः, अप्रयोजकत्वञ्च दूषणे उक्ते भवतः । क्षणिकत्वात्मधर्मत्वगुणत्वादीनामस्माभिरनभ्युपगमात् हेतुरन्यतरासिद्धः । दृष्टान्तश्च साध्यविकलः ॥

एवमनुभूत्यात्मकस्य संविल्लक्षणस्य ज्ञानस्यानुमेयत्वमानसप्रत्यक्षवेद्यत्वयोरयोगे परज्ञानस्यापि तथात्वेन व्युत्पत्त्याद्यभावेन आगमस्यापि निर्मूलत्वापातात् माध्यमिकमतमानेच्छतां स्वतस्सिद्धत्वपक्ष एव परिशिष्यते इत्याह—**अपित्विति** ॥ अनुमानमप्यस्तीत्याह—**प्रयोगश्चेति** ॥ लाघवाय प्रयोगद्वयमिहाभिमतम् । एकः प्राकट्याभ्युपगमेन द्वितीयस्तदनभ्युपगमेन ॥

अयमत्रत्यो निर्गलितार्थः—अनुभूतिः स्वसजातीयापेक्षानियमरहितस्वप्रकाशा स्वसम्बन्धादर्थान्तरे प्रकाशस्य हेतुत्वात् प्रदीपादिवत् । प्रकाशपदार्थः प्राकट्यं ज्ञातताऽपरपर्यायम् । तथा अनुभूतिः स्वसजाती-

यापेक्षानियमरहितस्वव्यवहारा स्वसम्बन्धादर्थान्तरे व्यवहारहेतुत्वात् पूर्वोक्तवत् । व्यवहारश्च प्रकाशते इत्याकारकः । अत्र हेतुत्वादित्येवालं क्वचिदपि व्यभिचाराभावात् । स्वसम्बन्धादित्यादिविशेषणत्रयोक्तिस्तु तत्कृतविशेषवैशद्यायेति ॥

## 12. विज्ञानवादप्रकरणम्.

### ५१. अनुभूतिर्नित्या.

शाङ्करे (२-२-२८) भाष्ये विज्ञानात्मवादस्य सौगतसम्मतस्य " विज्ञानस्योत्पत्तिध्वंसानेकत्वादिविशेषवत्त्वाभ्युपगमात् " इति वैलक्षण्यं स्वतस्सिद्धत्वाभ्युपगमेऽप्यस्तीति श्रुतिसिद्धः आत्मा न तादृश इति प्रतिपादितमस्ति । तत्र सौगताभिमतक्षणिकत्ववैलक्षण्याय स्वयं प्रकाशत्वेन नित्यतां साधयति—**सेयमिति** ॥ अनुभूतिर्नित्या स्वयंप्रकाशत्वात् व्यतिरेकेण घटादिवदिति प्रयोगः । नित्यत्वमुभयान्तशून्यत्वम् । ननु संवित्प्रागभावध्वंसयोः प्रत्यक्षसिद्धत्वात् बाध इत्यत्राह—**प्रागभावाभावादिति** ॥ तयोः कल्पितत्वात् प्रत्यक्षं भ्रम इति भावः । अतो न यथाश्रुतेन साध्याविशेषाशङ्का । **स्वतस्सिद्धत्वादेवेति** ॥ अनेन मानाभावोऽभिप्रेतः । अत्र धीः तद्भिन्नं वा मानम्? आद्ये सा सती वा गृह्णाति असत्यपि वेति विकल्प्य आद्यं विषयाभावात् अन्त्यं विषय्यभावाच्च निरस्यति—**अनुभूतिरिति** ॥ द्वितीये प्रतियोगिनं विषयीकृत्य नवेति विकल्प्य आद्यं वेद्यत्वविरहात् अन्त्यं प्रतियोगिधीविरहाच्च निरस्यति -**नापीति** ॥

### ५२. अनुभूतिर्निर्विकारा.

अथोत्पत्तिकारणीभूतप्रागभावाभावात् उत्पत्त्यभावं प्रसाध्य तेन व्यतिरेकिणा विकाराभावं साधयति सविकारत्ववैलक्षण्याय—**अत**

**इत्यादिना ॥ प्रतिबद्धाः** व्याप्याः । **भावविकाराः** "षड्भावविकारा भवन्तीति वार्ष्यायणिः जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति" यास्कनिरुक्ते प्रारम्भे पठ्यते । अत्र धीरुत्पत्तिराहिता उत्पत्तिकारिणीभूतप्रागभावाद्यभावात् सम्मतवत् इति प्रथमः प्रयोगः । धीर्निर्विकारा अनुत्पन्नत्वात् व्यतिरेकेण घटादिवदिति द्वितीयः प्रयोगः ॥

५३ अनुभूतिनिर्विशेषा.

अथानेकत्वरूपसजातीयभेदवत्त्ववैलक्षण्याय धीस्सजातीयभेद रहिता अनुत्पन्नत्वात् व्यतिरेकेण घटादिवदिति प्रयोगमभिप्रेत्याह— **अनुत्पन्नेयमिति ॥ व्यापकेति ॥** नानात्वव्यापकोत्पत्तिविरुद्धानुत्पत्त्युपलब्धेरित्यर्थः । अत्र परमाणुभिर्व्यभिचारस्तदनभ्युपगमपरास्तः । अत्र सजातीयस्वगतविजातीयभेदाः क्रमेण निरस्यन्ते । भेदपदार्थश्च—

**स्वरूपमेव वस्तूनां परस्परविलक्षणम् ।**
**नानात्वं तत्सुसंवेद्यं भेद इत्यभिधीयते ॥**

इति भास्करभाष्योक्तरीत्या तत्तद्वस्तुस्वरूपमेव भेद इत्याभिप्रायेण पूर्व पक्षोपन्यासः । भेदस्यान्योन्याभावरूपत्वे च सजातीयाद्विजातीयात्स्वगताच्च भेदो व्यासिद्ध्यते इति वक्तव्यं स्यात् । तदानीं न भिद्यमानापह्नवः, अपि तु भेदापह्नवस्स्यात् । प्रथमः पक्षः जरदद्वैति सम्मतः । द्वितीयस्त्वभिनवसम्मतः । फलतस्तूभयोरविशेषः ॥

प्रागुक्तव्यतिरेकसाध्ययोरन्वयिनमप्याह—**भेदादीनामिति ॥** आदिना विकारान्तरपरिग्रहः । सजातीयभेदा विकाराश्च नानुभूतिधर्माः अनुभाव्यत्वात् रूपादिवदिति भावः ॥

अथानुभूतौ जडत्वविकारनानात्वादिनिषेधात् स्वयंप्रकाशत्वनित्यत्वैकत्वादिभिः सधर्मत्वापत्त्या व्याघात इत्याशङ्क्य कल्पितैस्तादृशैर्हेतु

साध्यव्यवहारेऽपि वस्तुतो निर्धर्मत्वरूपं स्वगतभेदराहित्यमाह—**अत इत्यादि** ॥ धीर्निर्धर्मा आनुभवस्वरूपस्वात् व्यतिरेकेण घटवादिति ॥

## 13. अहमर्थानात्मवादप्रकरणम्.

### ५४. ज्ञातुरनात्मता.

अथ निर्धूतनिखिलभेदत्वात् ज्ञातृलक्षणाश्रयाख्यविजातीयभेद-राहित्यमाह—**यत इति** ॥ ज्ञाता कल्पितः—अनात्मा संविदतिरिक्त-त्वात् घटादिवदिति प्रयोगः ॥

### ५५. संविदात्मता.

एवं प्रसाधितेन निर्विशेषत्वेन स्वप्रकाशत्वेन अजडत्वेन च व्यतिरेकित्रयेण संविदो जिज्ञासितमात्मत्वं साधयति—**स्वप्रकाशरू-पेति** ॥ अनुभूतिरात्मा निर्विशेषत्वात् स्वयंप्रकाशत्वात् अजडत्वाद्वा व्यतिरेकेण घटादिवदिति प्रयोगाः । **व्याप्तं** व्यापकमित्यर्थः ॥

अस्यानुमानत्रयस्य तार्किकमतेन बाधमाशङ्कते—**नन्वेति** ॥ अयमाशयः—अहं जानामीत्यनुभवः सर्वसम्मतः । अत्रात्मनो ज्ञाना-श्रयत्वं भासते न तु ज्ञानत्वमिति । आत्मनो ज्ञातृत्वं भ्रान्तिसिद्धं ज्ञातृत्वस्वरूपत्वात् देहादेः ज्ञातृत्ववदिति युक्त्याऽनुभवस्य भ्रान्तत्व-माह—**नैवमिति** ॥ अत्र ज्ञानांशस्य सत्यत्वेऽपि आश्रयांशस्यासत्य-तया विशिष्टस्य कल्पितत्वे निदर्शनमाह—**रजततेवेति** ॥

ननु शुक्तौ रजतत्वभानेऽपि आपणस्थरजते रजततेव देहे-बाधिताऽपि ज्ञातृताऽऽत्मनि स्यादित्यत्र स्वरूपज्ञानाश्रयत्वं वा कर्मकर्त्र-वच्छिन्नज्ञानाश्रयत्वं वा ज्ञातृत्वमिति विकल्प्य आद्यमात्माश्रयदोषेण निरस्यति—**अनुभूतेरिति** ॥ कर्तृत्वमाश्रयत्वं जनकत्वं वा । द्वितीयं

निरस्यति—**अत इति** ॥ अयमाशयः—कर्मकर्त्रवच्छिन्नज्ञानाश्रयत्व-रूपं ज्ञातृत्वं नात्मधर्मः भ्रान्तपुरुषप्रतीतिसिद्धत्वात् मनुष्यत्वादिविशिष्ट पिण्डत्वाश्रयत्ववदिति । स्वरूपासिद्धिं परिहरति—**ज्ञातृत्वं हीति** ॥ प्रागुक्तानुभाव्यत्वहेतुनाऽपि ज्ञातृत्वस्यात्मधर्मत्वं प्रतिषेधति—**दर्शीति**॥

५६. अहमर्थस्यानात्मता.

अथ कर्तृत्वमात्मधर्मः आत्मासाधारणाहंत्वसमानाधिकरणत्वात् अनुभूतित्वादिवत् । अहं कर्ता इत्यनुभवेन पक्षधर्मत्वसिद्ध्या प्रतिरोध इत्यत्राह—**सुषुप्तीति** ॥ अहं कर्तेति धीर्नात्मगोचरा आत्मानुभवावच्छिन्नसुषुप्तिकालवृत्त्यभावप्रतियोगित्वात् सामान्येन घटादिधीरुदाहरणम् । ततश्च प्रतिहेतुः स्वरूपासिद्धः ॥

अथ कर्तृत्वाहंत्वयोः अत्मधर्मत्वाभावे व्यतिरेकि त्रयं प्रसङ्गरूपेणाह—**कर्तृत्व इति** ॥ आत्मा न कर्ता नाहं प्रत्ययगोचरः अजडत्वात् प्रत्यक्त्वात् आत्मत्वाच्च । यत्कर्तृ यच्चाहंप्रत्ययगोचरः तज्जडं पराक् अनात्मा च दृष्टं शरीरादीति भावः ॥

यदि देहस्य अहंत्वं कर्तृत्वं च तर्हि कामित्वकर्तृत्वयोः सामानाधिकरण्येन प्रतीतेः भोक्तृत्वमपि नात्मनः स्यात् । तथाच संसाराभावान्मुक्तिशास्त्रमनारभ्यं स्यादित्यत्राह—**अहं प्रत्ययेति** ॥ **प्रामाणिकाः** चार्वाकव्यतिरिक्ताः । अयमाशयः—अहंत्वं व्यापाराश्रयत्वलक्षणं कर्तृत्वं च देहगतमपि ऐहिकामुष्मिकफलभोक्तृत्वमात्मगतमेवेति यथा मीमांसकादिभिरभ्युपगतं, तथा अनात्मनोऽहमर्थस्य कर्तृत्वेऽपि गतिरिति । अहमर्थकर्तृत्वं न भोक्तृत्वसमानाधिकरणं कर्तृत्वस्वरूपत्वात् देहगतकर्तृत्ववदिति प्रयोगः ॥

वस्तुतस्तु — अभोक्तृत्वेऽप्यात्मानः भोक्तृत्वाध्यासात्तदुक्तिः। मुक्तिशास्त्रञ्च तावन्मात्रस्यापि निवृत्त्यर्थमिति नानारभ्यत्वप्रसङ्गः॥

नन्वहमर्थस्यात्मन्यध्यस्तत्वे शुक्तिस्थतया रूप्यवत् धीस्थतयाऽहमवभासेत, प्रत्युत तद्धर्मतया अहं जानामीति धीर्भाति। तथा च धियोऽहमर्थविकारत्वेन निर्विकारत्वानुमानं बाधितं स्यादित्यत्राह—**एवमविक्रियेति**॥ अहमर्थस्य व्यञ्जकत्वेन व्यञ्जकसामान्यस्वभावनिबन्धनं तथा दर्शनमिति बाधोऽन्यथासिद्ध इत्यर्थः। **यतोऽहंजानामीति**॥ अग्निमत्तया हि धूमवानितिवदयं निर्देशः। ज्ञाताऽयमहमर्थ इति भावप्रधानो निर्देशः। अत्र ज्ञातृत्वाहंत्वे नात्मासाधारणधर्मौ सुषुप्त्यादावभातत्वात् मनुष्यत्वादिवदिति प्रयोगः। स्वरूपासिद्धिं परिहरति— **तत्रहीति**॥

एतावता प्रबन्धेन लघुपूर्वपक्षे कर्मविचारो न ब्रह्मविचारपूर्ववृत्तः ब्रह्मविद्यासमुच्चयानर्हविषयकत्वादित्युक्तस्य प्रतिहेतोः स्वरूपासिद्धिपरिहारायोपात्तस्य मिथ्याभूतवस्तुबाधनपर्याप्तत्वलक्षणस्य वस्तुसामर्थ्यस्य स्वरूपासिद्धिः परिहृता। तदेतद्वस्तुसामर्थ्यं निगमयति—**तस्मादिति**॥ अत्र निर्विशेषं प्राप्यं, नित्यप्राप्ते तस्मिन् नोपासनादिसाध्या प्राप्तिरस्ति। निवर्त्यं मिथ्याभूतमज्ञानम्, तन्निरासे च ज्ञानातिरिक्तं नापेक्ष्यम्। निवर्तकञ्च वाक्यजन्यमैक्यज्ञानम्, तच्च स्वोत्पत्तौ फले वा न कर्मापेक्षते इति वस्तुत्रयसामर्थ्यनिष्कर्षेणासिद्धिपरिहारः। शुद्धमुक्तशब्दौ अविद्यातत्कार्यनिवृत्त्यर्थौ। वाक्यजज्ञानस्य मोक्षसाधनत्वं "प्रत्यक्षसाधना योगाः साङ्ख्याश्शास्त्रविनिश्चयाः" इति नारायणीयवचनेन साङ्ख्यसम्मतामिति प्रागेवोपपादितम्॥ (९१)

९७. पूर्वपक्षसारार्थः.

अयमत्र विशिष्टार्थः—एवं महापूर्वपक्षे प्रथमं निर्विशेषं ब्रह्म

सत्यं जगन्मिथ्या इति प्रतिज्ञाय तत्र श्रुतिस्मृतिप्रमाणं प्रदर्श्य जगतो मिथ्यात्वप्रयोजकं दोषलक्षणमविद्यास्वरूपमुपपाद्य बाधकज्ञानस्य निर्विशेष-चिन्मात्रपरमार्थब्रह्मात्मैकत्वरूपविषयनिरूपणेन बाधकत्वमुपपाद्य मिथ्या-भूतवस्तुबाधनपर्याप्तत्वरूपसामर्थ्यहेतोरसिद्धिरपाकृता ॥

तत्र विषयांशे शास्त्रप्रत्यक्षयोर्विरोधेन शास्त्राप्रामाण्यात्पुनरसिद्धि-माशङ्क्य द्विप्रकारेण विरोधपरिहारेणासिद्धिरपाकृता । तत्र द्वितीये प्रकारे ब्रह्मात्मक सामान्यस्य पारमार्थ्यं विशेषात्मकस्य भेदस्यापारमार्थ्य-लक्षणं मिथ्यात्वं चासिद्धिपरिहारायैव च युक्त्या समर्थितम् । एवं सदनुभूत्योर्भेदे मिथो व्यावृत्त्या मिथ्यात्वापत्तौ पुनरसिद्धिरित्त्यैक्यं प्रसा-धितम् । एवमपि सतः अनुभूत्यविषयत्वेन प्रमाणाभावे शून्यवाद प्रसङ्गेन विषयासिद्धावसिद्धिपरिहाराय स्वतस्सिद्धत्वमुक्तम् । एवं स्वत-स्सिद्धत्वेन नित्यत्वं निर्विकारत्वं निर्विशेषत्वञ्च प्रसाध्य विज्ञानात्मवादः सौगतसम्मतः निराकृतः ॥

ततोऽहमर्थात्मवादं मीमांसकतार्किकमतञ्च निराकृत्य सत एवा-त्मत्वं निरूपितम् । अन्यथा क्षणिकस्य विज्ञानस्य अहमर्थस्य वाऽऽत्मत्वे स्वतो मिथश्च व्यावृत्त्या मिथ्यात्वापत्तौ विषयाभावप्रसङ्गेन प्रागुक्ता-सिद्धिर्दुरुद्धरा स्यादिति विशिष्टार्थः ॥

एवञ्च अत्र प्रबन्धे पञ्चमं प्रकरणमारभ्य त्रयोदशपर्यन्तानि नव प्रकरणानि महापूर्वपक्षे प्रधानभूतानि—प्रतिज्ञाप्रकरणम्, श्रुतिप्रकरणम्, स्मृतिप्रकरणम्, अविद्याप्रकरणम्, शास्त्रप्राबल्यम्, प्रत्यक्षाविरोधः, अनुभूतिप्रकरणं, विज्ञानवादप्रकरणं, अहमर्थानात्मवादप्रकरणम्, इति क्रमेण महाप्रकरणानि नव । अवान्तरविभागास्तु तत्र तत्र सूचिताः ॥

यद्यपि सिद्धान्ते अनेनैव क्रमेण विचारः कर्तव्यः । तथापि सङ्गतिलक्षणसन्निकर्षविशेषदृष्ट्या क्रमानादरः, विचित्रत्वात्पुंसामभिप्राय-पद्धतेः । तथाच सिद्धान्तेऽयं क्रमः—पञ्चमदशमैकादशद्वादशत्रयोदश-नवमषष्ठसप्तमाष्टमानां समाधानानि नव प्रकरणानीत्यवधेयम् ॥

इति महापूर्वपक्षः.

## 14. महासिद्धान्तः–प्रतिज्ञानिरासः

५८. निर्विशेषं ब्रह्माप्रामाणिकम्.

अथ पराभिमतस्य सिद्धान्तस्यानुपपन्नतां स्वाभिमतस्योपपन्नतां च प्रतिजानन् बहुशास्त्रज्ञानां बहुग्रन्थकृतां बहूनां स्खलनासंभवं सम्यज्ज्ञानसामग्रीवैकल्यप्रदर्शनेन परिहरति—**तदिदमित्यादिना** ॥ तदिदं परोक्तमुपायादित्रितयम् । आरभ्यन्त इति यदप्याहुः तदिदमनादरणीय-मित्यन्वयः । **कल्पितमितीत्यन्तेन** परमर्यादाया अनुपपन्नताप्रतिज्ञा, **न्यायेत्यादिनो**पपन्नताप्रतिज्ञा स्वमर्यादायाश्च सूच्यते । पूर्वपक्षे निष्कर्षितस्य प्राप्यस्य निवर्त्यस्य निवर्तकस्य च स्वरूपं निष्प्रमाणकं चेत् प्रागुक्तवस्तुसामर्थ्यहेतुरसिद्धो भवतीति निर्विशेषलक्षणस्य प्राप्यस्या-प्रामाणिकतामाह—**तथाहीति** ॥ विगीतं वस्तु प्रमाणसामान्याभाववत् यावद्विशेषाभाववत्त्वात् यो यदीययावद्विशेषाभाववान् स तत्सामान्या-भाववान् यथा निर्घटं भूतलमिति भावः । सामान्यतः स्वरूपासिद्धिं परि-हरति—**सविशेषेति** ॥ अनेन पूर्वपक्षारम्भे प्रोक्तस्य ब्रह्म सत्यं निर्वि-शेषत्वादित्यनुमाने स्वरूपासिद्धिरुक्ता भवति ॥

अथ स्वानुभवरूपेणापरोक्षाख्यप्रमाणेन निर्विशेषवस्तुग्राहकत्वे-नाभिमतेन विशेषाभावकूटरूपहेतोरसिद्धिमनूद्य प्रतिक्षिपति—**यास्त्वति**॥

इदमहमदर्शमिति पदत्रयेण विषयाश्रयस्वगतविशेषप्रदर्शनम् । **विशिष्टविषयत्वात्** सविशेषतया भासमानत्वादित्यर्थः । ततश्च तेन न स्वरूपासिद्धिरिति भावः ॥

अथ धीर्निर्विशेषा धीत्वादिति व्यतिरेकिणा ज्वालाभेदानुमानेनेव सर्वानुभवबाध इत्याशङ्कां तेनैव हेतुना सविशेषत्वसिद्ध्या निरस्यति—**स इति** ॥ **अनुभूयमानः** भासमानः । पक्षस्वरूपस्य हेतुत्वे स्वरूपासिद्धिः, साध्यसंदेहः साधनाकाङ्क्षा च न स्यादिति—**सत्तातिरेकिभिरिति** ॥ स्वरूपातिरिक्तं भासमानत्वादिकं व्यभिचारान्न हेतुरिति—**स्वासाधारणैरिति** ॥ सर्वनिषेधको हेतुः स्वपरनिर्वाहकनीत्या रजतकनकवच्च स्वात्मनोऽपि निवर्तकस्स्यादित्यत्राह—**अत इति** ॥ कारकस्थले तथात्वेऽपि ज्ञापकस्थले केनचिद्विशेषेण तत्सामान्याभावसाधने विरोध एवेत्यर्थः ॥

कल्पितैरेव धर्मैर्हेतुसाध्यव्यवहारस्तु अयुक्तः—साध्यस्य कल्पितत्वे सिद्धसाधनप्रसङ्गात् । हेतोः कल्पितत्वे बाधकप्रमाणाभावेन सविशेषत्वप्रसङ्गात् । अपिच बाह्यार्थशून्यवादिनं प्रति कल्पितेन व्यवहारसंभवेऽपि बाह्यार्थसत्यवादिनं प्रति कल्पितेन व्यवहारः आत्मानमेव जिघत्सति ॥

एवं धीर्निर्विशेषा धीत्वादित्युक्तस्यैवानुमानस्याबाधितविपरीताभ्युपगमेन बाधमाह—**धिय इति** ॥ अयमाशयः—निर्विशेषत्वं कर्मकर्त्रवच्छिन्नस्य ज्ञानस्य उत स्वरूपज्ञानस्येति विकल्पः । तत्र किञ्चित्कर्मककिञ्चित्कर्तृकव्यवहारानुगुण्यापादकत्वं धीत्वम् । स्वकर्मककिञ्चित्कर्तृकव्यवहारानुगुण्यापादकत्वं स्वप्रकाशत्वम् । एवंविधं धीत्वं स्वप्रकाशत्वं च धियः स्वयंप्रकाशत्वसाधनाय परेण हेतुतया साध्यतया

चाभ्युपगते इति प्रथमविकल्पे बाधस्सुस्थः । स्वरूपज्ञानरूपात्मानुभवोऽपि प्रत्यक्त्वैकत्वानुकूलत्वरूपेणैवात्मावगाहीति तत्रापि बाधस्सुस्थ इति । अत्रोपलब्धेरित्यनन्तरं सिध्यतीति शेषः ॥

सौगतवैलक्षण्यायाभ्युपगतैः नित्यत्वैकत्वादिधर्मैः पूर्वपक्षग्रन्थोक्तानुमानेषु साध्यभूतैः बाधमाह—**स्वाभ्युपगताश्चेति** ॥ तेषां धर्मिरूपत्वे सिद्धसाधनम् । अतिरिक्तत्वे सविशेषतेति भावः ॥

अथ बलीयस्त्वेनाभ्युपगतेन शब्दरूपप्रमाणेनासिद्धिं वारयति—**शब्दस्य त्विति** ॥ पदस्य वाक्यस्य चानेकपदार्थसंसर्गावगाहिधीजनकत्वात् विशिष्टविषयतैवेत्यर्थः ॥

५९. निर्विकल्पकसविकल्पकविचारः.

अथ प्रत्यक्षप्रमाणेन स्वरूपासिद्धिं वारयति—**प्रत्यक्षस्येति** ॥ सविकल्पकं सविशेषविषयमिति सर्वसम्मतम् । निर्विकल्पकन्तु निर्विशेषविषयमिति प्रायेण वदन्ति । तदपि सविशेषविषयं स्वगोचरजात्यादिविशिष्टवस्तुविषयप्रत्यवमर्शलक्षणस्मरणरूपसविकल्पकबुद्धिहेतुत्वात् प्रत्यभिज्ञाहेतुभूताभिज्ञावदिति । तादृशवस्तुनः स्मरणं नाम जात्यादेर्नानाव्यक्तिसंम्बन्धरूपायामनुवृत्तौ भासमानायां प्राग्दृष्टव्यक्तिविषयीकरणम् । अयमर्थ —अयं घट इति प्राथमिके पिण्डग्रहणे आकारलक्षणे घटत्वे एतद्घटसंबन्धो भासते । तादृशग्रहणजनितसंस्कारवतः पुंसः पुनरयमपि घट इति द्वितीयादौ पिण्डग्रहणे घटत्वे संस्कारमहिम्ना पूर्वघटसम्बन्धः सन्निकर्षेणोत्तरघटसम्बन्धश्च भासते । एतादृशानेकव्यक्तिसम्बन्धरूपानुवृत्त्यवगाहानवगाहाभ्यामेव भेदः प्रथमद्वितीयज्ञानयोरिति । अयं च मार्गः प्राभाकरसंमतः प्रकरणपञ्चिकायामुपपादितः ॥

स्वलक्षणमात्रग्रहणं निर्विकल्पकमिति विशेषमात्रवस्तुवादिनस्सुगताः प्राहुः । सन्मात्रग्रहणं तदिति सामान्यमात्रवस्तुवादिनः मण्डनादयः वेदान्तिनः । सम्मुग्धग्रहणं तदिति सामान्यविशेषलक्षणवस्तुद्वयवादिनः सांख्यादयः । सामान्यविशेषयोः स्वातन्त्र्येण ग्रहणं निर्विकल्पकमित्याहुर्वैशेषिकादयः ॥

तत्र सामान्येनेदमनुमानम्—निर्विकल्पकं यावद्विशेषरहितविषयं निर्विकल्पकपदबोध्यत्वलक्षणयोगरूपसमाख्याशालित्वात् यद्यादृशसमाख्यावत् तत्तादृशं यथा निर्गन्धं वस्तु इति ॥

तत्र प्रत्यनुमानमिदम्—प्रथमाक्षसन्निपातजं ज्ञानं विशिष्टविषयं ज्ञानत्वात्सम्मतवदिति । अनेन विशिष्टविषयकत्वाभावे प्रत्यक्षत्वाभावप्रसङ्ग इति बाधकतर्कसचिवेन प्रतिरोधः । तेन योगरूपसमाख्यायाः निरीहादिपदवत् सङ्कोचेनान्यथोपपत्त्या स्वरूपासिद्धिः । सङ्कोचस्तु निरुक्तानुवृत्तौ ज्ञेयः ॥

ननु विगाता धीः विशेषणधीपूर्विका विशिष्टविषयकत्वेसति बुद्धित्वात् दण्डीति बुद्धिवदित्याशङ्कायामाह—**संस्थानरूपेत्यादि** ॥ अयं भावः—विशेषणं द्विविधम्—विशेष्यापृथक्सिद्धं तद्विलक्षणं चेति । आद्यं जातिगुणादि । अन्त्यं दण्डकुण्डलादि । प्रथमस्थले एकयैव सामग्र्या विशेषणं विशेष्यं च गृह्यते । द्वितीयस्थले भिन्नयाऽपि। तथा च निरुक्तानुमाने भिन्नसामग्रीवेद्यवस्तुगोचरत्वमुपाधिः । किंच हेतुतावच्छेदकं विशिष्टविषयकत्वं व्यर्थं व्यवच्छेद्याप्रसिद्धेः । अनेनैवानुमानेन तात्सिद्धावन्योन्याश्रयः, व्यवच्छेद्यासिद्धौ सविशेषणहेतुसिद्धिः । तत्सिद्धौ व्यवच्छेद्यसिद्धिरिति ॥

९०. भेदाभेदवादः.

अथ धर्मधर्मिणोर्भेदाभेदवादिमते निर्विकल्पकमभेदपक्षे निर्विशेषवस्तुविषयकं, सविकल्पकं भेदपक्षे सविशेषवस्तुविषयकं भविष्यतीति तेन स्वरूपासिद्धिशङ्कां वारयितुं धर्मधर्मिणोर्भेदाभेदपक्षं प्रतिक्षिपति— **अत एवेति** ॥ दर्शनादनुमानाद्वा भेदाभेदसमुच्चय इति विकल्प्याद्यमसिद्धत्वात् द्वितीयं भेदग्रहेण बाधितत्वाच्च निरस्तमित्याह—**इदमिति** ॥ तत्राद्यं विवृणोति—**तथाहीति** ॥ **सकलेतरव्यावृत्तं** गृह्यमाणासाधारणाकाररूपेतरभेदविशिष्टमेवेत्यर्थः । **प्रतीतेरिति** ॥ निश्चीयत इति शेषः ॥

भेदाभेदवादिना घटपटादीनां परस्परं भेदाभेदसमर्थने युगपदेकत्र भावाभावव्याहतिः अभेदो जात्यात्मना भेदो व्यक्त्यात्मनेत्याकारद्वयेन परिहृता । तत्राभेदो जातिगतः भेदो व्यक्तिगत इति । तर्हि एकस्य न द्व्यात्मकतेति शङ्काऽपि जातिव्यक्त्योर्मिथः भेदाभेदाभ्युपगमेन निरस्ता । तत्रापि व्याहतिः दर्शनेन दूरीकृता "वस्तुनो विरोधः क्वचिदुपलम्भनिरस्तः" इति । तस्यैवोत्तरत्रोपालम्भः सिद्धान्ते "अतो वस्तुविरोधः प्रतीतिपराहत इति प्रतीतिप्रकारनिह्नवादेवोच्यते" इति ॥

द्वितीयं विवृणोति—**सर्वत्रेति** ॥ अयमाशयः—व्यक्त्यादयो जात्याद्यभिन्नाः अभेदेन प्रथमग्रहविषयत्वात्, स्वोपलम्भव्याप्योपलम्भविषयत्वलक्षणसहोपलम्भनियमात्, एको घट इति एकशब्दानुविद्धप्रत्ययविषयत्वात्, मत्वर्थप्रत्ययनिरपेक्षसमानाधिकृतपदबोध्यत्वाच्चेति चतुर्विधा हेतवः ॥

एतेषां निरासोऽत्राभिप्रेतः—इदमित्थमित्येव सर्वत्र प्रतीत्यनुभवात् प्रथमो हेतुरसिद्धः । सहोपलम्भनियमः स्वरसतो भेदसाधकत्वात्

विरुद्धः । एको दण्डीत्याद्येकशब्दानुविद्धप्रत्ययविषयत्वं दण्डपुरुषयोस्सत्त्वादनेकान्तम् । खण्डो गौरित्यादौ मत्त्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यस्य अपृथक्सिद्धत्वप्रयुक्तत्वादर्थान्तरत्वेनाप्रयोजकता । विशेषणविशेष्यभावेन सर्वेषां सत्प्रतिपक्षता चेति । अपृथक्सिद्धत्वेऽपि क्वचिन्मत्त्वर्थप्रत्ययः निष्कर्षकशब्दत्वविवक्षानिबन्धनः गोत्ववान् गुणवान् शरीरीत्यादौ ॥

ननु सहधीनियमस्य दण्डादिष्वदृष्टस्य गोत्वादौ दर्शनात् अभेदस्स्यादित्यत्राह—**इयानिति** ॥ अयमाशयः—यथा भिन्नत्वाविशेषेऽपि क्वचिदेवाभेद इति ते स्वभावनियमः तथा तादृशेष्वपि केषुचिदेवापृथक्सिद्धिः, अतो दुरतिक्रमस्वभावेन निर्धूयतेऽतिप्रसक्तिः ॥

एवं भेदाभेदे दर्शनमनुमानं च निरस्तम् । सोऽयमनेकान्तवादलक्षणः भेदाभेदवादः सूत्रकारेणाऽर्हतमतनिरासेन निराकृत इत्याह—**तदेतदिति** ॥

अथाप्रामाण्यसाधकस्य यावद्विशेषाभावहेतोरनुमानप्रमाणेनासिद्धिं वारयति—**अतः प्रत्यक्षस्येति** ॥

पूर्वं स्वानुभवस्य निर्विशेषत्वसाधकयुक्तेरुक्तं दूषणं सर्वप्रमाणानामपि विषयेऽतिदिशति—**वस्तुगतेति** ॥ प्रतिज्ञाविरोधलक्षणेन बाधेन युक्तिर्दुष्टेति भावः । एवं निर्विशेषवस्तुनिराकरणेन सविशेषसर्ववस्तुस्थापनेन ब्रह्म सत्यं जगन्मिथ्या इति प्रतिज्ञाद्वयं निर्मूलितम् ॥

## 15. प्रत्यक्षाविरोधनिरासः.

### ६१. भेदग्रहणसमर्थनम्.

अथ पूर्वपक्षे शास्त्रप्रत्यक्षयोरविरोधप्रकरणे (१०) सन्मात्रग्राहिप्रत्यक्षविचारोऽनूदितोऽपि प्रत्यक्षमूलसर्वप्रमाणानां सविशेषविषयत्व-

व्यवस्थापनप्रकरणेन तन्निराकरणं सुसङ्गतमिति सन्मात्रग्राहिप्रत्यक्षपक्षं प्रतिक्षिपति—**यत्तु प्रत्यक्षमिति** ॥ पूर्वपक्षे स्वरूपभेदलक्षणयोः सामान्यविशेषयोः अस्तित्वघटत्वात्मकयोः भेदमभ्युपगम्य स्वरूपलक्षणसामान्यस्यास्तित्वस्य प्रत्यक्षग्राह्यता स्वीकृता, अनुपपत्तयश्चोद्भाविताः । सिद्धान्ते भावान्तराभाववादमाश्रित्य संस्थानलक्षणगोत्वादिजातेरेव भेदव्यवहारगोचरत्वमुपेत्य तस्यैव स्वपरनिर्वाहकत्वं चाङ्गीकृत्य सर्वविधदोषाणां परिहारः प्रोक्तः ॥

एवं सन्मात्रग्राहिप्रत्यक्षनिराकरणेन प्रकृते प्रामाण्याभावसाधकस्य यावद्विशेषाभावरूपस्य हेतोरत्राप्यासिद्धिशङ्काऽपास्ता । पूर्वपक्षाभिमते शास्त्रजन्यज्ञानात्मके पक्षे कर्मसमुच्चयानर्हत्वसाधकस्य मिथ्याभूतवस्तुबाधनपर्याप्तत्वरूपसामर्थ्यहेतोः प्रत्यक्षविरुद्धत्वेन शास्त्राप्रामाण्यात् असिद्धिरपि स्थापिता भवति । प्रत्यक्षं न शास्त्रविरुद्धं सन्मात्रग्राहित्वादिति पूर्वपक्षग्रन्थोक्तहेतोरप्यसिद्धिरुक्ता भवति ॥

### ६२. सन्मात्रग्रहणेऽनुपपत्तिः.

एवं विशेषलक्षणभेदग्राहकस्य अबाधितप्रत्यक्षप्रमाणस्य तद्विषयस्य संस्थानरूपजात्यात्मकभेदस्य च दुरपह्नवत्वात् भेदे प्रमाणानुपपत्ति प्रमेयानुपपत्तिलक्षणतर्कस्य वक्ष्यमाणानुमानप्रमाणानुग्राहकस्यासिद्धिमुक्त्वा सन्मात्रग्राहिप्रत्यक्षपक्षे विरोधपरम्परामाह । तत्र प्रतीतिविरोधः—**अपिच सन्मात्रेति** ॥ व्यवहारविरोधः—**यदिचेति** ॥ शब्दव्यवस्थाविरोधः—**सर्वास्विति** ॥ प्रतीतिविरोधविशेषः—**किञ्चारव इति** ॥ **स्मृतिवैलक्षण्यं** स्मृत्यपेक्षयाऽनुभवस्य वैलक्षण्यमित्यर्थः ॥ प्रतिपत्त्यविशेषे विरोधः—**सर्वेषामिति** ॥ आगमानर्थक्यम्—**निर्विशेषेति** ॥ अतः प्रत्यक्षं विशिष्टविषयमेष्टव्यमिति प्रकरणार्थः ॥

ननु किमियान् कोलाहलः? प्रत्यक्षं हि द्विविधं निर्विकल्पकं सविकल्पकं चेति । तत्र निर्विकल्पकमेव प्रमाणं तदेव सन्मात्रग्राहि । सविकल्पकं सर्वमप्रमाणं कल्पिताकारग्राहि । कल्पना च द्रव्यगुणकर्मसामान्यनामभेदेन पञ्चप्रकारा । दण्डी श्यामः गच्छति पुमान् देवदत्त इत्यादौ प्रसिद्धा । सेयं प्रक्रिया सौगतसम्मता श्लोकवार्तिकशास्त्रदीपिकादौ विस्तृता । एतादृशेन सविकल्पकेन लौकिकस्सर्वो व्यवहार उपपद्यत इति प्रागुक्तविरोधपरंपरापरिहारः । तत्र सौगतैः वैभाषिकाभिधानैः दिङ्नागधर्मकीर्त्यादिभिरेवं पठ्यते—

**कल्पनाऽपोढमभ्रान्तं प्रमाणं निर्विकल्पकम् ।**
**विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः ॥ इति ॥**

विकल्पः सविकल्पकम् । उपप्लवः भ्रमः । इयांस्तु विशेषः—वैभाषिकैः स्वलक्षणं विशेषरूपं निर्विशेषं निर्विकल्पकस्य विषय इत्युच्यते । अस्माभिस्तु सामान्यलक्षणं निर्विशेषं सन्मात्रपदवाच्यं विषय इत्युपेयते इति ॥

नैतद्युक्तम्—यतः वैभाषिकसिद्धान्तस्याबाधितसर्वप्रमाणप्रतिहतत्वेन भिक्षुपादप्रसरणन्यायेन शून्यवादाङ्कुरभूतत्वेन च भवद्भिरपि प्रतिक्षिप्तत्वात्तादृशमार्गानुसरणेन भेदापह्नवः विश्वापह्नवे पर्यवस्यतीति ॥

### ६३. संस्थानमेव जातिः भेदश्च

प्रत्यक्षस्य विशिष्टविषयकत्वे विशेषणं संस्थानरूपं जातिपदवाच्यं निर्वक्तुं अतिरिक्तजातिवादे दर्शनं कल्पनं च हेतुद्वयेन निरस्यते—**संस्थानेति** ॥ जातिसामान्यव्यक्तिव्यावृत्त्यादिशब्दवत् अनुगतव्यवहारोऽन्यथासिद्ध इति न जातिकल्पक इति भावः । शब्दानुगमस्तु वस्तुसौसादृश्यनिबन्धनः ॥

अथ संस्थानमवयवव्यूह इति चेत् आत्मादावव्याप्तिः । स्वरूपं चेत् न विशिष्टविषयं प्रत्यक्षम् । अनुभयं चेदस्मन्मतं स्यादित्यत्राह— **संस्थानं नामेति** ॥ स्वशब्दो धीस्थपरः ॥ **रूपमपृथक्सिद्धं विशेषणम्** ॥

अथ संस्थानस्यैवान्योन्याभावलक्षणभेदरूपतामुमपादयति- **जाति-ग्रहणेनेति** ॥ **व्यवहारसंभवादिति** ॥ प्रतियोगिनिरपेक्षस्य भावस्य घटादेः तत्सापेक्षशब्दवाच्यत्वं घटाभावाभावव्यवहारे दृष्टम् । तथाच धर्मत्वं भ्रमासहत्वं च घटत्वादिजातिस्वरूपस्य भेदत्वे प्रयोजकं, न तच्छून्यस्येति नातिप्रसंगावकाशः । **तदपेक्षत्वादिति** ॥ तत्पदं प्रति-योगिधीपरम् । तदपेक्ष्यत्वादिति पाठे भिन्न इति व्यवहारपरम् । एतेन पूर्वपक्षोक्तस्तर्कोऽपाकृतः ॥

### ६४. अनुमाननिरसनम्.

एवं भेदे प्रमाणप्रमेयानुपपत्तिलक्षणं तर्कं निराकृत्य तदनुग्राह्य-मनुमानमसिद्धयितुमनुवदति—**यत्पुनरिति** ॥ सोपाधिकत्वबाधितत्व-विरुद्धत्वानि प्रपञ्चमिथ्यात्वविषयकसर्वानुमानसाधारणानि दूषणानि । प्रतिपन्नोपाधौ बाधितत्वमुपाधिः । धर्मिग्राहकमानेन प्रत्यक्षादिना सत्य-त्वावगाहिना बाधः । साध्यसाधनसत्यत्वमिथ्यात्वविकल्पफलभूतः विरोध इति दूषणत्रयनिष्कर्षः ॥

प्रकृते घटादयोऽपरमार्थाः व्यावर्तमानत्वात् रज्जुसर्पवदित्यत्र बाधितत्वमुपाधिः । स हि यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः तस्मिन् देशे तस्मिन्नेव काले तस्याभावः प्रतिपन्नश्चेत् बाधित-त्वम् । ततश्च तस्याभावलक्षणा व्यावृत्तिः । मिथ्याभूतरज्जुसर्पादेस्तु तादृशं बाधितत्वमस्तीति तस्य साध्यव्यापकत्वम् । धर्मिग्राहकमानबाधेन घटादेस्तन्नास्तीति साधनाव्यापकत्वं च । निरुक्तव्यावर्तमानत्वमेव

मिथ्यात्वप्रयोजकम् । न तु सामान्यतो व्यावर्तमानत्वं देशान्तरकालान्तरायत्तम् । घटोऽस्तीत्यत्र पटादेः प्रतीयमानमपि न बाधफलभूतविषयनिवृत्तिलक्षणमिति भावः ॥

सत् परमार्थः अनुवर्तमानत्वादित्यत्र सिद्धसाधनमित्याह— **यस्त्वनुवर्तमानत्वादिति** ॥ अपि चायं हेतुः स्वरूपासिद्धः, यतः प्रमाणसंबन्धार्हत्वलक्षणव्यवहारयोग्यताया एव सत्त्वरूपत्वात् तस्याश्च तत्तद्वस्तुविशेषरूपतैवेति अनुवर्तमानं सद्रूपं वस्त्वेव नास्तीति ॥

**अनुभूतिसद्विशेषयोरिति** ॥ सत् अनुभूतिभिन्नं विषयत्वात् घटवदित्यनुमानं पूर्वपक्षे साध्याप्रसिद्धिबाधस्वरूपासिद्धिभिः दूषितम् । अत्र दोषत्रयं परिहृतमिति भावः ॥

## 16. अनुभूति निरूपणम्.

### ६५. स्वतःपरतस्सिद्धत्वम्.

पूर्वपक्षे योगाचारसंमतं विज्ञानवाद मनसि निधाय निर्विषया निराश्रया निर्विकारा नित्या स्वप्रकाशा संविदभिधानाऽनुभूतिरात्मभूता द्रव्यधातुरेकैव परमार्थेति प्रसाधितम् । सा ह्यविद्ययाऽन्तःकरणवृत्तिद्वारा घटादिविषयसंसर्गवतीव भातीति च अभिप्रेतम् ॥

सेयं कल्पना विज्ञानवादपरिष्कारूपा अबाधितप्रत्यक्षादिसकलप्रमाणविरुद्धेति प्रत्यक्षादिप्रमाणानुरोधेन सविषयसाश्रयसविकारानित्यज्ञानसंवेदनानुभवादिपदवाच्यानि विज्ञानानि अनन्तानि । तेषामाश्रयभूताः कर्तृस्थानीयाः आत्मानः जन्तुसत्त्वजीवपदवाच्या अप्यनन्ताः । घटादयश्च विज्ञानविषयभूताः कर्मपदवाच्या अनन्ताः । तथाच परमार्थसकर्तृकसकर्मकसकरणकज्ञानवादः योगाचारविज्ञानवादं अविद्यावाद्यनुभूतिवादं

च लक्षीकृत्य प्रवर्तते इति प्रकरणार्थः । सोऽयं वादः प्रमाता प्रमाणं प्रमेयं प्रमा इति "चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते" इति वात्स्यायनेनाप्यनूदितः ॥ (१-१-१)

सामान्यतस्सर्वेषां वादिनां प्रायेण विज्ञानपदाभिधेयं स्वतस्सिद्धं स्वप्रकाशं स्वविषयव्यवहारे परानपेक्षमिति संमतम् । तत्र सर्वं सर्वत्र सर्वदा सर्वथेति न वक्तुं युक्तम्, संविद्विरोधात् । अतः ज्ञातुराश्रयस्य विषयप्रकाशनवेलायामिति सिद्धान्तिनामाशयः । तमेवाह—**यत्त्वनुभूते-स्त्वयमिति** ॥ ततश्चानुभूतिः स्वतस्सिद्धाऽनुभूतित्वादित्यनुमानं सिद्ध-साधनदोषदुष्टमिति भावः । वेलायामेव ज्ञातुरेवेत्यंशद्वयं विशेषः सिद्धान्ते बोध्यः । ततश्चानुभूतेः स्वतः परतश्च प्रकाश्यत्वमुपगतम् ॥

अथानुभूतेः परतः प्रकाश्यत्वाभावगोचरमनुभूतिरननुभाव्या अनु-भूतित्वरूपात् सत्तयैव प्रकाशमानत्वादित्यनुमानं दूषयति—**अनुभूतेरनु-भाव्यत्व इति** ॥ अनुभाव्यत्वं परप्रकाश्यत्वम् । लौकिकवैदिकव्यवहार-विरोधप्रदर्शनम्—**स्वगतेति** ॥ एतेनाप्रयोजकत्वमुक्तम् । अथ बाधं वक्ति—**नचान्यविषयत्वे इति** ॥ अनुभाव्यत्वं साधारणाकारः । अनुभूतित्वं विशेषाकारः । न खलु तयोर्विरोध इत्यनुभूतित्वं निर्वक्ति—**अनुभूतित्वं नामेति** ॥ व्यवहारप्रयोजकविषयतावत्त्वलक्षणस्य प्रकाश-मानत्वमात्रस्योक्तौ घटादावतिव्याप्तिरतः—**स्वाश्रयं प्रतीति** ॥ स्वाश्रय-कर्तृकव्यवहारप्रयोजकविषयतावत्त्वमात्रोक्तौ अदृष्टलक्षणधर्माधर्मयोरति-व्याप्तेः—**स्वसत्तयैवेति** ॥ स्वसत्ताव्यापकत्वं तदर्थः व्यवहारान्वयी । अतीतानुभवस्येदानीं तादृशलक्षणाभावादव्याप्तिरतः—**वर्तमानदशाया-मिति** ॥ विषयसंबन्धवर्तमानदशायामिति तदर्थः । इदानीं प्रकाश-मनत्वाभावेऽपि तदानीमस्त्येवेति नाव्याप्तिः । तथाच विषयसंसर्गसमान-

कालीनस्वसत्ताव्यापकस्वाश्रयकर्तृकव्यवहारप्रयोजकविषयताश्रयत्वमनुभू - तित्वमिति निष्कर्षः । इदं स्वयंप्रकाशतावादिमताभिप्रायेण ॥

अथास्वयंप्रकाशतावादिमतसाधारण्येन निर्वक्ति—**स्वसत्तयैवेति**॥ वर्तमानदशायां स्वाश्रयं प्रतीति चानुवर्तते । स्वविषयव्यवहारप्रयोजत्वरूपस्य स्वविषयसाधनत्वमात्रस्य दण्डचक्रादिसाधनेऽपि सत्त्वात्—**स्वाश्रयं प्रतीति** ॥ चक्षुरादीन्द्रियव्यावृत्तये—**स्वसत्तयैवेति** ॥ इन्द्रियं ज्ञानद्वारा साधनम्, नतु सत्तयैवेति ॥ अतीतानुभवेऽव्याप्तेः प्रागिव वारणाय—**वर्तमानेति** ॥ अत्रापि विषयसंसर्गसमानकालीनस्वसत्ताव्यापकस्वाश्रयकर्तृकस्वविषयकर्मकव्यवहारप्रयोजकत्वमनुभूतित्व - मिति निष्कर्षः ॥

एवं तर्हि घटादौ दृष्टाया अननुभूतित्वानुभाव्यत्वव्याप्तेः का गतिरित्यत्रोपाधिमाह—**घटादाविति** ॥ **एतत्स्वभावविरहः** निरुक्तानुभूतिलक्षणयोरन्यतरस्याभावः । तन्निबन्धनः अनुभूतिपदव्यपदेश्यत्वाभावः । नत्वनुभाव्यत्वप्रयुक्त इत्यर्थः ॥

अथाभाससमानयोगक्षेमतामाह — **तथानुभूतेरननुभाव्यत्व इति** ॥ अयं भावः—व्यतिरेकसामानाधिकरण्यमात्रेण धीरवेद्या धीत्वाद्व्यतिरेकेण घटवदित्यनुमानप्रयोगे धीर्वेद्या धीत्वात् व्यतिरेकेण गगनकुसुमवदित्यपि प्रयोक्तुं शक्यत इति । अत्रासत्त्वमुपाधिरिति चेत् अविदितावस्थायोगित्वलक्षणं अज्ञानाविरोधित्वं घटादावुपाध्यन्तरमाह—**एवं तर्हीति** ॥ तस्य पक्षे प्रसक्तिशङ्का—**अनुभूतेरिति** ॥ अननुभाव्यत्वेऽपि तत्प्रसञ्जयति—**अननुभाव्यत्वेऽपीति** ॥ **अज्ञानाविरोधित्वमपीति** ॥ अपिना असत्त्वपरिग्रहः । प्रयोगप्रौढिमप्रदर्शनार्थं शिष्याणामूहशक्त्यर्थं च प्रकारान्तरेण प्रत्युक्तिः । ज्ञानस्यानुमेयतावादः

मीमांसकसंमतः, अनुव्यवसायवेद्यतावादः नैयायिकसंमतश्च पूर्वपक्षे दूषितः सिद्धान्तेऽपीष्टः ॥

## 17. विज्ञानवादनिरूपणम्.

### ६६. अनुभूतिरनित्या.

अथानुभूतिर्नित्या स्वप्रकाशत्वादित्यनुमानस्य व्यतिरेकिणः उत्पत्तिविनाशयोरनुभूतावनुभवसिद्धत्वेन बाधं वक्ति—**यत्तु संविद् इति ॥ अन्धेनेति** ॥ असिद्धमत्यन्तासिद्धेन साध्यत इत्यर्थः ॥ अयमत्रार्थः—अनुभूतिपदेन प्रत्यक्षं किं विवक्षितमुत तदतिरिक्तम् । आद्यस्य समकालविषयविषयकत्वनियमेन स्वप्रागभावग्रहणासंभवेऽपि द्वितीयस्यानुमानागमस्मरणयोगिप्रत्यक्षादिरूपस्य त्रैकालिकादिविषयकत्वात् तत्संभवे नानुपपत्तिः । अनुमानेन तत्संभवप्रकारस्तु—इयन्तं कालं न किञ्चिदहमज्ञासिषमिति सुषुप्त्यवस्थापरामर्शेन ज्ञानसामान्याभावरूपसुषुप्त्यंशेऽनुमानात्मकेन स्मर्तव्यास्मरणलक्षणलिङ्गजनितेन ज्ञानसामान्याभावान्तर्गतः स्वाभावोऽपि प्रागभावरूपः विषयीकृत इति । ततश्च सत्येवानुभूतिः स्वप्रागभावावगाहिनी भवतीति बाधो दुरुद्धर इति भावः ॥

अत्र यत्प्रमाणग्राह्यत्वं यत्र तत्र तत्समकालत्वमिति पूर्वपक्ष्याशयः । स च प्रत्यक्षप्रमाणे सम्मतो विशेषनियमः । सामान्यतस्तु यस्मिन् देशे यस्मिन् काले यस्य प्रमाणवेद्यत्वं तस्मिन् देशे काले तस्यानारोपितत्वलक्षमबाधितत्वमेव मानमेयाविनाभावनियम इति सिद्धान्त्याशयः ॥

### ६७. स्मृतिनिरूपणम्.

वैभाषिकमते—

**ग्राह्यं वस्तु प्रमाणं तु ग्रहणं निर्विकल्पकम् ।**
**न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजम् ॥**

इत्युक्तया ज्ञानं द्विविधं ग्रहणं स्मरणं चेति मतम्। तत्रानुभवलक्षणस्य ग्रहणस्यैव निर्विकल्पकस्य प्रामाण्यम्। स्मरणलक्षणस्यानुमानागमादिजन्यस्याप्रामाण्यमिति प्रतिपाद्यते। तद्वासनया अनुमानं प्रागभावे प्रमाणमेव न भवतीति पूर्वपक्ष्याशयं हृदि निधायाह—**अत इदमपीति**॥ स्वसमकालत्वनियमाभावादित्यर्थः। अयमाशयः—

> **स्मृतिरेव हि संस्कारो वासनेत्यपि कथ्यते।**
> **स्मृतिशक्तौ स्थितः सर्वः प्रपञ्च इति सुस्थितम्॥**
> **वासनामात्रनिघ्नं चेत् जगत्स्याच्छून्यलक्षणम्।**
> **इति हार्दं सौगतानां मध्यमागमवादिनाम्॥**
> **तस्मान्न प्रत्यभिज्ञाऽपि प्रामाण्यं लब्धुमर्हति।**
> **ततः क्षणिकसिद्धान्तः निर्निरोध इतीतरे॥**
> **अगृहीतार्थगन्तृत्वं प्रोक्तं प्रामाण्यलक्षणे।**
> **स्मृतिव्यावृत्तये पूर्वैः दूषितं तत्तु तार्किकैः॥**
> **न स्मृतेरप्रमाणत्वं गृहीतग्राहिताकृतम्।**
> **अपित्वनर्थजन्यत्वमित्यन्यत्रास्य विस्तरः॥**

इति॥ मानमेयरहस्यवार्तिके स्मृतिविचारेऽधिकमनुसन्धेयम्॥

एवं प्रागभावे फलप्रमाणमुक्त्वा करणप्रमाणं विकल्पय्य निरूपयति—**अथोच्येतेति**॥ **योग्यानुपलब्धयैवेति**॥ विषयाविकलप्रतियोगिग्राहकसामग्रीलक्षणयोग्यता समवहितप्रतियोग्युपलम्भाभावः अभावे प्रमाणमिति कुमारिलसिद्धान्तः। तत्र योग्यता ज्ञाततया सहकारिणी। अनुपलब्धिस्तु सत्तया। अपरथाऽनवस्थापातस्तस्या अप्यभावत्वादिति॥

सैषाऽनुपलब्धिः स्मृतिप्रमितिरूपप्रतियोगिभेदेन द्विविधा। द्वितीयाऽपि प्रत्यक्षानुमित्युपमितिशाब्धार्थापत्तिभेदेन पञ्चविधेति अनुपलब्धिरपि पञ्चविधा भवतीत्यन्यत्र विस्तरः। प्रकृते घटादिविषयकस्मरणाभावरूपानुपलब्ध्या संवित्प्रागभावग्रह इति भावः॥

स्वज्ञानाभावस्य स्वयमज्ञाने व्यवहारविरोधस्त्वेषः—

**स्वज्ञानाभावदृष्ट्या हि ज्ञानिनः त्वं प्रपद्यसे ।**
**अज्ञातं पृच्छमानश्च न जानामीति भाषसे ॥**
**परधीजननार्थं च त्वया वाक्यं प्रयुज्यते ।**
**शृणोषि च स्वधीसिद्ध्यै कथं नित्यां ब्रवीषि ताम् ॥**

इत्यादि ॥ तत्त्वटीकायां विस्तरो द्रष्टव्यः ॥

किंच—सविषयस्य वा निर्विषयस्य वा संवेदनस्य नित्यत्वमभिमतमिति विकल्प्य आद्यस्यार्थापत्त्याऽप्यनित्यतां साधयति—**किंच प्रत्यक्षेति ॥ तदप्रतीतिश्च संवेदनस्य** स्वानवच्छेदककालावच्छिन्नघटादिसत्ताव्यवहारप्रयोजकत्वाभावः । **कालपरिच्छिन्नतया प्रतीतेः** संवेदनस्य कालपरिच्छिन्नत्वादित्यर्थः । अर्थापत्तिर्नाम—

**प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा भवेत् ।**
**अदृष्टं कल्पयेदर्थं साऽर्थापत्तिरुदाहृता ॥**

इति । प्रकृते व्यवहारकादाचित्कत्वं ज्ञानकादाचित्कत्वं कल्पयतीत्यर्थः ॥

एवं विषयव्यवहारकादाचित्कत्वान्यथाऽनुपपत्त्या संवेदनसामान्यस्य कादाचित्कत्वलक्षणार्थापत्तिमुक्त्वा घटादिविषयानित्यत्वान्यथानुपपत्या प्रत्यक्षज्ञानस्य अनित्यत्वमुच्यते —**घटादिविषयामिति ॥**

संवेदनस्य नित्यं नित्यतयाऽनवभासान्यथानुपपत्त्याऽप्यनित्यत्वमुच्यते—**नित्यं चेदिति**॥ अयमाशयः —संविन्नित्यत्वं संविदियं नित्येति संविदं विषयीकृत्यैव ग्राह्यम्। संविदो विषयीकारानर्हत्वे नित्यत्वमपि स्वतस्सिद्धमिति वक्तव्यम् । ततश्च नित्यत्वं नित्यं भासेतेति ॥

**एवमनुमानादीति ॥** अयं भावः—प्रत्यक्षज्ञानस्य तद्विषयस्य च नित्यत्वप्रसक्तौ अनुमित्यात्मकज्ञानस्य त्रैकालिकविषयकत्वेऽपि संविद-

पेक्षया प्रत्यक्षविषयलिङ्गापेक्षया वा अतीतत्वागामित्वयोर्वक्तव्यत्वेन तयो-र्नित्यत्वे अनुमितेरनुमेयस्यापि नित्यत्वप्रसंग इति ॥

अथ निर्विषयानुभूतिनित्यतापक्षं निराकरोति---**नच निर्विषयेति** ॥ प्रतिज्ञाप्रकरणे "स्वापमदमूर्छासु सविशेष एवानुभव इति स्वावसरे निपुणतरमुपपादयिष्यामः" इत्युक्तस्यायमप्यवसर ॥

अयमत्र शङ्कितुरभिप्रायः—निर्विषया निराश्रया नित्या स्वप्रकाशा संविदादिपदाभिधेयाऽनुभूतिरेकैव लोकोत्तरा आत्मपदवाच्या। सा ह्यन्तः-करणवृत्तिद्वारा कदाचिद्विषयसंसर्गवतीव भवति । वृत्तिविगमे स्वापादि-दशासु स्वप्रकाशा चकास्तीति ॥

समाधातुरभिप्रायस्तु—प्रदीपस्थानीयस्यात्मनः प्रभास्थानीया स्वप्रकाशा संविदनुभूत्यादिपदाभिधेया स्वरूपतो नित्याऽपि संकोच-विकासलक्षणप्रसरणभेदाधीनोदयविलयव्यपदेशवती अत एवानेकाऽनित्या साश्रया सविषया स्वापादिदशायां विषयसंसर्गविरहादनवभासमाना प्रत्यात्मनियता। प्रभाश्रयप्रदीपस्थानीया त्वात्मपदवाच्या सदा स्वप्रकाशा संविल्लक्षणा स्वापादिदशास्वप्यनुभूयते । सोऽप्यनुभवः आत्मानुभवपद-वाच्यः स्फुरणलक्षणः स्फुरत आत्मनः धर्मरूपः प्रभाश्रयप्रदीपस्येव औज्ज्व-ल्यस्थानीयः नित्यः स्वाश्रयविषयकः । एतादृशश्च विकारः आत्मनः तत्त्वान्तरापत्त्यनापादकः वस्तुस्वभावायात्तः अतिशयाधायक. भूषण-भूतः शास्त्रतोऽनुभवतश्च स्वीकृत इति । अत्र सिद्धान्त्यभिमतधर्मभूत-ज्ञानस्य पूर्वपक्ष्यभिमतात्मभूतज्ञानस्य च प्रक्रियायां समानायामपि विकारस्य पारमार्थ्यापारमार्थ्ये विशेषभूते ॥

**अत्रानुपलब्धिपराहतत्वादिति**॥ प्रात्यक्षिकबाधोक्तिः । यौक्तिकबाधोक्तिः—**तास्वपि दशास्विति** ॥ **अस्मरणनियम इति** ॥ यस्य

यत्रानुभवः तस्य तत्र संस्कारतिरस्काराभावे स्मरणमिति व्याप्तिः। तत्र व्यापकाभावे व्याप्याभाव इति सिद्धोऽनुभवाभाव इत्यर्थः ॥

एवं प्रसङ्गान्निर्विषयनिराश्रयानुभूतिनित्यतापक्षं प्रतिक्षिप्य प्रागभावसिद्धिं निगमयति—**अतोऽनुभूतिस्सतीति** ॥ **अनुभूतेरनुभाव्यत्वेति** ॥ अनुभूतेरननुभाव्यत्वेन प्रागभावाग्रहणसाधनमनुभूतेः प्रागभावनिराकरणेऽपि समानमिति भावः। **तस्मादिति** ॥ अनुभूतिर्नित्या स्वतस्सिद्धत्वादित्यनुमानं बाधितं, पूर्वपक्ष्यभिमतं स्वतस्सिद्धत्वमप्यसिद्धमिति भावः ॥

६८. अनुभूतिस्सविकारा.

धीर्निर्विकारा अनुत्पन्नत्वात् व्यतिरेकेण घटादिवदित्यनुमानमनुत्पन्नत्वमङ्गीकृत्यापि दूषयति—**यदप्यस्या इति** ॥ प्रागभावे व्यभिचारवारणाय भावत्वविशेषणदानेऽपि अविद्यायां व्यभिचारमाह—**भावेष्वितीति** ॥ परमार्थविकारराहित्यं साध्यमिति चेत् व्यतिरेकदृष्टान्ते घटादौ साध्यसत्त्वात् व्याप्यत्वासिद्धिरिति प्रकृतार्थः ॥

६९. अनुभूतिस्सविशेषा.

धीः भेदरहिता अनुत्पन्नत्वात् व्यतिरेकेण घटादिवदिति भेदसामान्यनिषेधानुमानेऽपि सर्वमते आत्मनि देहेन्द्रियादिभेदाभ्युपगमात् अद्वैतमते आत्मन्यविद्याभेदाभ्युपगमाच्च सामान्येन भेदस्योत्पत्तिव्याप्यत्वं व्याप्यत्वासिद्धया दूषयति—**यदप्यनुभूतिरजत्वादिति** ॥ अनेन विजातीयभेदराहित्यानुमानमपि निरस्तं भवति ॥

धीस्सजातीयभेदरहिताऽनुत्पन्नत्वादित्यस्यापि बाधमाह—**अबाधितप्रतिपत्तीति** ॥ नात्रानुमानमभिमतम्। अपि तु दृष्टादृष्टविषयभेदेन धीभेदप्रत्यक्षं बाधकतयाऽभिमतम्—**यदपि नास्या इति** ॥ अत्रा-

यमर्थः—धीः दृश्यधर्मलक्षणस्वगतभेदराहिता धीत्वादिति व्यतिरेकी हेतुः। दृश्या न धीधर्माः दृश्यत्वात् रूपादिवदित्यन्वयी हेतुश्च प्रागुक्तौ। तत्रान्वयिनः नित्यत्वस्वयंप्रकाशत्वादिना धीधर्मेण साधारणानैकान्तिकत्वम्। व्यतिरेकिणस्तु असाधारणानैकान्तिकत्वम्। तथाहि—नित्यत्वादौ दृश्ये धर्मे अनवस्थाप्रसङ्गेन दृश्यधर्मान्तराभावात्सपक्षभूते हेतुः धीत्वं न वर्तते अतः पक्षमात्रवृत्ती हेतुरिति॥

धीत्वं स्वयंप्रकाशत्वं नित्यत्वं एकत्वं च निरुच्य स्वरूपतो मिथश्च भेदं निरूप्य व्यभिचारनिरूपकाधिकरणापलापमपाकरोति—**नच ते संवेदनेति॥ एकसङ्ख्यावच्छेदः** एकत्व सङ्ख्यारूपो व्यावर्तकधर्म इत्यर्थः। इति स्वरूपभेदादित्यन्वयः॥ **तेषां जडत्वेति॥** भावाद्वैतमतेऽपि मण्डनसंमते प्रकृतलिङ्गयोरुक्तदोषो दुरुद्धर इति भावः। **किमपि नोक्तं भवेदिति॥** सिद्धसाधनं दोष इति भावः। अत्र प्रकाशपदार्थनिरूपणेन पूर्वपक्षोपक्षिप्तप्राकट्यविचारोऽप्यनुमेयत्वानभ्युपगमात्समाहित इति ध्येयम्॥

तिष्ठन्तु नित्यत्वादयः। स्वरूपप्रकाशमात्रेणापि सधर्मत्वाद्बाधमाह—**अपिच संविदिति॥ गगनकुसुमादिवदिति॥** उक्तमनुमानद्वयमाश्रयासिद्धिसाध्याप्रसिद्धिभ्यां दूषितमिति भावः॥ संवित्स्वरूपतत्प्रकाशयोरभेदेऽपि विषयाश्रयलक्षणकर्मकर्तृप्रयुक्तं सविशेषत्वं दुस्त्यजमित्याह—**सिद्धिरेव संविदितीति॥**

अथ अन्तःकरणवृत्तिरूपज्ञानस्य विषयाश्रयसंबन्धे सत्यपि त्वदुक्तात्मस्वरूपवत् अस्मदुक्तं संवित्स्वरूपं स्वतस्सिद्धमिति शङ्कायां प्रसिद्धस्याहंशब्दार्थस्यात्मनः प्रसिद्धज्ञानादन्यस्यैव स्वापेक्षया प्रकाशत्वरूपं संवित्त्वमस्माभिरुच्यते। त्वया तु प्रसिद्धायाः संविदः प्रतीतिविरुद्ध-

मात्मत्वमुच्यते, साङ्ख्यप्रक्रिया चानुरुध्यते। उभयं लोकविरुद्धमिति विस्तरेणाह—**एतदुक्तं भवतीति** ॥

संविच्छब्दवाच्यो नाहंशब्दवाच्यात्मा तद्धर्मत्वात् सामान्यतः द्रव्यधर्मभूतगुणवदित्युक्त्वा अस्थिरत्वादपि स्थिरादात्मनो भेदं साधयति—**तथाह्यस्येति** ॥ **स एवायमर्थः** इति दृष्टान्तः। **पूर्वं मयेति** दार्ष्टान्तिकः। सोऽयमिति बाह्यार्थे कालद्वयावच्छिन्नदेशद्वयावगाहिप्रत्यभिज्ञावत् सोऽहमित्यान्तरार्थेऽपि अतीतज्ञानवर्तमानज्ञानरूपाकारद्वयावगाहनेन प्रत्यभिज्ञा स्थैर्यावगाहिनी निराबाधेति भावः ॥

एवं प्रत्यभिज्ञाविषयतया स्थैर्यमुक्त्वा प्रत्यभिज्ञाश्रयतया स्थैर्यमाह—**एवं क्षणभङ्गिन्या इति** ॥ **प्रतिसंधानं** प्रत्यभिज्ञा। **उभयेति** ॥ यद्यपि संविदात्मपक्षे लाघवमस्ति। तथापि क्लृप्तौ हि गौरवलाघवविचारः, न तूपलब्धौ। उपलब्धिबलेनैव हि अतिलघुरपि शून्यवादो निराक्रियते। अथ शुद्धायामेव संविदि तत्त्वतो भ्रान्त्या च निर्विषयत्वसविषयत्वादिविरोधशान्तिः। उपलब्धमपि युक्तिविरुद्धं त्याज्यमित्यत्राह—**अनुभूतिमात्रमेव परमार्थ इति** ॥

## 18. अहमर्थात्मवादः.

### ७०. अहमर्थानात्मानुमानदूषणम्.

अथाहमर्थात्मनिरासं विस्तरेणानूद्य दूषयति—**ननुचाहमिति** ॥ अत्र परेण विषये घटत्वादिरहितं सन्मात्रं विषयिणि कर्तृकर्मक्रियात्वरहितं प्रकाशमात्रमात्मेत्यभ्युपगतम्। तच्च विस्तरेण प्रतिक्षिप्तम्। तथा ज्ञातरि प्रत्यगर्थे अहंत्वादिकं त्यक्त्वा तत्रत्यं प्रकाशमात्रमात्मेत्याहुः। तथाहि—अहं जानामीत्यस्मदर्थप्रत्यये उत्तमपुरुषोपात्तज्ञातृविषयायां धातूपात्तायां ज्ञप्तौ ज्ञप्त्यंशभूतसंविदात्मा अनिदंशत्वलक्षणप्रत्यक्त्वात्।

तत्र हेतुः प्रकाशैकरसत्वलक्षणस्वतस्सिद्धत्वात् । तत्र हेतुः चित्त्वलक्षण-धीत्वादिति व्यतिरेकित्रयम् । तथा—अहं जानामीत्यबाधितप्रतीतिसिद्धः उत्तमपुरुषोपात्तो ज्ञाता, अनात्मेति शेषः, युष्मदर्थत्वरूपात् प्रत्यक्त्वशून्यत्वात् । तत्र हेतुः युष्मदर्थलक्षणोपेतत्वरूपात् धीनिर्भासितत्व-लक्षणात् स्वतस्सिद्धत्वशून्यत्वात् । तत्र हेतुः चिद्व्यतिरिक्तत्वलक्षणात्-धीत्वशून्यत्वादित्यन्वयित्रयम् । अयं पूर्वपक्षसारार्थ ॥

तत्र धियः स्वतस्सिद्धत्वमिष्टम् । ज्ञातुः स्वतस्सिद्धत्वशून्यत्वरूपं जडत्वं प्रतिवक्ष्यते । शिष्टानां चतुर्णां हेतूनां बाध उच्यते—**नैतदेवमिति** ॥ प्रत्यक्त्वं नाम स्वस्मै भासमानत्वम् । पराक्त्वं तु परस्मै भासमानत्वम् । अहं स्वस्मै भाति । धीस्सुखादिवत् परस्मै भाति । अतः अहमर्थस्यैव प्रत्यक्त्वम् ॥

७१. संग्रहकारिकाष्टकम्.

विरुद्धमपत्याह—**किञ्चेति** ॥ इयमष्टश्लोकी अहमर्थात्मवादस्य सकलार्थस्य संग्रहरूपा भाष्यकारीया । तत्र अहं शब्दवाच्यः आत्मा प्रत्यक्त्वादिति व्यतिरेकिणः अनुकूलतर्कः—**अहमर्थो नचेदिति** ॥ योऽसावहमिति व्यवह्रियते स एव हि स्वस्मै भाति । तदन्यत्सर्वं परस्मा एव भातीति परागेव । परस्मै अञ्चन्निति पराक् । तस्य प्रतीपमञ्चतीति प्रत्यक् । अञ्चनमत्र भानम् । संविदनात्मा पराक्त्वात्सुखादिवदित्यर्थो हीत्यनेन विवक्षितः ॥

अनिष्टनिवृत्तीष्टप्राप्तिकामनाविशिष्टस्याधिकारिणो विनाशे शास्त्रस्य निरधिकारिकतयाऽप्रामाण्यापत्तिलक्षणा श्रुत्यर्थापत्तिः द्वाभ्यां श्लोकाभ्याम्—**निरस्तेति** ॥ अपुरुषार्थत्वेन विनश्वरत्वेन च ज्ञप्तेरधिकार-शङ्कानिराकृतिः द्वाभ्यां—**मयि नष्टेपीऽति** ॥ घटाकाशादिदृष्टान्तं निराह—**छेत्तुरिति** ॥

अयं भावः—

**स्वावच्छेदकनिर्मुक्तसंविन्नित्यत्वमिच्छता ।**
**संयोगच्छेदनादौ च किं न तादृक्त्वमिष्यते ॥**
**घटाकाशादिनीतिश्च त्वया संविदि दुर्भणा ।**
**तत्तत्संयोगविश्लेषतुल्यागन्तृगुणोज्झनात् ॥** इति ॥

अहमर्थात्मत्वं निगमयति—**अतोऽहमिति** ॥ संविदनात्मत्वं निगमयति—**विज्ञातारमिति द्वाभ्याम्** ॥ इति श्लोकार्थः । अनन्तरमस्यैवार्थस्य विस्तरः—**अहं प्रत्ययसिद्ध इति** ॥ यद्यप्यत्रास्मदर्थस्यैव युष्मदर्थत्वमात्मव्यक्तिभेदात्स्यात् । तथापि घटादिवत् प्रत्यक्त्वसामान्याभावलक्षणं युष्मदर्थत्वमिह व्याहतमित्यभिप्रायः ॥

### ७२. अहमर्थः स्वयंप्रकाशः

अत्राहमर्थस्यात्मत्वं नैयायिकमीमांसकादि सकलप्रबलदार्शनिकसम्मतं श्रुत्यनुगृहीतं च स्थापितम् । तत्रेतरदर्शनापेक्षया स्वदर्शनमात्रासाधारणं जडत्वप्रत्यनीकं स्वयंप्रकाशत्वं श्रुतिसंमतं स्थापयन् पराक्तसाधकतया प्रागुक्तं जडत्वलक्षणं तद्बलनिर्भासितत्वमसिद्धयति—**न चासावहमर्थोऽन्याधीनेति** ॥ स्वधर्मभूतज्ञाननिरपेक्षप्रकाश इत्यर्थः । **स्वयं प्रकाशत्वात्** स्वत एव व्यवहारानुगुण्यशक्तियुक्तत्वात् । तस्योपपादनम्—**चैतन्यस्वभावतेति** ॥ चिद्रूपत्वमेव स्वतोव्यवहारानुगुण्यशक्तिमत्त्वमित्यर्थः । चिद्रूपत्वे श्रुतिं वक्ष्यन् तर्कमाह—**यः प्रकाशेति** ॥ अत्र प्रकाशपदार्थः आत्मप्रदीपयोः ज्ञानप्रभयोश्च साधारणं व्यवहारागुण्यशक्तिमत्त्वम् । तत्रात्मनः स्फुरणरूपः । प्रदीपस्य तमो विरोधिरूपमौज्ज्वल्यम् । ततश्च स्वतास्सिद्धव्यवहारानुगुण्यशक्तिमत्त्वलक्षणं चिद्रूपत्वं यदि न स्यात् प्रकाशस्वभावत्वं न स्यादिति तर्काकारः ।

दृष्टान्ते साध्यवैकल्यशङ्कां परिहरति—**न हि दीपादेरिति** ॥ **अन्यान-पीति** ॥ परिच्छिन्नस्वभावत्वादिति भावः ॥

७३. प्रभाविचारः.

**एतदुक्तमिति** ॥ यथेत्यस्य एवमित्यनेनान्वयः । इदमत्रावधेयम्—कौमारिले श्लोकवार्तिके शब्दनित्यताधिकरणे क्षणभङ्गवादनिराकरणप्रकरणे यदि न क्षणिकस्य कार्यारम्भकत्वं कथं तर्हि ज्वाला प्रभामारभते? अत्राह (८४१) —

> **ज्वालादेरपि नाशित्वं नैव सिद्धं प्रतिक्षणम् ।**
> **लघवोऽवयवास्तत्र यान्ति देशान्तरं लघु ॥**
> **प्रभूतं वर्तिदेशे हि तेजस्तिष्ठति पिण्डितम् ।**
> **तत्र यावत् व्रजत्यूर्ध्वं तावत् ज्वालेति गम्यते ॥**
> **ततोऽपि यदतिक्रम्य याति तत्स्यात्प्रभात्मकम् ।**
> **ततः परं तु यद्याति तत्सौक्ष्म्यान्नावधार्यते ॥**
> **उत्तरावयवै रुद्धे मार्गे पूर्वे न यान्ति च ।**
> **यथोत्तरे विमुञ्चन्ति पूर्वे यान्ति तथातथा ॥**

इति ॥ अयमर्थः—तेजांस्यतिगत्वरस्वभावानि त्रिचतुरक्षणावस्थायीनि अनिरन्वयविनाशीनि कारणक्रमनियतक्रमेणोत्पत्तिमन्ति च प्रवहन्ति । तस्मिंश्च प्रवाहे केचनांशाः पिण्डीभूता भवन्तः निबिडावयवत्वात् प्रदीपव्यवहारभाजो भवन्ति । केचनांशाः विरलावयवत्वात् प्रभापदवाच्या भवन्ति। तथाचाविनष्टमेव तेजः ज्वालातो निर्गत्य प्रभात्मतां लभत इति न जातु क्षणिकस्य प्रदीपस्य प्रभारम्भकत्वमिति क्षणभङ्गः परास्त इति ॥

तार्किकास्तु—प्रदीपस्य विशीर्णा अवयवाः प्रभेति परिकल्प्य प्रदीपस्यातिरिक्तावयविन आरम्भमभिप्रत्योत्पत्तिविनाशमभ्युपगम्य क्षणिकताप्रसङ्गं निराचक्रुः ॥

परिणामवादिनस्तु प्रायेण वेदान्तिनः तार्किकमतमनभ्युपगम्य सप्रभाकाणामेव प्रदीपानामुत्पत्तिं विनाशं च समुपपादयन्ति । अत एव शांकरेऽपि शारीरिकभाष्ये—(२–३–२५) "निबिडावयवं हि तेजोद्रव्यं दीपः । प्रविरलावयवं तु तेजोद्रव्यमेव प्रभेति" इति भाषितम् । अत्र प्रभा द्रव्यभूताऽपि प्रभावन्तं नित्यमाश्रिता, अत एव गुणभूता आश्रयादन्यत्रापि वर्तमाना दृश्यते इत्यर्थः स्वीकृतः । सिद्धान्ते तु पुष्कलकारणक्रमेण सप्रभाका एव प्रदीपास्समुत्पद्यन्त इत्यभ्युपगमात् न दृष्टान्ताशुद्धिरिति भावः ॥

दार्ष्टान्तिकातिदेशः—**एवमिति** ॥ तर्कानुग्राह्यं मानमुपदर्शयति—**तथाहीति** ॥ घनशब्दः अयोघन इत्यादाविव जात्यन्तरसांकर्यव्यवच्छेदकः । रसघनदृष्टान्तः जाड्यांशव्यवच्छेदकः गुणवत्त्वसूचकश्च । ज्ञानस्वरूपकत्वं ज्ञानधर्मकत्वं च श्रुतिसूत्रसिद्धमिति फलितार्थः । निगमनम्—**अत इति** ॥ ज्ञानं साश्रयं प्रकाशत्वादित्यनुमानान्तरम्—**प्रकाशत्वादिति** ॥ साक्षाद्विषयसंबन्धितया व्यवहारहेतुत्वादित्यर्थः । अत्रैव संबन्धिशब्दाभिधेयत्वं हेत्वन्तरम्—**संविदनुभूतीति** ॥

### ७४. संविदात्मत्वानुमानदूषणम्.

अस्मिन् प्रकरणे पूर्वपक्षक्रमेण प्राधान्येनावगन्तव्यान्येतान्यनुमानानि, येषां सिद्धान्ते दूषणान्यभिहितानि—

१. ज्ञाता कल्पितः (अपरमार्थः) संविदतिरिक्तत्वात् घटादिवत्.

२. अनुभूतिरात्मा निर्विशेषत्वात् प्रत्यक्त्वात् अजडत्वात् व्यतिरेकेण घटादिवत् ॥

३. ज्ञातृत्वं भ्रान्तिसिद्धं ज्ञातृत्वस्वरूपत्वात् देहादेः ज्ञातृत्ववत्॥

४. कर्मकर्त्रवच्छिन्नज्ञानाश्रयत्वरूपं ज्ञातृत्वं नात्मधर्मः भ्रान्तपुरुषप्रतीतिसिद्धत्वात् मनुष्यत्वादिविशिष्टपिण्डत्वाश्रयत्ववत् ॥

५. ज्ञातृत्वं नात्मधर्मः अनुभाव्यत्वात् रूपादिवत् ॥

६. अहंकर्तेतिधीः नात्मगोचरा आत्मानुभवावच्छिन्नसुषुप्तिकालवृत्त्यभावप्रतियोगित्वात् सामान्येन घटादिधीवत् ॥

७. आत्मा न कर्ता अजडत्वात् प्रत्यक्त्वात् आत्मत्वात् व्यतिरेकेण देहादिवत् ॥

८. आत्मा नाहंप्रत्ययगोचरः अजडत्वात् प्रत्यक्त्वात् आत्मत्वाच्च व्यतिरेकेण देहादिवत् ॥

९. अहमर्थकर्तृत्वं न भोक्तृत्वसमानाधिकरणम्, कर्तृत्वस्वरूपत्वात् देहगतकर्तृत्ववत् ॥

१०. ज्ञातृत्वाहंत्वे नात्मधर्मौ सुषुप्त्यादावभातत्वात् मनुष्यत्वादिवत् ॥ इति ॥

२. अथ अजडत्वात्संविदात्मेति पूर्वपक्षोक्तमनुमानमहमर्थस्याप्यजडत्वोपपादनेनसाधारणीकृत्य प्रकृते संविदात्मत्वसाधकप्रत्यक्त्वसाधकतया प्रयुक्तं तमेव हेतुमसिद्धयति—**यच्चोक्तमजडत्वादिति** ॥ अत्र चत्वारो विकल्पाः । प्रथमविकल्पे बहुव्रीहिसमासः । अनैकान्त्यमसिद्धिः निर्विशेषत्वलक्षणसिद्धान्तविरोधश्च दूषणानि । द्वितीये परमतेन सुखादौ व्यभिचारः । तत्रहि **अव्यभिचरितप्रकाशेति** बहुव्रीहिसमासेन सत्ताविशेषणम् । अविदितावस्थायोगित्वाभावरूपमजडत्वमिति फलितार्थः । स्वस्मै प्रकाशमानत्वरूपं तृतीयमसिद्धयति—**यद्युच्येतेति** ॥ स्वस्मै स्वयं प्रकाशमानत्वरूपं तुरीयमप्यसिद्धयति—**तस्मादिति** ॥ अत्र स्वयमंशरूपं निरपेक्षत्वमपि नास्तीत्याह—**ज्ञानस्यापीति** ॥ ततश्च प्रत्यक्त्व-

महमर्थस्यैवात्मत्वं साधयति, न जातु संविद इति निगमयति—**अत इति ॥**

१. ज्ञाता कल्पितः संविदतिरिक्तत्वात् घटादिवदिति विजातीयभेदराहित्यानुमानमनूद्य कल्पितत्वेऽधिष्ठानसामानाधिकरण्येनानुभूयमानत्वमुपाधिमाह—**अथ यदुक्तमनुभूतिरिति ॥**

४. एवं द्वितीयं प्रथमं चानुमानमेतावता प्रबन्धेन निराकृत्यावशिष्टानि निराक्रियन्ते । ज्ञानाश्रयत्वरूपं ज्ञातृत्वं नात्मधर्मः (मिथ्या) भ्रान्तपुरुषप्रतीतिसिद्धत्वादिति पूर्वपक्षोक्तस्यानुभूतौ व्यभिचारं बाधितत्वरूपमुपाधिंचाह— **यदप्युक्तं स्थूलोऽहमिति ॥**

अत्र भ्रान्तपुरुषप्रतीतिसिद्धत्वहेतोरसिद्धिपरिहाराय ज्ञातृत्वं ज्ञानक्रियारूपमितिप्रसाध्य तदवगाहिज्ञानं भ्रम एवेत्यत्र ज्ञातृत्वस्य चेतनासाधारणधर्मत्वाभ्युपगमात् स्वरूपासिद्धिं द्रढयितुमनुवदति—**यदप्युक्तमविक्रियेति ॥**

५, ७, ८. ज्ञानक्रियाकर्तृत्वं न दृशिलक्षणात्मधर्मः दृश्यत्वाद्रूपादिवदित्युक्तमनुमानं आत्मा न कर्ता नाहंप्रत्ययगोचरः अजडत्वात् प्रत्यक्त्वात् आत्मत्वाच्चेति प्रसंगानुमानत्रयं च अहं जानामीत्यबाधितानुभवेन बाधितमिति वक्तुमनुवदति—**कर्तृत्वादिर्हीति, कर्तृत्वेऽहंप्रत्ययेति च ॥**

अनेन प्रकरणेन सिद्धानां अन्तःकरणं ज्ञातृ विकारित्वात्, ज्ञातृत्वमन्तःकरणधर्मः दृश्यत्वात्, अन्तःकरणं कर्ता अहंप्रत्ययगोचरश्च जडत्वात् पराक्त्वात् अनात्मत्वाच्चेति पञ्चाप्यनुमानानि अहंजानामीत्यनुभवेन, अन्तःकरणं न ज्ञातृ अचेतनत्वात् देहवत् इत्यादिभिरबाधितैरन्वयिभिश्च बाधितानीत्याह—**नैतदुपपद्यते देहस्येवेति ॥**

देहात्मभेदासिद्धये देहस्य द्रष्टृत्वं यन युक्तिजालेन वार्यते तेनैव अन्तः-करणस्यापीति विशदमुपपादयति—**एतदुक्तमिति** ॥

९. ज्ञातृत्वस्य क्रियारूपत्वं प्रतिक्षिप्य प्रागुक्तदूषणान्युद्धरति—**नच ज्ञातृत्वमिति** ॥ **ज्ञानस्वरूपस्येति** ॥ ज्ञानासाधारणधर्मकस्येत्यर्थः । **नकदाचिदिति** ॥ ज्ञानानाश्रयत्वादित्युपस्कर्तव्यम् । एतादृशज्ञानक्रियाकर्तृत्वमप्यात्मनो न स्वाभाविकम्, स्वाभाविकाविकारप्रतिषेधपरा निर्विकारश्रुतय इति भावः । अन्तःकरणवृत्तेः सांख्यन्यायेन ज्ञानत्वाभ्युपगमस्तु भूतचैतन्यवादप्रसंजक इति भावः ॥

७५. चिच्छाया, चित्संपर्कः.

२. अथान्तःकरणस्यौपाधिकं ज्ञातृत्वं संभवतीत्याशङ्क्य चिच्छायापत्तिलक्षणमुपाधिमपाकरोति—**जडस्वरूपस्येति** ॥ **केयमिति** ॥ दुर्निरूपत्वान्न काऽपीत्यर्थः । अयमत्र विकल्पः—ज्ञातृत्वं चिच्छायापन्नम्? उत ज्ञानमेव । आद्येऽपि अन्तःकरणगतस्य ज्ञातृत्वस्य चिति च्छाया? उत चिद्गतस्यान्तःकरणे छायेति विकल्प्य बुद्धिस्थक्रमेण निरासः—**न तावत्संविद इति** ॥ **उक्तरीतिः** अचेतनत्वादिः । ज्ञानस्यैव छायेति द्वितीयविकल्पनिरासः—**द्वयोरपीति** ॥ प्रकृतिपुरुषयोरितरेतरस्वभावाभिमानस्सांख्यैरुक्तः । तदनुसारः परस्य किंस्यादिति विकल्पावसरः ॥

संपर्करूपमुपाधिं निराकरोत्ति—**अथाग्निसंपर्केति** ॥ रुमागतकाष्टलबणत्ववत् जलौष्ण्यवद्वा इत्याभिप्रायेण ज्ञातृत्वं तदुपलब्धिर्वेत्युक्तम् । अस्य पक्षस्येदं वचनं मूलम्—

**अयःपिण्डे यथा वह्निर्भिन्नस्तिष्ठत्यभिन्नवत् ।**
**तथा विश्वमिदं देवो व्यावृत्या परितिष्ठति ॥**

इति ॥ तत्त्वटी(१२५. II)कोदाहृतम् ॥

७६ चिदभिव्यङ्ग्यता.

अथ संविदो निर्विकारत्वानुमानबाधपरिहाराय अहंजानामीत्यहमर्थधर्मतया धियो भानं व्यञ्जकसामग्रीस्वभावनिबन्धनामित्युक्तम् । अत्र संविदन्तःकरणयोः व्यङ्ग्यव्यञ्जकभावस्यैवासंभावनीयतया सेयं कुसृष्टिरित्याह—**यदप्युक्तमुभयत्रेति** ॥ सांप्रदायिकत्वायात्मसिद्धिग्रन्थमुदाहृत्य विवृणोति—**तदुक्तमिति** ॥

**स्वयंप्रकाशानुभवेति** ॥ आत्मस्वरूपस्यैवानुभवरूपत्वात् प्रभास्थानीयस्य धर्मभूतज्ञानलक्षणानुभवस्यापि आत्मस्वरूपानुभवायत्तत्वात् सर्ववस्तूनां तदधीनसिद्धिकत्वोक्तिः । अनिष्टमप्युक्त्वा तत्र पूर्वोदाहृतग्रन्थवाक्यं प्रमाणयति—**किंचाहंकारेति** ॥ परोक्तदृष्टान्तं विघटयति—**नच रविकरेति** ॥

अभिव्यक्तिं विकल्प्य दूषयति—**किंचास्य संविदिति** ॥ **किंरूपा** न किञ्चिद्रूपेत्यर्थः । उत्पादकमपि उत्पत्तिद्वाराऽभिव्यक्तिहेतुरित्युत्पत्तिरूपकोट्यवकाशः । **तत्प्रकाशनं** आत्मगोचरप्रकाशजननम् । **ततएवचेति** ॥ दृष्टद्वारा साधनानुग्रहः प्रथमः कल्पः । संस्काररूपादृष्टद्वारा द्वितीयः । अत्रापि प्रागुदाहृतग्रन्थसम्मतिः—

**करणानामभूमित्वान्न तत्संबन्धहेतुता ।**
**अहमर्थस्य बोद्धृत्वात् न स तेनैव शोध्यते ॥**

इत्युत्तरार्धम् ॥ **संविदाश्रयत्वमिति** ॥ संवित् आश्रयो यस्येति तत्संविदाश्रयम्, तस्य भावः संविदाश्रयत्वमिति समासः । आश्रयशब्दः विषयतयाऽऽधारतया च संबन्धित्वमाह । असंभवस्य व्यापकाभावसिद्धतामाह—**ज्ञातृभावेति** ॥ भ्रान्त्या तत्संभवाभ्युपगमेऽनिर्मोक्षप्रसङ्गमाह—**संविदो ज्ञानेति** ॥ कोट्यन्तरासंभवव्यक्त्यै निगमनम्—

**अतो न केनापीति** ।। व्यङ्ग्यव्यञ्जकव्यक्तिस्वभावसमीक्षयोक्तानां दोषाणां दुर्वारत्वादुत्पादकतया प्रकाशकतयाऽनुग्राहकतया चेत्यर्थः ।।

अहङ्कारः स्वाश्रयतयाऽऽत्मानमभिव्यनक्ति व्यञ्जकत्वात् योयो व्यञ्जकस्स तादृशः दर्पणजलखण्डादिवत् इत्यभिप्रेतो न्यायः प्रदीपेन्द्रियलिङ्गशब्दसंस्कारादिषु तदनुग्राहकेषु च व्यभिचारादपन्यायः स्वतः प्रामाण्यवादिनामित्याह—**नच स्वाश्रयतयेति** ।। प्रतीतिपदं व्यवहार योग्यतापादनपरम् ।।

## ७७. स्वतःप्रामाण्यम्.

**स्वतः प्रामाण्यन्यायेति** ।। प्रामाण्यं नाम ज्ञानगतं सम्यक्त्वलक्षणं यथावस्थितव्यवहारानुगुणज्ञानत्वम् । तद्विपरीतमप्रामाण्यम् । तदेतदुभयं उत्पत्तौ ज्ञप्तौ चेति प्रत्येकं द्विविधम् । तत्र प्रामाण्ये स्वतस्त्वं नाम ज्ञानोत्पादकसामग्रीजन्यत्वमुत्पत्तौ, ज्ञानग्राहकसामग्रीग्राह्यत्वं च ज्ञप्ताविति । अप्रामाण्यमुभयत्रापि परतः । तत्त्वं च दोषघटितसामग्रीजन्यत्वं बाधज्ञानग्राह्यत्वं च । सोऽयं स्वतः प्रामाण्यन्यायः ।। इदमत्रावधेयम्—

**प्रमाणत्वाप्रमाणत्वे स्वतस्सांख्यास्समाश्रिताः ।**
**नैयायिकास्ते परतः सौगताश्चरमं स्वतः ।।**
**वैदिकास्तु स्वतः पूर्वं चरमं परतो विदुः ।**
**स्वाभाविकं स्याद्बाहुल्यमल्पतौपाधिकी मता ।।**

इति ।। नैयायिकमते गुणदोषौ परशब्दाभिधेयौ । गुणः सत्सान्निकर्षादिः । दोषः विषयगतः दूरत्वादिः । करणगतः कामलादिः । वैदिकमते दोषः परशब्दार्थः । दोषाभाव एव गुण इति तस्य प्रायिकत्वामिति ।।

दृष्टान्ता अपि साधनाविकला इत्याह—**नच दर्पणादिरिति ॥ आकारः** संस्थानम्। व्यक्तिदर्पणाभिप्रायेण—**वस्तुतो दोषतो वेति ॥** तत्फलितव्यञ्जनम्—**ज्ञातृत्वं तथोपलब्धिर्वेति ॥**

७८. सुषुप्त्यवस्थाविचारः.

६, १०. अथ पूर्वपक्षे कर्तृत्वस्यात्मधर्मतासाधकानुमानानि सत्प्रतिपक्षयितुं प्रसक्तस्य कर्तृत्वमात्मधर्मः आत्मासाधारणाहंत्वसामानाधिकरण्येन प्रतीयमानत्वादिति सामान्यतोदृष्टानुमानस्य स्वरूपासिद्धिं वक्तुं प्रयुक्तेन अहं कर्तेति धीर्नात्मगोचरा आत्मानुभवावच्छिन्नसुषुप्तिकालवृत्त्यभावप्रतियोगित्वात् घटादिधीवदित्यनुमानेन सुषुप्तिकाले अहंत्वभानं नास्तीति साधितम्। तदानीमप्यहंत्वभानं प्रसाध्य प्रतिहेतुं समर्थयति—**तमोगुणेति ॥** सुखित्वादिरान्तरः मनुष्यत्वादिर्बाह्यश्च परागर्थः। **अहमिति ॥** प्रत्यक्ष इत्युपस्कारः। **तथैवेति ॥** अस्पष्टतयेत्यर्थः। **अवतिष्ठते** इति वर्तमानोक्तिः तत्सामीप्यात्। अज्ञानविषयकत्वमेव हि साक्षित्वम्। **एवंहीति ॥** स्वपक्षे मानं प्रदर्शितम्। अत्र स्वावसरे निपुणतरमिति प्रागुपक्षिप्तमुपपादितं च भवति। **सुखित्वं ज्ञातृत्वं चेति ॥** यद्धि यस्यानुकूलतया भाति स तेन सुखीति व्यवह्रियते। यस्य येन यद्भाति स तेन तस्य ज्ञातेति चेति भावः। अनुकूलत्वेन स्वस्मैभासमानत्वरूप प्रत्यक्त्वेन च स्वयं भासत इति यावत्। **अतदिति ॥** "तत्र ते न्यवसन् सुखम्, मन्दमगच्छं, मधुरमगायम्" इत्यादौ सुखमान्द्यमाधुर्याणां क्रियाविशेषणानां तात्कालिकत्वस्वारस्यवत् सुखस्वापयोः समकालत्वं प्रतीतिस्वारस्यसिद्धमिति भावः। तदानीं सुखमस्वाप्समिदानीं दुःख्यामीति च क्वचित्परामृश्यते इत्यपि बोध्यम्। ज्ञानसामान्याभावरूपस्वापोऽपि प्रातःकालीनचत्वरगतगजाभाववत् पश्चाद्योग्यानुपलब्धिगम्यः। अधिकं पूर्वपक्षे प्रपञ्चितम् ॥

अहमर्थः सुषुप्तौ सुखं नानुसंधत्ते विनष्टत्वादिति युक्त्या न समकालतेत्याशङ्क्य स्वरूपासिद्ध्या परिहरति—**नचाहमर्थस्येति**॥ **परामृशतीति**॥ करणत्रयव्यापारप्रदर्शनायोदाहरणप्रपञ्चः। आपाततस्सुषुप्तावहमर्थाननुभवमाशङ्क्य प्रतीतिस्वारस्यनिरूपणेन परिहरति—**एतावन्तं कालमिति**॥ न खलु प्रातः काले चत्वरे कोऽपि नास्तीत्यनुसन्धाने चत्वराभावोऽपि प्रतीयते इति भावः। **देवानामिति**॥ अप्रतिब्रुवतामित्यर्थः। अत्रेदमात्मवादसिद्धान्तभाष्यं शाबरं हृदयास्थितम्—"नच शक्यमेवमवगन्तुं यथोपलभ्यन्ते अर्थाः न तथा भवन्तीति। यथा तु खलु नोपलभ्यन्ते तथा भवन्तीति। तथाहि सति शशो नास्ति शशस्य विषाणमस्तीत्यवगम्येत" इति॥ अहमर्थनिषेधविषयं परामर्शमाशङ्क्यात्रास्मदंशः वर्णाश्रमादिविशिष्टदेहाभिमानविषयात्मपर इति समाधत्ते—**मामप्यहमिति**॥ **अनुभववचने इति**॥ प्रथमाद्विवचनम्। "सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतस्सति विशेष्ये बाधे" इति न्यायात् विशेषणविषयो निषेध इत्याह—**वर्णाश्रमादिविशिष्टेति**॥ तदभिमान इत्यर्थः। **अत्र सुप्तोऽहमिति**॥ शब्दप्रयोगस्य वैवक्षिकत्वात् एकदेश प्रयोग इति भावः॥

भवदीयप्रक्रिययाऽपि अहमर्थस्य ज्ञातुः स्थैर्यसंभवात् प्रागुक्त-(३५८) सत्प्रतिपक्षोऽपि निराबाध इत्याह—**किंच सुषुप्तावात्मेति**॥ मोक्षदशायामहंत्वभानानुमानं वक्ष्यमाणं सुषुप्तिदशायामपि संक्षेपेण दर्शयति—**आत्मने स्वयमिति**॥ अत्र जाग्रदात्मा सपक्षः॥

सुषुप्तिमुक्त्योर्नान्वेतीति पूर्वपक्षोक्ते दूषितावशिष्टं **यत्त्वित्यादि**नाऽनूद्य दूषयति—**तदपेशलमिति**॥ असुन्दरमित्यर्थः। **प्रकारान्तरेणेति**॥ धीसंततिविनाशो दोक्ष इति वदतस्सौगतस्य दोषः तवाप्यागत इति सूच्यते॥

७९. मुक्त्यवस्था.

पूर्वं ज्ञातुरेवाहमर्थस्यात्मत्वे परमसाध्ये संग्रहेणोक्तां श्रुत्यर्थापत्तिं तस्य मुक्तिदशानुवृत्तिरूपावान्तरसाध्येऽपि हेतुतया विस्तृणीते—**अपि-चेति** ॥ अवान्तरसाध्येऽपि व्याप्तिद्वयोपेतमनुमानमाह—**स च प्रत्य-गात्मेति** ॥ अहमिति व्यवहारविषयतया प्रकाशस्य साध्यत्वात् हेतोर्न साध्याविशेषः । अभानस्य परस्मा एव भानस्य वा त्वयाऽनभ्युपगमान्न हेत्वासिद्धिः । अकस्मैचिद्भानत्वस्य दुर्वचत्वाच्च । एकस्मिन्नेव सम्मतविम-तदशाभेदेन विभागान्नापि पक्षस्य दृष्टान्ताविशेषः । अनुकूलतर्कस्तु प्रत्यक्त्वाभावप्रसङ्गः प्रागुक्तः । विशेषविरोधप्रसङ्गमनूद्य निषेधति—**नचाहमिति प्रकाशमानत्वेनेति** ॥ अत्र प्रसङ्गे मोक्षशास्त्रविरोधः स्वरूपाज्ञानमुपाधिश्चेति दूषणद्वयम् । अनेन प्रसङ्गनिराकरणेन प्रागुक्ता-नुमाने अज्ञत्वस्योपाधित्वमपि निरस्तं वेदितव्यम् ॥

तत्त्वविदनुभवेनाप्यहमर्थस्यात्मतां साधयति—**ब्रह्मात्मभावेति** ॥ आपरोक्ष्यं अविद्यानाशस्य कारको ज्ञापकश्च हेतुः । आदिपदेन प्रह्लाद-भरतादिग्रहः । **पश्यन्** जगत्कारणं ब्रह्म स्वान्तरात्मत्वेन पश्यन्नि-त्यर्थः । **सच्छब्दप्रत्ययेति** ॥ सच्छब्दजन्यप्रत्ययेत्यर्थः । **तथा यस्मा-दिति** ॥ क्षराक्षरातीतत्वचिदचिदन्तरात्मत्वनित्यत्वमहदादिकारणत्वमोक्ष-प्रदत्वादयो नाहंकारस्य संभवन्तीत्यर्थः । एभिश्शब्दैश्चिन्मात्रोपलक्षणं चेल्लक्षणैव दोषः । पूर्वपक्षबीजं संसूच्य परिहरति—**यद्यहमित्येवेति** ॥ **अहंभावकरणेति** ॥ अहमित्यभिमानकरणेत्यर्थः । **पराशरेणेति** ॥ (वि. पु. ६-७) "चास्वे स्वमिति या मतिः" इति तुरीयः पादः । अहं ममेति धीरेवाविद्येत्यर्थः । आत्मनोऽहंत्वज्ञातृत्वादिसाधकवर्गस्य सङ्कलितबोधार्थमात्मसिद्धिश्लोकावुदाहरति—**तदुक्तमिति** ॥

## 19. शास्त्रप्राबल्यनिरासः.

८०. व्यवहारावस्था.

एवं सविशेषविषयसकलप्रत्यक्षादिप्रमाणविरोधात् न निर्विशेषवस्तुनि शास्त्रं प्रमाणमिति तज्जन्यज्ञानस्य मिथ्याभूतवस्तुबाधनपर्याप्तस्वरूपसामर्थ्यासिद्ध्या कर्मसमुच्चयानर्हत्वसाधकवस्तुसामर्थ्यहेतोरसिद्धिशङ्कायाः शास्त्रप्रत्यक्षयोर्विरोध एव नास्तीति मण्डनमिश्रीयमार्गेण परिहारमपाकृत्य पुनरसिद्धिरेव स्थापिता। अथ शास्त्रं प्रत्यक्षापेक्षया प्रबलं प्रत्यक्षं च दुर्बलमिति प्रागाशङ्कितं शाङ्करमार्गमनूद्य प्रत्यक्षस्य दौर्बल्यमपाकरोति—**यदुक्तं दोषमूलत्वेनेति** ॥ अत्र अन्योन्याश्रयत्वतुल्यदोषत्वपौर्वापर्याकिञ्चित्करत्वरूपैस्त्रिभिर्दोषैः दोषमूलत्वं न संभवतीति फलितार्थः ॥

अथ दौर्बल्ये प्रमाणाभावलक्षणं मूलोच्छेदं दोषमाह—**अपि-चेदं शास्त्रमिति** ॥ **स्वाभिमतार्थः** शास्त्रप्राबल्यादिः ॥

अथ सौगतसर्वस्वे संवृत्याख्ये प्रलोभने व्यवहाराख्यं शब्दं प्रयुञ्जानस्समाधित्सति—**ननु व्यावहारिकप्रमाणेति** ॥ अत्र—

> **इन्द्रियैरुपलब्धं यत् तत्तत्त्वेन भवेद्यदि ।**
> **जातास्तत्त्वविदो बालास्तत्त्वज्ञानेन किं तदा ॥**

इति प्रागुदाहृत (५० पु.) रीत्या लोकातीतत्वमेव तत्त्वदर्शित्वमित्यभिमानः। इदमेवाभिप्रेत्य प्रवृत्तं शाबरं भाष्यं प्रागुदाहृत (३६९) मत्रानुसंधेयम् ॥ सेयं परिभाषा—

> **वञ्चनार्थ उपन्यासः लालावक्रासवादिवत् ।**
> **नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ॥**

इति निरालम्बनवादपद्यार्थपूर्वपक्षमूलेति परिहरति—**कोऽयं व्यावहारिको नामेति** ॥ पाश्चात्यबाधादर्शनमभ्युपेत्य परिहरति—**तदयुक्तम-**

**बाधितस्येति** ॥ बाधकवत्कारणदोषस्यापि पृथगेव कारणत्वमप्रामाण्य-प्रतिपत्तौ प्रसिद्धमित्यभिप्रायः ॥

व्याप्तिमूलत्वात्प्रयोगपदवाच्यान् प्रसंगतर्कानाह—**भवन्ति चात्रेति** ॥ यद्यप्यत्र परेष्टव्याप्तया ज्ञानविषयत्वे मिथ्यात्वं स्यादित्येक एव प्रयोगस्साधीयान् । तथापि प्रथमतृतीयौ सविशेषणप्रयोगौ प्रसंगहेतोस्साधकत्वव्यक्त्यर्थावित्यवधेयम् । प्रत्यक्षाबाधस्यापि वाक्यतात्पर्यान्तर्भूतत्वात् यूपादित्यैक्यवाक्यस्य विधिशेषत्वोक्तिरपसिद्धान्तः । साधकबाधकज्ञानागोचरत्वमेव ह्यपूर्वत्वमतो नाध्यक्षात् शास्त्रं बलवादिति भावः ॥

८१. असत्यात्सत्यसिद्धिः

अथासत्यहेतुजन्यज्ञानविषयत्वरूपप्रसंगहेतोः मिथ्यात्वव्याप्त्यभावलक्षणं मूलशैथिल्यं वक्ष्यन् असत्यात्सत्यसिद्धिनिदर्शनैरष्टाभिः शास्त्रप्राबल्यं सिषाधयिषितं तावदाह—**नचवाच्यं स्वाप्नस्येति** ॥ संध्याधिकरणे स्वप्नप्रपञ्चस्य सत्यत्वे स्थापयिष्यमाणेऽपि परमतान्वारोहेणान्यथाख्यातिपक्षेण विषयबाधोक्तिः । **मायामयमिति** ॥ आश्चर्यभूतामिथ्यार्थगोचरमित्यर्थः । **दष्टबुद्धिरिति** ॥ मरणादिहेतुरिति योज्यम् । शङ्काविषोदाहरणं निर्विषसर्पदष्टादौ छिन्नकण्टकवेधादौ च भाव्यम् ॥

एवमबाधितत्वात्सत्यत्वमुक्त्वा हेत्वन्तरेण सत्यत्वमाह—**एषां संवेदनानामिति** ॥ बुद्धीनां सत्यालम्बनत्वात्तन्निवृत्त्या सत्यतानिवृत्तिमाशङ्क्य व्यापकनिवृत्तिरेव नास्तीति प्रत्याह—**हस्त्यादीनामिति** ॥ **सालम्बनत्वमात्रेति** ॥ सविषयकत्वं सालम्बनत्वम् । मात्रचा विद्यमानत्वव्यवच्छेदः । **प्रतिभासमानत्वं** बुद्धिप्रतिसंबन्धित्वम्, बुद्धिव्यावर्तकत्वमित्यर्थः । **आलम्बनत्वे** विषयत्वव्यवहारे । **स** इत्यर्थपरामर्शः ॥

तथाच विद्यमानत्वे सति प्रतिसंबन्धित्वं विषयसत्यताव्यवहार-प्रयोजकम् । अविद्यमानत्वे सति प्रतिसंबन्धित्वं मिथ्यात्वव्यवहारे प्रयो-जकम् । अन्यत्र प्रसिद्धस्यैव स्वानधिकरणे प्रतीयमानत्वं मिथ्यात्वं, न तु केवलं मानसंबन्धानर्हतालक्षणं, नाप्यनिर्वचनीयत्वलक्षणं तुच्छत्वम्, विशेष्यविशेषणसंसर्गाणामन्यत्र प्रसिद्धत्वात् । विशेष्यविशेषणयोः तथात्व-निर्वाहकस्संसर्गः स्वस्य तदीयत्वे संसर्गान्तरनिरपेक्षः । पुरोवर्तिनि भ्रमाधिष्ठाने प्रतीयमानः पुरोवर्त्यपेक्षया स्वयं स्वस्य संसर्गरूपत्वनिर्वहणा-सामर्थ्यात् पुरोवर्तिनि नास्तीति तदपेक्षया संसर्गः अपरमार्थः, न तु स्वरूपतः । आलम्बनत्वे च संनिहितत्वं नापेक्षितम्, असन्निहितस्यातीता-नागतादेरालम्बनत्वदर्शनात्, सन्निहितस्याप्यसान्निकृष्टस्यादर्शनात् । अतः स्वरूपतस्सत्यमेव सर्वत्रालम्बनमिति निष्कर्ष ॥

असत्यात्सत्यप्रातिपत्तिरिति केवलं डिम्भप्रलोभनम् । यथार्थ-ख्यातिपक्षे सत्यादेव सत्यप्रतिपत्तिः । अनिर्वचनीयख्यातिपक्षे उभय-मप्यनिर्वचनीयम्, कुतोऽसत्यात्सत्यप्रातिपत्तिः । अतः असत्यस्य हेतु-त्वमेव नास्ति । न तरां ज्ञानहेतुत्वम् । न तमां सत्यज्ञानहेतुत्वमिति-सूचयितुं ज्ञप्तयुत्पत्त्युदाहरणानि अभिन्नसमाधानसमाधेयानि षड्विधानि दर्शितानि ॥

अथासत्यपदाभिप्रेतानां बुद्धिव्यतिरिक्तानां हेतुत्वशङ्कां निराकर्तु-मुदाहरणद्वयं निदर्शयति—**रेखयेति** ॥ अत्र रेखैव वर्ण इति प्रथमः पक्षः । तत्र कल्पिता वर्णता हेतुरिति द्वितीयः । वर्णबुद्धिः तृतीयः । रेखावर्णात्मतयोस्सत्यानृतयोस्संभेदस्तुरीयः । संकेतसहकृतरेखापक्षः पञ्चमः । अथ संकेतनिरपेक्षरेखोदाहरणं दूषयति—**रेखागवयादपीति** ॥ आदिपदेन छायया श्येनानुमानादिपरिग्रहः ॥

८२. स्फोटवादः.

अथ वैयाकरणपुरस्करणं प्रत्याह—**नचैकरूपेति** ॥ शब्दः स्फोटः । स च नादैः स्वरव्यञ्जनैः स्फोट्यते स्फुटीक्रियत इति स्फोटपदव्यपदेश्यः नित्यो निरवयवः निष्क्रमः सत्यः एकः सकलार्थावबोधकः । नादाः पुनरसत्या अनित्या श्रोत्रग्राह्या अनन्ताः । यथोच्यते—

**उपायाश्शिक्षमाणानां बालानामुपलालनाः ।**
**असत्ये वर्त्मनि स्थित्वा ततस्सत्यं समीहते ॥ इति ॥**

अत्राध्यस्तवर्णस्य स्फोटस्यासत्यस्यार्थबुद्धिहेतुत्वमस्तीति शङ्काशयः । **अभिव्यङ्ग्यस्वरूपेणेति** ॥ कत्वादीनां शब्देऽध्यासाभावेऽपि अभिव्यक्तित्वविशिष्टस्य शब्दस्य बोधकस्य सत्यत्वान्नेदं निदर्शनमिति समाधानाशयः ॥

स्फोटवादोऽयं मीमांसकादिभिस्सर्वैरपि दार्शनिकैर्निराकृतः । वर्णशब्दतावादस्समर्थितश्च । तमेतं वादमुपवर्षापरनामधेयवृत्तिकारबोधायनसंमतं संक्षिप्याह—**शब्दस्यैकरूपत्वमपीति** ॥ शाब्दबोधः शब्द इत्यनुगतव्यवहारश्च स्फोटकल्पक इति वैयाकरणाशयः । वर्णैरेव तथातथा सङ्कलितैर्बोधोदयात् श्रावणत्वोपाधिना व्यवहारोपपत्तेः कल्पकमसिद्धमितीतरेषामाशयः ॥ विस्तृतश्चायं वादश्शाबरे भाष्ये कौमारिले वार्तिके चेत्यवधेयम् । अत्रापि प्रात्किञ्चित्सूचितम् ॥ (१०१ पु.) ॥

८३. असत्यत्वम्.

अथ नित्याप्रतीतत्वलक्षणं यदसत्यत्वं तादृशासत्यहेतुजन्यज्ञानविषयत्वं ब्रह्मणि नास्त्यैवेति प्रसङ्गहेतोरसिद्धिं शङ्कते—**ननु शास्त्रस्य गगनकुसुमवदिति** ॥ बाधार्हत्वलक्षणमसत्यत्वं स्वीकृतमिति तादृशहेतुजन्यज्ञानविषयत्वं लिङ्गविपर्यासन्यायेन निरुक्तासत्यत्वलक्षणमिथ्यात्वप्रसञ्जकं भवत्येवेति समाधत्ते—**नैवमसति शास्त्र इति** ॥

पूर्वमुभयोरविद्यामूलत्वेऽपि शास्त्रस्य परत्वात् प्रत्यक्षस्य पूर्वस्य बाध्यत्वमिति शङ्कायां ततः परेण बाधाभावमभ्युपेत्य कारणदोषनिबन्धनमप्रामाण्यं शास्त्रस्योक्तम् । इदानीं सर्वेभ्योऽपि परेण शून्यमेव तत्त्वमिति सुगतशास्त्रेण बाधमाह— **पश्चात्तनेति ॥ तस्यापि** ब्रह्मणोऽपि। **तत्तु** बुद्धवाक्यम् । **एतदपि** वेदान्तशास्त्रमपि । अयमाशयः— यथा भ्रान्तिमूलं वेदान्तशास्त्रं सत्यज्ञानं जनयतीत्युपगम्यते तादृशं सुगतशास्त्रं शून्यज्ञानं जनयतीत्युपगम्यतां ब्रह्मभ्रममूलत्वबुद्धभ्रममूलत्वयोरविशेषादिति । स्ववचनविरोधादिभिस्तर्कस्याप्रतिष्ठितत्वं, उपजीव्यविरोधात्कुतर्कत्वं चेति ॥

## 20. श्रुतिसमाधिः.

### ८४. निर्विशेषपरवाक्यम्.

एवं सविशेषविषयसर्वप्रमाणविरोधात् सामान्येन शास्त्रं न निर्विशेषविषयमिति स्थापितम् । सामर्थ्यहेतुश्चासिद्धीकृतः । अथ प्रत्येकं तत्तद्वाक्यैदंपर्यसमीक्षयाऽपि प्रमाणान्तराविरुद्धं शास्त्रप्रामाण्यमिति प्रतिपादयितुं श्रुतिप्रकरणप्रारम्भः । तत्र कारणशोधकवाक्ययोः परोक्तमर्थमनुवदति—**यदुक्तं वेदान्तवाक्यानीति ॥ वस्तुमात्रेति ॥** निर्विशेषेत्यर्थः । वक्ष्यमाणानेकविशेषणविशिष्टैदम्पर्यस्य विशदीक्रियमाणत्वादुच्यते— **तदयुक्तमिति ॥** कारणत्वोपलक्षितनिर्विशेषवस्तुपरत्वेनाभिमतं कारणवाक्यमुपादाय सविशेषपरतामाह—**सदेवेति ॥** वाक्यस्यास्यायमर्थः—इदं विभक्तनामरूपं बहुत्वावस्थं जगत् अग्रे सृष्टेः प्राक् एकमेव अविभक्तनामरूपतया एकत्वावस्थापन्नमेव अद्वितीयं अधिष्ठात्रन्तरशून्यं सदेवासीदिति । इदं पदमुद्देश्यपरम् । अवशिष्टं विशिष्टविधेयपरम् । अत्र सच्छब्दः मानसम्बन्धयोग्यतालक्षणं सत्त्वं

प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते। कारणविषयत्वस्वाभाव्यात् पूर्वापरश्रुत्यन्तरपरामर्शाच्च कारणत्वौपयिकगुणविशिष्टप्रकृतिपुरुषकालशरीरकपरमात्मानमुपस्थापयति। एकमेवेत्येवकारः वक्ष्यमाणस्रक्ष्यमाणकार्यबहुत्वावस्थाव्यवच्छेदमुखेन वैशेषिकादिप्रक्रियया वियदादीनां नित्यतामपि व्यवच्छिनत्ति। एकमद्वितीयमिति पदाभ्यामभिन्ननिमितोपादानत्वं सिद्ध्यति। सदेवेत्येवकारेण उत्तरत्रानूद्य निषेध्यमानः असत्कार्यवादलक्षणः आरम्भवादो व्यावर्त्यते। अग्रे सदित्यस्य अग्रे असदिति हि प्रतिद्वन्द्वि स्वरसतः प्रतीयते। असत्कारणवादलक्षणः शून्यवादः व्यावर्त्यते इति शाङ्कराशयः। क्षणिकवादः व्यावर्त्यते इति भास्कराशयः। शून्यवादक्षणिकवादयोर्निरस्तयोरप्यनिरस्ते ह्यारम्भवादे कारणविज्ञानेन कार्यविज्ञानप्रतिज्ञाया असिद्धिरेवेत्यसत्कार्यवादनिरासः स्वरस इत्यवधेयम्॥

एवं कार्यकारणयोः विशिष्टयोरद्वैते तात्पर्यवर्णनाच्च तत्त्वमसीत्यत्र निरुक्तसकलविशेषविशिष्टपरमात्मनः तत्पदार्थस्य सशरीरकजीवशरीकपरमात्मनश्च त्वंपदार्थस्य विशिष्टयोरद्वैते तात्पर्यवर्णनात् विशिष्टाद्वैतमिति सिद्धान्तस्य व्यवहारः। तत्त्वमसीत्युपसंहाररूपोपदेशस्तु जीवस्य स्वातन्त्र्यभ्रमनिवृत्तिप्रयोजनः॥

**उपदेशाय प्रवृत्तत्वादिति**॥ अनेन आत्माद्वैतपक्षे प्रबुद्धस्य गुरोः भ्रान्तिसिद्धं शिष्यं प्रत्युपदेशानुपपत्तिः सूच्यते। अत्रोपक्रमप्रभृति तत्त्वमसीत्युपसंहारपर्यन्तं निरुपाधिकं प्रशासनादिकमपूर्वं मानान्तरागोचरत्वरूपमुपदर्शितम्। अभ्यस्तं च बहुशः। तस्य तावदिति फलम्। आख्यायिका अर्थवादः। त्रिवृत्करणादिरुपपत्तिः। एवं षड्विधानि तात्पर्यलिङ्गानि—

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति संगृहीतान्यत्र पुष्कलानीति निर्णयः ॥

विशेषनिषेधकण्ठोक्तिमद्वाक्यत्वेनाभिमतं परविद्यावाक्यं व्याख्याति—**अथ परेति** ॥ अत्र हेयलक्षणाः विशेषरूपभेदाः कण्ठतो निषेध्यन्ते इति भावः ॥

अथ कारणत्वशङ्कितदोषव्यावृत्तिमुखेन सामानाधिकरण्यानुपपत्त्या अखण्डार्थपरत्वेनाभिमतं वाक्यं व्याख्याति—**सत्यं ज्ञानमिति** ॥ अत्राखण्डार्थपक्षे लक्षणा पर्यायता अनर्थकता सामानाधिकरण्यलक्षणहानिश्चेति चत्वारो दोषा उक्ताः । शौक्ल्यादिवैषम्यं शाब्दं स्पष्टम्, तत्तद्व्यावृत्तस्वरूपस्य शब्दोपात्तत्वाल्लक्षणाऽभावात् । **प्रवृत्तिः** विशेष्यबोधनम् । **निमित्तं** तत्र विशेषणम् । **अर्थे** विशेष्ये । इति सामानाधिकरण्यलक्षणघटकपदानामर्थः । सत्यज्ञानवाक्यविचारः शास्त्रप्राबल्यवादे विस्तृतः । इदमत्रावधेयम् – सत्यादिपदं द्वितीयान्तं वेदेत्यनेनान्वेति वाक्यभेदस्यानुचितत्वात् । अनन्तपदं योगेन सर्वपरिच्छेदं व्यवच्छिन्दत् रूढ्या परमपुरुषमभिधत्ते नारायणादिपदवत् ॥

एवं सामानाधिकरण्यानुपपत्तिं निराकृत्य कारणवाक्यान्तरशोधकवाक्यान्तरैकार्थ्यं निर्विशेषपरताभ्युपगममूलं निराकर्तुमनुवदति—**यदुक्तमिति** ॥ **गुणतोऽपीति** ॥ सजातीयविजातीयव्यावृत्त्योः एवैकपदाभ्यां सिद्धेः परिशेषात् स्वगतभेदनिषेधकमित्यर्थः । **अनुपपन्नमिति** ॥ पूर्वापरपरामर्शेन प्रसक्तनिमित्तान्तरनिषेधेन विचित्रशक्तियोगप्रतिपादनपरमद्वितीयपदमिति भावः ॥ **उपादानेति** ॥ भाव्यवस्थाविशेषस्य उपादेयत्वस्य प्रागवस्थायोग उपादानता ॥

**सर्वशाखेति** ॥ "एकं वा संयोगरूपचोदनाख्याऽविशेषात्" इति द्वितीयाध्यायेऽन्तिमं शाखान्तराधिकरणमिति पूर्वतन्त्रप्रसिद्धो न्यायः । तत्र हि—वेदैकत्वे प्रतिशाखं पुरुषभेदात् सर्वेषामुत्पत्तिपरत्वेऽपि न कर्मभेदः । अतएवैकस्मिन् कर्मणि विरुद्धानां नानाशाखागताङ्गानां विकल्पः । अविरुद्धानां समुच्चयः इति निर्णयः । अतः परिग्रहलक्षणोपसंहारफल एव स न्याय इति भावः । शोधकान्तरैकार्थ्यं व्युदस्यति—**नच निर्गुणेति** ॥ विषयविभागादविरोध इति भावः ॥

ज्ञानस्वरूपतोक्तिरूपमार्थगुणनिषेधं परिहरति—**ज्ञानमात्रस्वरूपेति**॥ ज्ञानस्य ज्ञानानाश्रयत्वव्याप्तिः धर्मभूतज्ञानत्वोपाधिदुष्टेति भावः॥

कल्याणगुणान् ज्ञातृत्वप्रमुखान् वदन्तीः श्रुतीरुदाहृत्य निर्गुणश्रुतिविरोधं परिहरति—**नित्यो नित्यानामिति** ॥ **अन्यतरामिथ्याविषयत्वेति** ॥ "नीचाः कलहमिच्छन्ति सन्धिमिच्छन्ति साधवः" इति भावः ॥

**एको देवस्सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतन्तरात्मा ।**
**कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च ॥**
**स विश्वकृद्विश्वविदात्मयोनिः यः कालकालो गुणी सर्वविद्यः ।**
**प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥** (श्वे. ६).

अत्र प्रथमे पद्ये गुणसामान्यं निषेध्यते । द्वितीये गुणसामान्यं विधीयते । "एष आत्माऽपहतपाप्मा" इत्यादौ गुणविशेषविधिनिषेधौ दृश्येते । अत्र सर्वसमीकरणाय उत्सर्गापवादसामान्यविशेषन्यायावाश्रयितव्यौ । उत्सर्गापवादन्यायो नाम विरोधपरिहाराय शब्दोपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य सङ्कोचलक्षणः । "पदे जुहोति, आहवनीये जुहोति" इत्यादौ प्रसिद्धः । सामान्यविशेषन्यायस्तु शब्दो-

पात्तविशेषविषये सामान्यशब्दस्य सङ्कोचलक्षणः "पशुना यजेत" इत्यादौ प्रसिद्धः ॥

अथ वाङ्मनसनिवृत्त्युक्तिरूपमार्थगुणनिषेधं प्रत्याह— **भीषाऽस्मादिति** ॥ उक्तार्थस्योपक्रमानुगुण्यमाह—**सोऽश्नुते सर्वानिति** ॥ अत्र सहशब्दः "क्षीरेण सह ओदनं भुङ्क्ते" इत्यादाविव भोज्यसाहित्यपरः, न तु "पुत्रेण सह भुङ्क्ते" इत्यादाविव भोक्तृसाहित्यपरः। "त इमे सत्याः कामाः" इतिश्रुत्यन्तरे कामानां कल्याणगुणानां सत्यत्वं स्पष्टमुच्यते। अतः श्रुतेः गुणेष्वादरावगमात् गुणनिषेधे तात्पर्यकल्पनं श्रुतिप्रतारणमेवेति भावः ॥

सगुणस्यैव ज्ञेयत्वसंभवात् ज्ञेयत्वव्युदासेन निर्गुणं ब्रह्मेति भ्रान्तिनिदानभूतां श्रुतिं व्याख्याति—**यस्यामतमिति** ॥ **असत् ब्रह्मेति वेद चेदिति** ॥ ब्रह्म वेदेत्यसच्चेदित्यर्थः। **अस्ति ब्रह्मेति** ॥ ब्रह्म वेदेत्यस्ति चेदित्यर्थः। धात्वर्थप्रधानोऽयं निर्देशः "ब्रह्मविषयज्ञानासद्भावसद्भावाभ्याम्" इति विवरणात्। यस्यामतमित्यस्यार्थमाह— **यतो वाचो निवर्तन्ते इति** ॥

ज्ञातृत्वनिषेधपरतयाऽभिमतश्रुत्यर्थमाह—**यत्तु न दृष्टेरिति** ॥ अस्य पञ्चम्यन्तत्वपक्षे तार्किकदर्शननिरासोऽभिमतः। तदा हि व्यतिरिक्तामिति पदमध्याहृत्य जडरूपमात्मानमित्यर्थोऽवगन्तव्यः। षष्ठ्यन्तत्वपक्षे कापिल हैरण्यगर्भादि दर्शननिरासोऽभिमतः। तस्मिन् हि दर्शने-जीवस्यैव जगत्कारणत्वं तस्यैव च ज्ञेयत्वमभिमतम्। आनन्दस्वरूपतोक्तिं व्याख्याति—**आनन्दो ब्रह्मेति** ॥ अनुकूलतया वेदनमेवह्यानन्दः। ततः ज्ञानस्वरूपतोक्तिन्याय एवात्रापीति भावः ॥

८५. भेदनिषेधपरवाक्यम्.

अथ भेदनिषेधाभिमतानि वाक्यानि व्याख्याति—**यदिदमुक्तमित्यादिना** ॥ तदिति परिहृतमित्यनेनान्वेति । अत्र भेदशब्दः ज्ञातृज्ञान ज्ञेयरूप तत्तद्वस्तुपरः । **ब्रह्मकार्यतयेति** ॥ ब्रह्मकार्यत्वात् ब्रह्मात्मकत्वाच्च कार्यकारणभावनिबन्धनं शरीरात्मभावनिबन्धनं च किंचिदैक्यं प्रतीयते, तच्च प्रकार्यैक्यं, तदैक्यश्रुतीनामर्थः । तच्छेषभूत एव भेदनिषेधस्सर्वत्र दृश्यते । शेषत्वं च विहितैक्यस्थिरीकरणलक्षणः किंचित्कारः। एवं च कार्यकारणभावनिबन्धनैक्यस्य प्रत्यनीको भेदः कार्यात्मा आरम्भवादप्रसिद्धो भेद एकः । शरीरात्मभावनिबन्धनैक्यस्य प्रत्यनीको भेदः सांख्यादिसमयप्रसिद्धः स्वतन्त्रवस्तुरूपः कश्चिद्भेदः । तदुभयमुभयविधैक्यशेषतया प्रतिषिध्यते, न भेदसामान्यमिति तात्पर्यार्थः, यतः प्रकृते सामानाधिकरण्येनैक्यं प्रतीयते । सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तकम् । भेदसामान्यप्रतिषेधे सामानाधिकरण्यमेव भज्येत । अतः भेदविशेष एवात्र सर्वत्र स्वीकर्तव्य इति ॥

**न पुनर्बहुस्यामिति** ॥ अयमर्थः—"नेह नानास्ति" इत्यादिषु भेदनिषेधवादेषु प्रतियोगितया निर्दिष्टाः सामान्यतो भेदाः "बहु स्यां प्रजायेय" इत्यादीनां भेदविशेषापदेशानामवैयर्थ्याय विशेषव्यतिरिक्ता इति गोबलीवर्दन्यायेन निर्णयः । स हि न्यायः वैयर्थ्यपरिहाराय शब्दोपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य सङ्कोचलक्षणः "गामानय, बलीवर्दं चानय" इत्यादौ प्रसिद्धः । तथा भेदविशेषस्य विधानात् विरोधपरिहाराय "नेहनानास्ति" इत्यादयः भेदसामान्यनिषेधवादाः विहितव्यतिरिक्तविषया इत्यपि उत्सर्गापवादन्यायस्य प्रवृत्तिरस्ति । तथा "न तत्समश्चाभ्यधिकश्च दृश्यते" इति भेदविशेषनिषेधस्यापि

दर्शनात् सामान्यनिषेधः विशेषनिषेधपर्यवसायीति वक्तुं शक्यतया सामान्यविशेषन्यायलक्षणस्य छागपशुन्यायस्याप्यत्र प्रवृत्तिरस्तीत्यवधेयम् ॥

अत एव श्रुतप्रकाशिकायां "उत्सर्गापवादनयमभिप्रयन्नाह—**नपुनरिति**" इत्यवतारितम् । श्रुतदीपिकायां तु "गोबलीवर्दनयमभिप्रयन्नाह—**नपुनरिति**" इत्यवतारितम् ॥ अत्र वैयर्थ्यदृष्ट्या गोबलीवर्दन्यायावतारः । विरोधदृष्ट्या उत्सर्गापवादन्यायावतार इत्यभिप्रायः । अपच्छेदन्यायस्तु नात्र प्रवर्तते । तस्यानियतपौर्वापर्यविषयत्वात् । प्रकृते विरोधः पौर्वापर्यं च नियते । यत एवमुदाह्रियते—

**पौर्वापर्यं विरोधश्च पूर्वाप्रामाण्यमेव च ।**
**नियमान्नास्ति यत्रासावपच्छेदनयो भवेत् ॥**

इति भावप्रकाशिकायाम् । अपि तु विरोधनयादुपक्रमनयाद्वा परभूतभेदनिषेधोत्पत्तिप्रतिबन्ध एव स्यादित्यवधेयम् ॥

भेददर्शनस्य भयहेतुत्वोपदेशः अभेदः परमार्थ इति सूचयतीत्यभिप्रेतं वाक्यं व्याख्याति—**यदा ह्येवेति** ॥ **तदुत्पत्तिस्थितीति** ॥ तदुत्पत्त्यादि कर्म क्रिया यस्येति बहुव्रीहिः । अत्रान्तरशब्दो विच्छेदपर इति भावः ॥

८६. सूत्रविचारः.

ब्रह्मनिर्विशेषत्वान्यमिथ्यात्वपरतयाऽभिप्रेतं सूत्रद्वयं विचारयति—**यदुक्तं न स्थानत इति** ॥ (३–२-११) **न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि** ॥ इति सूत्रम् । अस्यायं पूर्वपक्षेऽर्थः—उभयलिङ्गत्वं सविशेषत्वनिर्विशेषत्वे । स्वभावतः परं ब्रह्म नोभयलिङ्गं, विरोधात् । परस्य पृथिव्याद्युपाधिरूपस्थानतोऽपि परं नोभयलिङ्गम् । सर्वत्र श्रुतिषु निर्विशेषत्वेनैवोपदेशादिति ॥ **मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्** ॥ (३–२–३) इति सूत्रस्यायमर्थः—स्वप्ने सृष्टिः

मायामात्रं केवलमपरमार्था । कार्त्स्न्येन देशकालनिमित्ताबाधितत्वादि-संपत्त्या परमार्थवस्तुगतया अनभिव्यक्तस्वरूपत्वात् असंस्पृष्टस्वरूपत्वा-द्दुर्निरूपत्वादिति । इदं स्वप्नपरमपि दुर्निरूपत्वाविशेषात् कृत्स्नमिथ्यात्व-प्रदर्शनपरमिति भावः ॥

सिद्धान्ते अयमर्थः—**न स्थानत इति॥** चेतनाचेतनरूपसर्वपदार्था-न्तर्यामित्वेऽपि स्थानरूपपदार्थप्रयुक्तः परस्य न दोषगन्धः, सर्वत्र श्रुति-षूभयलिङ्गं ब्रह्मावगम्यते । उभयलिङ्गत्वं च सकलहेयप्रत्यनीकत्वं सकल-कल्याणगुणाकरत्वं च । **मायामात्रमिति ॥** स्वाप्नः प्रपञ्चः मायामात्रं अत्याश्चर्यरूपत्वात्परमपुरुषसृष्टः । न जीवसृष्टः । जीवस्य संसारदशायां कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् सत्यसङ्कल्पत्वादिगुणाणां सर्वांशेन तिरो-हितत्वादिति ॥

## 21. स्मृतिसमाधिः.

८७ भगवद्गीता.

यद्यपि श्रुतेस्सविशेषपरत्वे तदनुरोधित्वात् स्मृतिरपि तत्परै-वेति सिद्धा । तथापि स्मृतेः केवलया पूर्वापरालोचनया सविशेषपरता विज्ञायते इत्यारम्भः । यतः पूर्ववादिना स्वाभिमतं श्रुत्यर्थमापाततः प्रदर्शयन्त्येव वाक्यान्युपात्तानि । तत्र पुराणमपि स्मृतिरेव । तथापि लोके विभज्य व्यवहारेणात्रापि पृथग्व्यपदेशः । पूर्वपक्षे भगवद्गीतावच-नस्य पुराणवचनात्पश्चादुदाहृतत्वेऽपि स्वतो वक्तृवैलक्षण्याभ्युपगमा-दितिहासत्वाच्च पूर्वं भगवद्गीतावचनमुपादत्ते—**स्मृतिपुराणयोरपीति ॥**

पूर्वपक्षे भगवद्गीतावचनत्रयमुदाहृतम् । तत्राद्यं विभूत्यध्याये दशमे उपक्रमे "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इति । (१०—२०) सर्वस्यापि भूतजातस्य एक एवात्मा भगवानिति तदर्थः ।

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति द्वितीयम्। (१३–२) चिदचिद्विभागाध्यायगतम् । अनेन जीवब्रह्मैक्यमुपदिश्यते । "न तदस्ति विना यत्स्यात् मया भूतं चराचरम्" इति तृतीयम्। इदं विभूत्यध्यायोपसंहारगतम्। (१०–३९) अत्रात्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वमुच्यते इति पूर्ववादिनामाशयः ॥

उत्तरवादिनामयमाशयः—यद्यप्येतानि वचांसि आपाततो निर्विशेषपरत्वभ्रमास्पदानि । पौर्वापर्यादिन्यायपरामर्शे भ्रमो बाधितो भवति । तथाहि—अस्यां हि भगवद्गीतायामसंमूढपदघटितं वचनत्रयमुपलभ्यते ! तत्रेदं प्रथमम्—

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्।**
**स्थिरबुद्धिरसंमूढः ब्रह्मविद्ब्रह्मणि स्थितः ॥ ५-२० ॥**

अत्र समदर्शने सति असंमूढत्वमुक्तम्। अवशिष्टस्य वचनद्वयस्य योऽवगम्यमानोऽर्थः स एव सिद्धान्तः परमार्थ इति न्यायविदां निर्णयः। तत्र प्रथममिदम्—

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम्।**
**असंमूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ १०-३ ॥**

इति। अत्र पूर्वार्धे मामित्यादिभिश्चतुर्भिः पदैः अचेतनबद्धमुक्तनित्यविलक्षणः परमात्मोपदिश्यते । उत्तरार्धेनैवं वेदितुः असंमूढत्वलक्षणं तत्त्वदर्शित्वमुच्यते । द्वितीये "उत्तमः पुरुषः" इत्यत्रः (१५-१७)—

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद्भजति मां सर्वभावेन भारत ॥**

इत्यनेन बद्धमुक्तविलक्षणस्य पुरुषोत्तमस्य वेदितुरेव सर्ववित्त्वमुच्यते । अत्र व्यावर्त्यमिथ्यात्वे व्यावृत्तमपि मिथ्यैव स्यादित्युभयोः सत्यत्वं मिथो वैलक्षण्यं च शास्त्रार्थ इति सारार्थः। एवमुभयोरपि सत्यत्वे परस्परसंबन्ध

उपदिश्यते—**मत्स्थानीत्यादिना** उपक्रमोपसंहारमध्यगतेन भक्तियोगाध्यायस्थेन (९-४) ॥

अथ सप्तमे प्रबुद्धप्राधान्याध्याये (७-६, ७) एवं वेदितुरेव श्रैष्ठ्यमुच्यते—**अहं कृत्स्नस्येति** ॥ **न तदस्तीत्यत्र** अविनाभावशब्दस्य प्राचुर्येण संबन्धे प्रयोगात् विनाशब्दस्य संबन्धाभावोऽर्थः । ततश्च मदसंबद्धं मदनात्मकं किमपि नास्तीति तदर्थः । अतस्सर्वापि भगवद्गीता सविशेषपरैवेति निर्णयः ॥

८८. विष्णुपुराणं प्रत्यस्तमितश्लोकः.

पूर्ववादिना विष्णुपुराणवचनानि एकादशश्लोकरूपाणि निर्विशेषं ब्रह्म सत्यं जगन्मिथ्येत्यत्र प्रमाणतयोपात्तानि । तत्र—

**प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।**
**वचसामात्मसंवेद्यं तत् ज्ञानं ब्रह्मसंज्ञितम् ॥**

इति श्लोकः प्रथमः पुराणोपसंहारस्थः । (६-७-५३)—

**ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।**
**तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥**

इति द्वितीयः श्लोकः पुराणोपक्रमस्थः । (१-२-६)—

**परमार्थः त्वमेवैको नान्योऽस्ति जगतः पते ।**
**तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥**
**यदेतद्दृश्यते मूर्तमेतत् ज्ञानात्मनस्तव ।**
**भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥**
**ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।**
**अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥**
**ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् ।**
**ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥**

इति चतुःश्लोकी आदिवराहस्तुत्यन्तर्गता । (१, ४, ३८-४१)—

तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥ (२-१४-३१)
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥ (२-१३-९०)
वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥ (२-१४ ३२)

सोऽहं स च त्वं स च सर्वमेत-
दात्मस्वरूपं त्यजभेदमोहम् ।
इतीरितस्तेन स राजवर्यः
तत्याज भेदं परमार्थदृष्टिः ॥

इयं चतुश्लोकी आदिभरतोपाख्यानान्तर्गता । (२–१६–२४)

विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥

अयं श्लोकः पुराणोपसंहारोपसंहारस्थः । (६–७–९६) पञ्चपादिका-विवरणे समुदाहृतः ॥

उदाहृतेष्वेकादशसु श्लोकेषु प्रथमः निर्विशेष ब्रह्मपरः । द्वितीय तृतीयौ जगन्मिथ्यात्वपरौ । तुरीयपञ्चमावुक्तार्थविवरणरूपौ । तत्रसंप्रदायः षष्ठेनोच्यते । ततश्चतुर्भिः सप्तमादिदशमान्तैः जीवानामैक्यमुच्यते । जीवब्रह्मैक्यं मुख्यमेकादशस्य विषयः ॥

अत्रोत्तरवादिनोऽयमभिप्रायः—यद्येते श्लोकाः मुक्तका भवेयुः तदा आपाततः निरुक्तार्थप्रतिपादकास्स्युः । किं तु प्रबन्धान्तर्गता—

स्तुतिवाक्यकृतश्चैष जनानां मतिविभ्रमः ।
पौर्वापर्यापरामृष्टश्शब्दोऽन्यां कुरुते मतिम् ॥

इति संबन्धाक्षेपपरिहारश्लोकवार्तिकोक्तन्यायेन पौर्वापर्यपरामर्शेनैव शब्दानामर्थो वर्णनीयः "यत्परश्शब्दस्स शब्दार्थः" इति न्यायात् । तथैव

वक्ष्यते । पूर्ववादी तु स्वहृदयानुसारेण न्यायपरामर्शं विनैव संगतिविहीनान् श्लोकान् संकलय्य स्वसिद्धान्तं प्रकाशयतीति ॥

तदुच्यते—प्रत्यस्तामिति श्लोकस्य (६-७-५) ब्रह्मपरत्वं पूर्ववादिसंमतम् । मुक्तात्मपरत्वं सिद्धान्तिसंमतम् । तत्र ब्रह्मपरत्वे प्रत्यस्तमितभेदं सत्तामात्रमिति पदद्वयस्य पराभिमतार्थपरत्वव्युदासाय तत्प्रकरणोपक्रमगतान् ब्रह्मण उभयलिङ्गत्वपरान् श्लोकानुदादहरति—**स सर्वभूतेति** ॥ (६, ५, ८३-८७).

अगोचरं वचसामित्यस्यापि पराभिमतार्थपरत्वव्युदासाय शब्दवाच्यत्वपरान् श्लोकानुदाहरति—**शुद्धे महाविभूतीति** ॥ (६, ५ ७२-७९) अत्र भकारगकारयोः समुदायस्य वकारस्य तत्समवेतस्य चार्थाः क्रमेण कथ्यन्ते । अनित्यस्याप्यर्थोऽयम्—**विना हेयैरिति** ॥ पश्यकः कश्यपोऽभवदितिवत् नेतिपदमनित्यभवत् । पूज्यपदार्थोक्तिः योगः । परिभाषा रूढिः । उपचारः प्रयोगः ॥

एतत्प्रकरणोपसंहारगता उभयविभूतिपराः श्लोकाः—**समस्ताश्शक्तय इति** ॥ (६, ७, ७०-७२) प्रथमे शुभाश्रयलक्षणदिव्यमङ्गलविग्रहयोग उच्यते । यत्र यस्मिन् रूपे चेतनाचेतनकर्मरूपाः प्रागुक्ताश्शक्तयः अस्त्रभूषणादिरूपेण प्रतिष्ठिताः आश्रिता इत्यर्थः । समस्तशक्ति तत् ब्रह्म चेष्टावन्ति रूपाणि करोतीत्यन्वयः ॥

एवमुपसंहारस्य बुद्धिस्थत्वात् ज्ञानस्वरूपमत्यन्तमिति (१-२-६) श्लोकस्य सविशेषपरताव्युत्पादनाय तदुपसंहारगतं श्लोकं पठति—**एवंप्रकारमिति** ॥ (१-२२-५३) श्लोकोऽयं परमसाम्यापत्तिनिरूपणाय मुक्तात्मगुणान् परमात्मन्यतिदिशति । मुक्तात्मस्वरूपं तु—

**निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ।**
**आत्मसंबोधविषयं सत्तामात्रमलक्षणम् ॥**

इत्यादिभिः (१,२२,५०–५२) त्रिभिरुच्यते । अत्रामलमित्यधिकगुणोक्तिः ॥

एवमुपक्रमे सविशेषपरत्वं दर्शयति—**परः पराणामिति पञ्चभिः** ॥ (१,२,१०–१४) सर्वोत्कर्षमुक्त्वा नित्यत्वमुच्यते—**अपक्षयेति** ॥ अन्तर्यामित्वमुच्यते—**सर्वत्रासाविति** ॥ वासुदेवस्यैव ब्रह्मत्वम्—**तद्ब्रह्मेति** ॥ तस्यैव त्रिविधमानन्त्यम्—**तदेव सर्वमिति** ॥

एवं शास्त्रोपक्रमे उभयलिङ्गत्वादिकमुक्त्वा उपसंहारेऽपि तदुच्यते—**प्रकृतिर्येति** ॥ (६,४,३९–४०) एवं शास्त्रस्योपक्रमोपसंहारयोः प्रकरणस्य चोपक्रमोपसंहारयोः सविशेषमेव ब्रह्म प्रतिपाद्यमिति दर्शितम् ॥

अथास्य ब्रह्मणः जगत्कारणस्य निर्दोषतां वक्तुं जीवब्रह्मणोश्शरीरशरीरिभावरूपस्संबन्ध उच्यते उपक्रमे—**द्वे रूपे इति सार्धद्वयेन** ॥ (१,२२,५५–५७) तथोपसंहारेऽप्युच्यते—**विष्णुशक्तिरिति त्रिभिः** ॥ (६,७,६१–६३) तथा मध्येऽप्युच्यते—**प्रधानं च पुमानिति त्रिभिः** ॥ (२,७,२९–३१) एवं च प्रपञ्चस्य पारमार्थ्यं स्पष्टमुच्यते—**तदेतदक्षयं नित्यं जगदिति** ॥ (१–२२–६०) एषामर्थं संगृह्णाति—**इत्यादिना परं ब्रह्मेति** ॥ **शुभाश्रयमिति** ॥ शुभत्वमखिलहेयनिवर्तकत्वम् । आश्रयत्वं योगयुञ्जानसालम्बनत्वम् । **भावनात्रयेति** ॥ भावना वासना संस्कारः । मूर्तामूर्तपदवाच्ययोः बद्धमुक्तयोः ब्रह्मरूपत्वोपदेशात्तेनतेनरूपेणोपास्यत्वप्रसक्तौ बद्धानां सनकादीनां वयं ब्रह्मैव प्राप्नुम इति ब्रह्मैकपरायणत्वरूपब्रह्मभावनान्वितत्वात्साधनावस्थायां स्थितत्वात् न तद्रूपेण ध्याने कश्चिदुपकारः । देवादीनां वयं कर्मैव कुर्म इति कर्म परायणत्वात्तत्रापि तथैव । हिरण्यगर्भादीनां वयं तूभयं संदध्महे इति भावनावत्त्वात्तत्रापि तथैव । मुक्तरूपं तु परिशुद्धमपि योगमारुरुक्षूणां

मनसो विषयीकरणानर्हतया नैवोपकारकमिति प्रत्यस्तमिति श्लोकेनोच्यते। तस्मात् शक्तित्रयाश्रयशुभाश्रयलक्षणाप्राकृतादिव्यमङ्गलविग्रहविशिष्टवेषेण भगवान् ध्यातव्य इति प्रकृतार्थः ॥

स्वोक्तस्यार्थस्योपपादकानीमानि वचनान्याद्यन्तरूपाणि—**न तद्योगेत्यादीनि** ॥ (६, ७, ५५-७२) तत्र विष्णुधर्म संवादः—**तथा चतुर्मुखेत्यादि सार्धत्रिकम्** ॥ अयमत्र पुराणपाठः—

**प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।**
**वचसामात्मसंवेद्यं तत् ज्ञानं ब्रह्मसंज्ञितम् ॥**
**तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम्।**
**विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥**
**न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः।**
**ततः स्थूलं हरे रूपं चिन्तयेद्विश्वगोचरम् ॥ ५५ ॥**
**हिरण्यगर्भो भगवान् वासुदेवः प्रजापतिः।**
**मरुतो वसवो रुद्राः भास्करास्तारका ग्रहाः ॥**
**गन्धर्वयक्षदैत्याद्याः सकला देवयोनयः।**
**मनुष्याः पशवश्शैलाः समुद्रास्सरितो द्रुमाः ॥**
**भूप भूतान्यशेषाणि भूतानां ये च हेतवः।**
**प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् ॥**
**एकपादं द्विपादं च बहुपादमपादकम्।**
**मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् ॥**
**एतत्सर्वमिदं विश्वं जगदेतच्चराचरम्।**
**परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥ ६० ॥**
**विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा।**
**अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥**
**यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा।**
**संसारतापानखिलानवाप्नोत्यातिसंततान् ॥**
**तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता।**
**सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥**

अप्राणवत्सु स्वल्पा सा स्थावरेषु ततोऽधिका ।
सरीसृपेषु तेभ्योऽपि ह्यतिशक्तया पतत्रिषु ॥
पतत्रिभ्यो मृगास्तेभ्यः तच्छक्तया पशवोऽधिकाः ।
पशुभ्यो मनुजाश्चातिशक्तया पुंसः प्रभाविताः ॥ ६५ ॥
तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ।
शक्रस्समस्तदेवेभ्यः ततश्चातिप्रजापतिः ॥
हिरण्यगर्भोऽपि ततः पुंसश्शक्त्युपलक्षितः ।
एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव ॥
यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ।
द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते ॥ ६८ ॥
अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ।
समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ ७० ॥
समस्तशक्ति रूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥
जगतामुपकाराय न सा कर्मनिमित्तजा ।
चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥ इति ॥ ७२ ॥

८९. ज्ञानस्वरूपश्लोकः.

अथ ज्ञानस्वरूपमिति द्वितीयोदाहरणविचारः—**ज्ञानस्वरूपमितीति** ॥ जगच्च स इति सामानाधिकरण्येन कृत्स्नस्य मिथ्यात्वं प्रतीयत इति शङ्कते—**जगद्ब्रह्मणोस्सामानाधिकरण्येनेति** ॥ **सामानाधिकरण्यं त्विति** ॥ प्रकारभेदेन प्रकार्यैक्येन अन्यतरबाधनिरपेक्षं प्रथमविद्वद्वैयाकरणसंमतसामानाधिकरण्यलक्षणानुगुणं बहुविद्वत्परिगृहीतमङ्गीक्रियते, न तु पारिभाषिकं संकेतसिद्धं अखण्डार्थत्वलक्षणमिति भावः ॥

अथास्यैव विस्तरः—**तथाहि यतो वा इति** ॥ **अवसिते सतीति** ॥ अनेन ब्रह्ममीमांसाश्रवणं कृतमित्युक्तं भवति। अनन्तरमिति-

हासपुराणश्रवणं प्रतारणपरिहाराय कर्तव्यमिति विधीयते--**इतिहासेति** ॥ महाभारतोपक्रमे वचनमिदं श्रूयते । तत्र धर्मशास्त्राणि कर्मणां भगवदाराधनरूपतां बोधयन्ति सन्ति पूर्वभागोपबृंहणानि भवन्ति । इतिहासपुराणानि तु कर्मणां ब्रह्मविद्याङ्गतामुपदिशन्ति सन्ति उत्तरभागोपबृंहणानि भवन्ति । ज्ञानस्वरूपमित्युपक्रमस्याप्युपक्रमं प्रश्नवचनं दर्शयति–**सोऽहमिच्छामीति** ॥ (१,१,४–५) **सृष्टिस्थितीति** ॥ स्थितिलययोः प्रयोजकव्यापाराभिप्रायेण कर्मभूतमित्युक्तिः । **अतो विष्णोस्सकाशादिति** ॥ (१–१–३१) अत्र उत्तरवचने जगच्च स इति सामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति भावः ॥

**परब्रह्मभूतं भगवन्तं विष्णुमिति** ॥ अत्र नमस्कारसप्तश्लोकीं व्याख्याति । सैषा सप्तश्लोकी—

**अविकाराय शुद्धाय नित्याय परमात्मने ।**<br>**सदैकरूपरूपाय विष्णवे सर्वजिष्णवे ॥**<br>**नमो हिरण्यगर्भाय हरये शङ्करायच ।**<br>**वासुदेवाय ताराय सर्गस्थित्यन्तकारिणे ॥**<br>**एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः ।**<br>**अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे ॥**<br>**सर्गस्थितिविनाशानां जगतो यो जगन्मयः ।**<br>**मूलभूतो नमस्तस्मै विष्णवे परमात्मने ॥**<br>**आधारभूतं विश्वस्याप्यणीयांसमणीयसाम् ।**<br>**प्रणम्य सर्वभूतस्थं अच्युतं पुरुषोत्तमम् ॥**<br>**ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः ।**<br>**तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥**<br>**विष्णुं ग्रासिष्णुं विश्वस्य स्थितिसर्गे तथा प्रभुम् ।**<br>**प्रणम्य जगतामीशमजन्मक्षयमव्ययम् ॥**

**कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः ।**
**पृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥**

इति ॥ (१,२,१–८) उत्तरत्रापि प्रश्नप्रतिवचनग्रन्थानुपपत्तिं दर्शयति—**यदि निर्विशेषेति** ॥ (१,३,१-३) ॥

९०. वराहभरतचतुश्श्लोकीद्वयम्.

आदिवराहस्तुतिचतुःश्लोकीं समाधत्ते—**परमार्थस्त्वमिति** ॥ मूर्तं मूर्तिः । विधेयसमर्पकपदमिदम् । अत्र प्रथमे श्लोके सर्वव्यापकत्वं द्वितीये सर्वस्य स्वनिष्ठत्वभ्रमः तृतीये देहात्मभ्रमः तुरीये तत्त्वज्ञानेन सर्वभ्रमानिवृत्तिश्चोच्यते ॥

आदिभरतचतुश्श्लोकीं व्यवहितां समाधत्ते—**तस्यात्मपरेति** ॥ एकमयं, स्वार्थिको मयट् । सर्वत्रावस्थितस्याप्यात्मनः एकमेव विज्ञानस्वरूपं परमार्थभूतम् । ज्ञानैकाकारः सर्वेषां समान इत्यर्थः । देवमनुष्याद्याकारस्तु भ्रान्तिसिद्ध इत्यर्थः । अस्याश्च चतुःश्लोक्याः सर्वेषां जवानां ज्ञानैकाकारवत्त्वेन ऐक्यं साम्यापदाभिधेयं प्रकाराद्वैतलक्षणं प्रमेयभूतम् । तत्र प्रथमे साम्यं द्वितीये तथाविद्वद्व्यवहारः तृतीये दृष्टान्तः तुरीये संप्रदाय इति प्रतिपाद्यविभागः ॥

९१. विभेदजनकश्लोकः.

विभेदनक इत्युपसंहारश्लोकस्यायमर्थः (६-७-९६)—विभेदः विविधो भेदः देवमनुष्यादिलक्षणः । तादृशभेदहेतुभूतं कर्म अज्ञानं तस्मिन् भगवदुपासनेन ध्वस्ते सति जीवपरयोः हेत्वभावात् असन्तं निरुक्तभेदं कः पश्यतीत्युच्यते इति ॥ एवमर्थमुपपादयितुं पीठिकामारचयति—**विभेदजनकेऽज्ञानइति** ॥ **देहात्मनोरिवेति** ॥ यथा न जातुचिदपि प्रायेण शास्त्रविदां देहजीवयोरभेदशङ्कागन्धस्याप्यवकाशः तथा

जीवपरयोस्तादृशमनवकाशं सूचयितुं श्रुतिस्मृतिषु परस्य तद्व्यातिरिक्तस्य च शरीरशरीरिभावोपदेश इति हृदयम् ॥

अत्र जीवपरयोः स्वरूपैक्यपरताभ्रमे साक्षाद्विरोधं तिसृभिश्श्रुतिभिराह— **तथाच श्रुतिरिति** ॥ अत्र निखिलहेयास्पदत्वं निखिलहेयप्रतिभटत्वं, सकलदोषाकरत्वं सकलकल्याणगुणाकरत्वं, निरुपाधिकं नियमनं च श्रुतीनामर्थाः । प्रागुक्तं प्रकरणविरोधं चाह—**स सर्वभूतेति** ॥ अत्रोपभयलिङ्गत्वं तद्राहित्यं विरुद्धधर्मावुक्तौ । अस्मिन्नर्थे संप्रदायमप्याह— **उभयेऽपीति** ॥ सूत्रेष्वित्यस्य स्वरूपनिर्णयादित्यनेनान्वयः ॥

एतेषां प्रमाणानामविद्यावद्विषयकत्वमितिपराभिप्रायमाशङ्क्याह— **नापि साधनानुष्ठानेनेति** ॥ **परमात्मेति** ॥ (२ १४-२७) योगः तादात्म्यरूपः । इदं साक्षादभेददूषणवचनम् । इष्यते इत्यनेन परमतमिति स्पष्टम् । यतः पुराणे परमतनिराकरणप्रकरणमिदम् । तत उत्तरः श्लोक एषः—

**तस्मात् श्रेयांस्यशेषाणि नृपैतानि न संशयः ।**
**परमार्थस्तु भूपाल संक्षेपात् श्रूयतां मम** ॥ इति ॥ (२ १४-२८)

इहापि—**आत्मभावं नयतीति** ॥ (६-७-३०) विकार्यं परिशुद्धियोग्यं जीवात्मानं आकर्षकः अयस्कान्तः लोहं अयःखण्डं आत्मभावं नयति तिष्ठति स्थापयति गच्छति गमयति भ्रमति भ्रामयति चेति । अत्र बादरायणबोधायनद्रमिडाचार्यादिसत्संप्रदायः—**वक्ष्यति चेति** ॥ **ज्योतिषा** परमात्मना । **अशरीरो** मुक्तः । **सिद्धिः** अनुभवः । आनन्दे साम्यं—**रसो वै स इति** ॥

९२. अत्रसंप्रदायः.

एतेषां वाक्यानां सगुणब्रह्मविद्यारूपापरविद्याविषयतां परसंमतां निराह—**परविद्यास्विति** ॥ अत्रापि संप्रदायः—**सूत्रकारेणैवेति** ॥

**वाक्यकारः** ब्रह्मनन्दी आत्रेयवंश्यः टङ्काचार्यापराभिधानः छान्दोग्यस्य-वाक्यनामकव्याख्यानकर्ता । **युक्तं** गुणयुक्तं प्राप्यं तथोपासनादित्यर्थः । **भाष्यकारः** द्रमिडाचार्यः वाक्यव्याख्याता । इदं हि भाष्यम्—"यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत् । तथाप्यन्तर्गुणामेव देवतां भजते । तत्रापि सगुणैव प्राप्यते" इति ॥

अस्यार्थः वेदार्थसंग्रहे सर्वश्रुतिसामरस्यनिरूपणप्रकरणे निरूपितो यथा—"सच्चित्तः सद्विद्यानिष्ठः न निर्भुग्नदैवतं गुणगणं मनसाऽनुधावेत् अपहतपाप्मत्वादिकल्याणगुणगणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत् । तथाप्यन्तर्गुणामेव देवतां भजते देवतास्वरूपानुबन्धित्वात् सकलकल्याणगुणगणस्य । केनचित्परदेवताऽसाधारणेन निखिलजगत्कारणत्वादिना गुणेनोपास्यमानाऽपि देवता वस्तुतः स्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते अतस्सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोः विकल्प इत्यर्थः" इति ॥

एवं द्रमिडभाष्यवाक्यमुपादाय व्याख्यानस्य बीजमिदं स्यादित्यन्वीक्ष्यते । संक्षेपशारीरके हि—

**अन्तर्गुणा भगवती परदेवतेति**
**प्रत्यग्गुणेति भगवानपि भाष्यकारः ।**
**आह स्म यत्तदिह निर्गुणवस्तुवादे**
**सङ्गच्छते न तु पुनस्सगुणप्रवादे** ॥ (३-२२१).

इति । अन्तर्गुणेत्यस्य व्याख्यानं—प्रत्यग्गुणेत्यादि । गुणपदं स्वरूपपरम् । अपरोक्षचिदेकरसेति प्रत्यग्गुणेत्यस्यार्थः । अत्र प्रकरणे वाक्यकारः ब्रह्मनन्दी भाष्यकारः द्रमिडाचार्यश्चाद्वैतसिद्धान्तस्यैव प्रवर्तकाविति ग्रन्थकारः कथयति । एवं कथनस्यापि मूलं भास्करभाष्ये दृश्यते (८५ पु.) "सूत्रकारश्श्रुत्यनुकारी परिणामपक्षं सूत्रयांबभूव । अयमेव छान्दोग्य

वाक्यकारवृत्तिकाराभ्यां संप्रदायतस्समाश्रितः । तथाच वाक्यं—परिणामस्तु स्याद्दध्यादिवदिति । विगीतं छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति" इति । एवं सर्वमवधार्य श्रीभाष्यकारः संप्रदायं परिरक्षतीत्यवधार्यते ॥

एवं प्राप्यत्वप्रापणीयत्वलक्षणभेदेनाप्यैक्यं प्रतिषेधद्वचनमुपादत्ते—**अत्रापि विज्ञानमिति** ॥ (६, ७, ९३-९५) अत्र प्रथमे श्लोके इष्टप्राप्तिरुच्यते । द्वितीये अनिष्टनिवृत्तिः । **तेन** करणत्वेनेत्यर्थः । निवर्तयेदित्यनेन न निवृत्तिर्विधीयते, यावत्सिद्धि अनुष्ठाने तात्पर्यं बोध्यम् । भक्तिसिद्धान्ते हि उपायोऽपि प्रीतिलक्षणसुखानुभवरूपतया निरतिशयसुखरूपेण परिणम्य फलदशां प्राप्य यावत्कालं यावदात्मभावी भवतीति विशेषोऽस्ति। तदेवोच्यते —**यावत्सिद्धीति**॥ इतरेषु सर्वेष्वपि सिद्धान्तेषु ज्ञानान्मोक्षवादिषूपायस्य निवृत्तिरिष्टा । अभावस्य मोक्षकारणतावादिन. कुमारिलस्य मते कारणस्य नित्यता मोक्षनित्यतायै एव हि स्वीकृता ॥

तृतीयश्लोके मुक्तस्य स्वरूपमुपदिश्यते—**तद्भावभावेति** ॥ तस्य ब्रह्मणः भावः प्रक्षीणाशेषभावनत्वादिः तस्य भावः आविर्भावः तमापन्नः अभेदी ज्ञानैकाकारतया देवादिभेदराहित्येन च यो भेदाभावः तद्वान् भवति भेदहेतोः अज्ञानस्य कर्मणः विनाशात् इत्यर्थः ॥

निरुक्तार्थविवरणम्—**एकस्वरूपभेदास्त्विति** ॥ (२—१४—३३) भेदश्च तस्याज्ञानकृतो भवेदित्यस्य विवरणम्—**विभेदेति** ॥ (६—७—९६) अयं श्लोकः पञ्चपादिकाविवरणे समुदाहृतः । अत एवात्रेयान् प्रयासः पुरस्कृतः । अत्रायमाशयः—आपाततः श्रूयमाणोऽयं श्लोकः कस्याचिद पूर्वस्यार्थस्योपदेशरूप इति न प्रतीयते लोकासिद्धानुवादसरूपत्वात् ।

अतः पूर्ववाक्यपरामर्शेनैवार्थो वर्णनीयः । पूर्वेषु हि श्लोकेषु जीवपरयोः स्वरूपभेदमुपगम्यैव मुक्तेः मुक्तस्य च स्वरूपमुपदर्शितम् । तदानुगुण्ये-नैवार्थस्य वक्तव्यतया इच्छयाऽर्थवर्णनमुदाहरणं च बालप्रलोभनमात्र-मिति ॥

एवं विष्णुपुराणं सविशेषपरमेवेत्युपबृंहणानुसारेणोपबृंहणीयस्य नेतव्यतया न निर्विशेषे श्रुतिः प्रमाणमिति सामर्थ्यरूपहेतुरसिद्ध एवे-त्युपपाद्य भगवद्गीतावचनस्याप्यर्थं निरुक्तं प्रकाशयितुमुपादत्ते—**क्षेत्रज्ञं चापि मामिति ॥** अत्र व्याख्यातव्यं सर्वं प्रागेव प्रतिपादितमिति पुनर्न प्रयत्यते ॥ (३८२)

अयमत्र सारार्थः—इह तावत्सर्वेषामप्यौपनिषदानां सम्मतोऽ-यमर्थः, य एषः श्रुतिस्मृतीतिहासपुराणादीनि सर्वाण्यपि शास्त्राणि सर्वेश्वरस्य भगवतः महिमप्रतिपादकानि भगवति भक्तिमुपजनय्य सर्वेषां यथाऽभिलषितं सर्वविधपुरुषार्थोपायबोधकानि सन्ति मोक्षमपि प्रापयन्तीति । सत्यप्येवं शास्त्रेषु सर्वेषु प्रतिपाद्यस्य ब्रह्मणः द्विरूपत्व मभ्युपेत्य तदनुरोधेन शास्त्रद्वैविध्यमुपगम्य अधिकारिष्वपि मन्दोत्तम-भेदमुपजीव्य मार्गद्वयं व्यवस्थापितम् । तत्र मन्दमार्गेणोत्तममार्गाधि-कारं प्राप्य फलं प्राप्तव्यम् । मन्दाधिकारगोचरं सर्वं सगुणशास्त्रम् । उत्तमाधिकारिगोचरं निर्गुणशास्त्रम् । तत्र सगुणशास्त्रमेव बहुवक्तव्य-त्वात् भूयः प्रवर्तते । इतरदल्पं, वक्तव्यस्य सूक्ष्मत्वात् । ततश्च शारीरकमपि शास्त्रं प्रायेण सगुणपरम् । तस्यैवोपास्यत्वात् । चतु-र्थाध्यायः फलपरः सगुणगोचरः तृतीयादयोऽप्युपायादिपराः तद्गोचराः । तत्र त्रिचतुराण्येवाधिकरणानि अनन्यत्वादिप्रतिपादनपराणि मुख्यानीति स्पष्टमवधार्यते । तथैव सिद्धान्तवेदिभिः शिवाद्वैतनिर्णयादिषु प्रबन्धेषु

निर्धार्यते । अयं च सगुणमार्गः प्रायेण सर्वविद्वत्सम्मत इति भाष्यकारः स्वयमेवाह—(बृ. उ. ४-३-६.) "तस्मात् श्रुत्यर्थकल्पनाकुशलाः सर्व एव उपनिषदर्थमन्यथा कुर्वन्ति । तथापि वेदार्थश्चेत्स्यात् कामं भवतु न मे द्वेषः" इति ॥ (दर्श १२)

अत्रात्यन्तबाधलक्षणाप्रामाण्यं प्रत्यक्षादिप्रमाणविरुद्धं सर्वस्य सगुणशास्त्रस्य कल्पितं भवति । तदपेक्षया भूयोऽनुग्रहन्यायेन बहुविद्वत्सम्मत एव मार्गः अनादिपरम्पराप्रसिद्धः परिष्करणीय इत्यालोच्य सर्वेषामपि शास्त्राणां समानं प्रामाण्यं प्रमाणान्तराविरुद्धमुपगम्य सिद्धान्तः प्रवर्तितः ॥

## 22. अविद्याविचारः.

### ९३. आश्रयानुपपत्तिः.

अविद्याविषये आश्रयतिरोधिस्वरूपानिर्वाच्यत्वप्रमाणनिवर्तकनिवर्त्यत्वानुपपत्तिरूपास्सप्त दोषाः क्रमेण कथ्यन्ते । तदर्थं निरुक्तसप्तविधाकारपरिकर्मितमविद्याख्यदोषमनुवदति—**यदप्युच्यते निर्विशेष इति** ॥ तत्र प्रथमं दोषपरिकल्पनमाश्रयैकार्थमित्याश्रयानुपपत्तिः प्रवर्तते –**सा हि किमाश्रित्येति** ॥ अत्र जीवो नाविद्याश्रयः तत्कल्पितत्वात् प्रपञ्चवदित्येका युक्तिः । ब्रह्म नाविद्याश्रयः अविद्याविरुद्धस्वभावत्वात् सामान्यतस्तिमिरानाश्रयतेजोवत् इति द्वितीया । अत्रार्थे श्रीनाथमुनिश्लोकान् सम्प्रदायतस्समागतानाह—**ज्ञानरूपं परं ब्रह्मेति**॥

स्वरूपधीर्न निवर्तिका, अपि तु मानधीरित्येतदनूद्य निरस्यति—**ज्ञानं ब्रह्मेति** ॥ **तत्प्रकाशत्वात्** तत्स्वरूपानतिरिक्तप्रकाशत्वात् । द्वितीयश्लोकं विवृणोति—**ज्ञानस्वरूपमिति** ॥ **ब्रह्मस्वरूपप्रकाशत्वे सतीति** ॥ स्वरूपविषयज्ञानत्वे सतीत्यर्थः । **विशेषानवगमात्** विषय-

वैषम्याभावात् । विवृणोति—**एतदुक्तमिति** ॥ तृतीयश्लोकस्य विपर्यये पर्यवसानमाह—**किंचानुभवेति** ॥ निवर्तकत्वमानधीत्वयोः शुक्तिज्ञानादौ व्याप्तिदर्शनात् ब्रह्मणि मानधीत्वस्य व्यापकस्य निवृत्त्या ब्रह्मस्वरूपं न निवर्तकमिति शङ्कायां जडविषयकत्वमुपाधिरित्यभिप्रेत्याह—**शुक्त्यादयस्त्विति** ॥

प्रपञ्चसत्यत्वमेव ब्रह्मणस्सद्वितीयत्वम्। प्रपञ्चमिथ्यात्वज्ञानेन सद्वितीयत्वनिवृत्तिरेव ब्रह्माज्ञाननिवृत्तिरित्याशङ्क्य अद्वितीयत्वं ब्रह्मणः स्वरूपं वा धर्मो वा ? इति विकल्प्य आद्ये स्वरूपं चेत् स्वानुभवसिद्धमेवेति विरोधस्तदवस्थः । धर्मश्चेत् सिद्धान्तविरोध इति समाधत्ते—**ब्रह्मस्वरूपाज्ञानं नामेति** ॥ आश्रयानुपपत्तिनिगमनम्—**अतो ज्ञानरूपस्येति** ॥

९४. तिरोधानानुपपत्तिः.

अथ दोषफलस्य तिरोधानस्य दूषणम्—**किंचाविद्ययेति** ॥ **प्रकाशोत्पत्तीति** ॥ प्रागभावो वा प्रध्वंसो वेति विकल्पः । सिद्धान्ते आत्मस्वरूपस्य स्वयंप्रकाशत्वेऽपि तद्धर्मस्य नित्यत्वाणुत्वशेषत्वादेः धर्मधीसङ्कोचलक्षणतिरोधानसम्भवात् विकासलक्षणप्रकाशाभ्युपगमाच्च नानुपपत्तिः । उपपादितं चेदं निपुणतरं वेदार्थसंग्रहे ॥

९५. स्वरूपानुपपत्तिः.

अथाश्रयप्रयोजनयोरसम्भवे स्वरूपमेव तुच्छं स्यादिति खण्डयति—**अपिच निर्विषयेति** ॥ अत्रानवस्थापत्तिः दोषः । यथा ज्ञातृज्ञानज्ञेयेषु क्वचित् दोषस्यान्तर्भावः वक्तव्यः तस्यापि पुनः तथेति ॥ अथ दोषस्याकल्पितपरमार्थब्रह्मस्वरूपत्वे सिद्धान्तविरोधः प्रक्रियाविरोधश्चेत्याह—**अथैतदिति** ॥ **व्यतिरिक्तपारमार्थिकेति** ॥ व्यतिरिक्तत्वे नानिर्मोक्षप्रसङ्गः । पारमार्थिकत्वे अनवस्था नेत्यर्थः । अवि

द्यायाः स्वरूपानादित्वं प्रवाहानादित्वं दुर्घटत्वं स्वपरनिर्वाहकत्वं वा समाधानं तु अधिष्ठानस्यापारमार्थिकत्वेऽपि सुवचमिति न सत्यब्रह्मसिद्धिरिति भावः ॥

९६. अनिर्वाच्यत्वानुपपत्तिः.

अथानिर्वाच्यत्वेन नानुपपत्तिः प्रक्रमते इत्यत आह—**अनिर्वचनीयत्वं च किमाभिप्रेतमिति ॥ सर्वं सर्वप्रतीतेरिति ॥** सदसद्विलक्षणमिति बुद्धेः सदसदेव विषयः स्यात् समुच्चयविलक्षणतुरीयकोट्यनभ्युपगमादित्यर्थः । सर्वं हि वस्तु स्वरूपेण सद्रूपं पररूपेणासद्रूपं, यः प्रतीतेर्विषयः स एवाकार इति भावः । उभयरूपत्वमेकस्य विरुद्धमिति चेत् उभयविलक्षणत्वमपि तथैव । तत्रोभयात्मकत्वं दृष्टं, अनुभयात्मकत्वं तु अदृष्टं कल्प्यमिति विशेषः । ख्यातिबाधानुपपत्तिस्तु समुच्चयपक्षेऽपि शक्यते प्रशमयितुमित्यवधेयम् ॥

९७. प्रमाणानुपपत्तौ प्रत्यक्षम्

अथ मानसिद्धोऽर्थो न तर्कबाध्य इति शङ्कामनूद्य प्रमाणानुपपत्तिरुच्यते— **अथ स्यादिति ॥** निरवद्यमित्यन्तेन शङ्कानुवादः । अस्य विचारस्य पञ्चपादिकाविवरणं मूलम् । (१२ पु) अत्राध्यासपदं परिकल्पितवस्तुपरम् । वस्तुस्वरूपेत्यारभ्य अवगम्यते इत्यन्तेन प्राङ्निराकृतानामर्थानामनुवादः । प्रत्यक्षप्रमाणोपपादनम्—**कारणाज्ञानेति ॥** अज्ञशब्दविवरणम्—**मामित्यादि ॥** षष्ठप्रमाणमनुपलब्धिः । **अभावस्य प्रत्यक्षत्वेति ॥** नैयायिकमतम् । विषयभेदेन ज्ञानज्ञानाभावयोरेकत्र न विरोध इत्यत आह—**एतदुक्तमिति ॥** निरुक्तापरोक्षावभासस्य ज्ञानसामान्याभावविषयकत्वेन ज्ञानमात्रविरोधितेति भावः ॥

समानविषयकज्ञानाज्ञानयोरसमावेशमाशङ्क्य विषयभेदात्परिह-

रति—**ननु च भावरूपमिति** ॥ दृश्यस्यैव दृश्यावच्छेदकत्वात् घटादिरूपदृश्यावच्छिन्नमेव अज्ञानं साक्षिदृश्यं भवति । साक्षिणः दृश्यत्वाभावात्तदवच्छिन्नमज्ञानं कथं साक्षिवेद्यं स्यादित्याक्षेपे नियमोऽयं जडत्वोपाधिकः, अजडस्थले सङ्कोचार्ह इति समाधत्ते—**ननु चेदं भावेति** ॥ **प्रमाणानधीनसिद्धिरिति** ॥ दृश्यभिन्नमित्यर्थः ॥ अत्र प्रत्यक्षनिगमनम्—**तस्मादिति** ॥

### १८. अनुमानम्.

अथ तत्रानुमानम्—**तदिदं भावेति** ॥ घटादिविषय धर्माधर्मभय-प्रागभावानादाय सिद्धसाधनवारणं प्रतिलोमशः पदानां प्रयोजनम् । वस्तुतस्तु— स्वाधिकरणकालावच्छेदेनावर्तमानत्वं स्वविषयावरणत्वम् । स्वप्रयोज्याभावप्रतियोगित्वं स्वनिवर्त्यत्वम् । सामानाधिकरण्यसम्बन्धेन स्वविशिष्टत्वं स्वदेशगतत्वम् । ततश्च— अनुलोमतः परस्परतो वा प्रागभावानुकूलादृष्टप्रतिबन्धकादृष्टवेद्यगतावित्त्यभिव्यक्तिप्रागभावानां वारणाय विशेषणचतुष्टयं बोध्यम् । धारावाहिकद्वितीयादिज्ञाने व्यभिचारवारणायाप्रकाशितपदम् । दिवादीपे द्वितीयादिप्रभासु च साध्यवैकल्यव्युदासायान्धकारप्रथमशब्दौ । दृष्टान्ते साध्यवैकल्यशङ्कां परिहरति—**आलोकेति** ॥ आलोकाभावमात्रं तम इति वैशेषिकमतम्। अन्धसाधारणं रूपज्ञानाभावस्तम इति तदेकदेशिनः ॥

### १९. प्रत्यक्षनिरासः

**अत्रोच्यत इति** ॥ केवलेनेत्युक्तिः दृष्टान्ततया । अविरोधमपि वक्ष्यन् प्रथमं विरोधसाम्यमाह—**यस्त्विति** ॥ प्रमाणेन भानं विशदावभासः । **विशदस्वरूप विषय इति** ॥ विशदं स्वरूपं विषयः अवच्छेदकं यस्येत्यर्थः । विशदस्वरूपस्य प्रागभावावच्छेदकत्वं तु स्वविषयधीद्वा-

रेण । **आश्रयप्रतियोगीति** ॥ आश्रयज्ञानस्याविशदविषयत्वं अविशदप्रत्यगर्थविषयकत्वम् । प्रतियोगिज्ञानस्याविशदस्वरूपविषयकत्वं तु अभावप्रतियोगिभूताविशदज्ञानविषयकत्वम् । प्रत्यक्षज्ञानं त्वभावप्रतियोगि । स्मृतिरूपे धर्मिप्रतियोगिज्ञाने इति भावः । मम घटज्ञानं नास्ति, नाहं घटं जानामीत्यनुभवस्सर्वसम्मतः । तदुपपादनाय प्रत्यक्षज्ञानमभावप्रतियोगि । धर्मिप्रतियोगिज्ञाने स्मृतिरूपे इत्येवसर्वैर्वक्तव्यमिति यावत् । **अन्यत्राभिनिवेशात्**॥ अभिनिवेशं विनेत्यर्थः। **ज्ञानप्रागभावस्त्विति**॥ प्रतिबन्दितौल्येऽपि लाघवमतिरिच्यते इति भावः । मूढोऽस्मीत्यादौ मोहपदार्थोऽपि विषयाश्रयाभ्यामवच्छिन्नस्साकाङ्क्ष एवेत्यवधेयम् ॥

विरोधसाम्येपि प्रतिकूलतर्कमाह—**नित्यमुक्तस्वप्रकाशेति** ॥ **अन्यतः** अविद्याख्यदोषतः । अत्रान्योऽन्याश्रयश्च दोष इत्याह—**किञ्च ब्रह्मस्वरूपेति** ॥ मिथ्याभूतस्य सत्तया कार्यकरत्वाभावात् अनुभवपूर्वकत्वम् । स्वानुभवस्वरूपत्वात् अस्यानुभवस्य तिरस्कारपूर्वकत्वं चेति । अनुभवपूर्वकतिरस्कारमात्रपक्षे तिरोधानकल्पना आच्छादकाविद्याकल्पना च व्यर्थेत्याह—**अनुभूतमेव तिरस्करोतीति** ॥ दूषणान्तरम्—**किंञ्च ब्रह्मण इति** ॥ स्वत पक्षेऽनिर्मोक्षः स्वरूपनिवृत्तिश्च । अन्यतः पक्षेऽनवस्था । तिरस्कारपूर्वकानुभवपक्षं प्रतिक्षिपति—**ब्रह्म तिरस्कृत्यैवेति** ॥ यौगपद्यपक्षं दूषयति—**अथेदमज्ञानमिति** ॥

वैशद्यावैशद्यानुपपत्तिमुपक्रमते—**अपिचाविद्ययेति** ॥ प्रकाशमात्रेति मात्रचा विषयत्वव्यावृत्तिः । लोकप्रसिद्धे वैशद्यावैशद्ये शिक्षयित्वा प्रकृते तदसम्भवमाह—**एतदुक्तमिति** ॥ **प्रकाशाभावादेवेति** ॥ धर्म्यभावाद्धर्माभाव इत्यर्थः । उक्तनीत्या विषयेऽपि लोके वैशद्यावैशद्यासम्भव इत्यत आह—**विषयेऽपीति** ॥ अनुपपत्तिनिगमनं—**तस्मादिति** ॥

प्रागुक्ताश्रयानुपपत्तिमप्यत्र प्रतिकूलतर्कत्वेनाह—**अस्याज्ञानस्येति**॥ अपरमार्थदोषमूलभ्रमवादे अधिष्ठानमप्यपरमार्थमापततीत्याह—**अपिचापरमार्थेति**॥ स्वरूपानादितया प्रवाहानादितया दुर्घटतया स्वपरनिर्वाहकतया वाऽनवस्थापरिहारोऽधिष्ठानापारमार्थ्येऽपि तुल्यः। अधिष्ठानापारमार्थ्यं न दृष्टमिति चेत् दोषदोषाश्रयत्वादिकमप्यपरमार्थं न दृष्टमित्यवधेयम्। इष्टापत्तौ अनिष्टापत्तिः—**इतश्च सर्वेति**॥

## १००. अनुमाननिरासः.

अथानुमानदूषणम्—**यदुक्तमिति**॥ प्रकृतानुमितेरपि पक्षान्तर्गतत्वेन तत्रापि वस्त्वन्तरपूर्वकत्वसिद्धौ अज्ञानविषयकमज्ञानमनभिमतं सेत्स्यतीति विरुद्धो हेतुरित्याह—**अज्ञानेऽपीति**॥ अज्ञानान्तरसाधनावश्यंभावमुपपादयति—**तत्राज्ञानान्तरेति**॥

ननु प्रकृतानुमितेस्सम्यक्त्वे हेतुरदुष्टः। असम्यक्त्वेऽपि न दुष्टः, अप्रकाशितार्थप्रकाशकत्वस्यैव प्रमात्वलक्षणसम्यक्त्वरूपत्वेन तत्रहेतोरवृत्तेः व्यभिचारविरहात् इति चेदुच्यते—विकल्पोऽयमसम्बद्धः, प्रकृते अनुमितेस्सम्यक्त्वं हेतुनैर्दोष्यं प्रतिक्षिपति हेतुनैर्दोष्यमनुमितिसम्यक्त्वं प्रतिक्षिपति। मिथः प्रतिक्षेपकत्वात् समुच्चित्य स्थित्यभावात् अन्यतराभावेऽपि न साध्यसिद्धिरिति॥

अथेदमनुमानमप्रकाशितमज्ञानं न प्रकाशयति, किंतु साक्षिचैतन्यासिद्धस्यैवाज्ञानस्याभावाद्विवेचनं करोतीति चेदत्राप्युच्यते—अज्ञानं साक्षिगोचर इति सङ्केतमात्रम्, कस्मिन्नपि दर्शनान्तरे तथाऽनभ्युपगमात्। प्रायेण सर्वेष्वपि दर्शनेषु ज्ञातुरहमर्थस्यात्मत्वाभ्युपगमात् सर्वस्यापि तदीयज्ञानवेद्यत्वाभ्युपगमात्। ततश्चाहमर्थविलक्षणसाक्षिसिद्धौ

अज्ञानसिद्धिः। तत्सिद्धावहमर्थस्य कल्पितत्वेन विलक्षणसाक्षिसिद्धिरित्य-न्योन्याश्रयदोषोऽस्त्येवेति ॥

**साधने चेति** ॥ स्वविषयावरणत्वादिति भावः। **निष्फलेति** ॥ मिथ्याऽर्थो न सत्तया कार्यकृदिति तिरोधानरूपकार्यकरत्वाभावादित्यर्थः। साक्षाद्भासकत्वलक्षणप्रकाशकत्वस्य हेतुत्वे दृष्टान्तस्य साध्यविकलते-त्याह—**दृष्टान्तश्चेति** ॥ विरोधिनिरासकत्वात्सकलस्य प्रकाशकत्वस्य हेतुत्वे तस्यैव साध्यत्वात् असिद्धिरित्याह—**न हि विरोधीति** ॥ संप्र-तिपन्नं प्रकाशकत्वं विशदयति—**अपित्विति** ॥ परंपरया प्रका-शकत्वस्य हेतुत्वे इन्द्रियादिष्वनैकान्त्यमित्याह—**यद्युपकारकाणा-मिति** ॥

अथानुमानस्य प्रतिकूलतर्कानाह—**प्रतिप्रयोगाश्चेति** ॥ व्याप्ति-मूलत्वात् प्रयोगपदप्रयोगः। स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां-क्रमेण तर्कत्रयम्। अत्राज्ञानं पक्षीकृत्य प्रसङ्गत्रयम्। ब्रह्म पक्षीकृत्य प्रसङ्गत्रयम्। प्रमाणज्ञानं पक्षीकृत्य प्रागभावातिरिक्तत्वस्य प्रतिकूलतर्कः एकः। निवर्त्यत्वांशस्यान्वयव्यतिरेकाभ्यां द्वौ प्रतिकूलतर्कौ। व्यर्थविशेष-णत्वं चेति त्रयोदश दोषाः द्रष्टव्याः। तत्र भावरूपमज्ञानं ज्ञानरूपं ब्रह्म-चाभ्युपगम्याद्यं तर्कत्रयम्। अत्र ज्ञाता जीवः। अज्ञानत्वे ज्ञानानाश्र-यत्वप्रसङ्गः ज्ञानानावरणत्वप्रसङ्गश्च। ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्व-प्रसङ्ग इति आद्यप्रसङ्गत्रयशरीराणि ॥ **ब्रह्म नाज्ञानेति** ॥ अज्ञानाश्रयत्वे ज्ञातृत्वप्रसङ्गः। अज्ञानावरणत्वे ज्ञेयत्वप्रसङ्गः। ज्ञाननिवर्त्याज्ञानव-त्त्वेऽपि ज्ञेयत्वप्रसङ्गः। **विवादाध्यासितमिति** ॥ प्रमाणज्ञानपक्षका-स्तर्काः। प्रमाणज्ञानत्वे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्गः। वस्तुविनाशकत्वे ज्ञानत्वाभावप्रसङ्गः। तस्य व्यतिरेकः ज्ञानत्वे वस्तु-

विनाशकत्वाभावप्रसङ्ग इति । अत्र द्वितीयतृतीययोः व्यभिचारं शङ्कते—**अथोच्येतेति** ॥ वस्तुशब्दस्य भावे प्रचुरप्रयोगात् प्रथमदलं व्यर्थम् । एवमन्तरपदं चेत्याह—**स्वप्रागभावेति** ॥

एवमज्ञाने प्रत्यक्षमनुमानं च निराकृत्य श्रुतिं तदर्थापत्तिं च निराकर्तुं प्रतीक्षां विधत्ते—**श्रुतितदर्थापत्तिभ्यामिति** ॥ कार्यकारणयोः सालक्षण्यमावश्यकमिति कार्यं मिथ्याकारणकं मिथ्याभूतत्वात् सामान्येन घटकटकादिवत् इत्यनुमानमपि नविलक्षणन्यायेन व्याप्यत्वासिद्ध-मित्याह—मिथ्यार्थस्येति ॥

१०१. ख्यातिविचारः.

कार्यस्य विलक्षणं मिथ्यात्वमप्यसिद्धमिति बिस्तरेणाह—**प्रतीतिभ्रान्तीति** ॥ शुक्तिरूप्यादेरिति शेषः । पूर्वपक्षे विस्तरोऽस्य द्रष्टव्यः । **प्रतीयमानमेव हीति** ॥ उल्लिख्यमानमेव हीत्यर्थः । **आभिः** प्रत्यक्ष-भूताभिः प्रतीतिभ्रन्तिबाधरूपाभिः । **प्रतीत्यन्तरेण** आगमादिजन्य-ज्ञानेन । पूर्वज्ञानेन बाधकज्ञानेन चेत्यर्थः । अत्र सर्वसम्मतप्रतीतिविषय-भूतं परमार्थं रजतादिकमेव दोषवशात् पूर्वं स्वानधिकरणे सदिति भासते । दोषनाशादनन्तरमसदिति च । तावतैव ख्यातिबाधोपपत्तेः कुख्यातिः निर-वकाशा । ततश्च मिथ्यात्वमपारमार्थ्यं च स्वानधिकरणे प्रतीयमानत्वम् । असत्वञ्च तत्तान्निष्ठात्यन्ताभावप्रतियोगित्वम् । तुच्छलक्षणः निरुपाधिकोऽ-भावः माध्यमिकं विना न केनाप्यभ्युपगत इति भावः ॥

उक्तार्थस्यैव प्रपञ्चः—**शुक्त्यादिष्विति** ॥ **अयोगादिति** ॥

**परस्मिन् भासमाने तु न परं भासते यतः ।**
**तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतम्** ॥ (१८१ पु.) ॥

इत्यभिप्रायः । कथमन्यथभानावर्जनीयत्वमित्यत्राह—**कल्प्यमानं हीति** ॥ अलौकिकसदभ्युपगमेऽपि तुल्यो दोषः, तस्य लौकिकसता भेदाग्रहे

सम्प्रतिपन्नस्यैव भेदाग्रहकल्पनं वरं लाघवादिति भावः । **यथार्थख्याति-**व्यतिरिक्तेषु अन्यथाख्यातेः प्राबल्यमभिप्रयन्नाह—**ख्यात्यन्तरेति** ॥ असदिति प्रतीतं चेत् प्रवृत्तिबाधभ्रमत्वायोगः । सदिति चेदन्यथाभानम् । एवं सर्वत्र । आत्मख्यातीत्यत्रात्मशब्दो ज्ञानपरः । **अख्यातीति** ॥ ज्ञानमेकमनेकं वेति विकल्पः । प्रथमस्य दूषणं—**अन्यविशेषणमिति** ॥ समानाधिकरणधीबलादापादितं न तु तथोपगतम् ॥

अनिर्वचनीयरजतादौ हेतुप्रख्योपाख्यानुपपत्तीः क्रमेणाह—**किञ्चानिर्वचनीयमिति** ॥ महतामित्यत्र विपरीतलक्षणा । दोषस्य इन्द्रियस्य दुष्टस्य वा इन्द्रियस्य न कारणत्वमित्याह—**अथेन्द्रियादीति** ॥ **अनादीति** ॥ अनिर्वाच्यस्याप्रामाणिकत्वादित्यर्थः । प्रख्योपाख्यानुपपत्ती आह—**किञ्चापूर्वमिति** ॥ **स्यातामिति** ॥ परमार्थापरमार्थयोरन्वयो व्याप्तिविरुद्ध इत्यर्थः । **निर्वाहकत्वायोगाच्चेति** ॥ असत्यात्सत्यप्रतिपत्तिनिरासादिति भावः ॥

१०२. यथार्थख्यातिः.

अथ यथार्थख्यातिवादं स्वसिद्धान्तमाह—**यथार्थं सर्वविज्ञानमिति** ॥ अत्र सर्वसर्वात्मकत्वसिद्धान्तः । सोऽयम्—

> **नानात्मकानामेकत्वं नानात्वं च विपर्यये ।**
> **सर्वात्मकत्वादर्थस्य नैरात्म्याद्वा व्यवस्थितम् ॥**

इति भर्तृहरिणा (१८६. पु) नूदितः । कुमारिलादिभिरुपबृंहितः । **तेनाभिधाभिदेति** ॥ भूयस्त्वेन व्यपदेशव्यवस्थेत्यर्थः । सदृशे सदृशान्तरैकदेशसद्भावं दर्शयति—**सोमेति** ॥ **श्रुत्यैव** त्रिवृत्करणश्रुत्या प्रतिनिधिश्रुत्या वा **बोधितः** बोधः फलितः । शब्दव्यवस्थामाह—**रूप्यशुक्तीति** ॥ भ्रमप्रवृत्तिबाधानामुपपत्तिमाह—**कदाचिच्चक्षुरिति** ॥ **शुक्तिभूयस्त्ववैकल्यग्रहः** शुक्तिभूयस्त्वाग्रहः भ्रमः । तत्साकल्यग्रहः

बाधः । मिथ्यार्थविषयो भ्रमः, सत्यार्थविषयः बाध इति परमतं न सिद्ध्यतीत्याह—**नात इति** ॥ मिथ्यासत्यशब्दौ पराभिमतमिथ्यात्व-सत्यत्वपरौ । तथाचात्रापूर्वरजतकल्पना सङ्केतमूला दूरोत्सारितेति भावः ॥

त्रिवृत्करणश्रुतिप्रतिनिधिश्रुतिभ्यामनिर्वाह्यं स्वाप्नार्थं श्रुत्यन्तरेण निर्वहति—**स्वप्ने च प्राणिनामिति** ॥ **रथयोगाः** रथे योक्तुमर्हाः अश्वादयः । सुन्दरवस्तुदर्शनेन जाता प्रीतिरानन्दः । स्वीयत्वधिया जाता मुत् । उपयोगेन जाता प्रमुदिति विशेषः । स्पष्टं श्रुत्यन्तरम्—**य एषु सुप्तेष्विति** ॥ अयमेव सम्प्रदाय इत्याह—**सूत्रकारो हीति** ॥ अपूर्वसृष्टावुपपत्त्यन्तरम्—**अपवरकादिष्विति** ॥ ईश्वरसृष्ट्यनिर्वाह्यं भ्रम-मुपपादयति—**पीतशङ्खादाविति** ॥ **तद्ग्रहणजनितेति** ॥ यथा नेदि-ष्ठदशागृहीतगृध्रस्य दविष्ठदशायामपि पूर्वग्रहणजनितसंस्कारसचिवच-क्षुषा ग्रहणं तथाऽत्रापीति भावः । निरुक्तन्यायानिर्वाह्यं स्थलं निर्व-हति—**जपाकुसुमेति** ॥ **मरीचिकाजलेति** ॥ अदृष्टस्य नियामकत्वं साधारणाकारग्रहः असाधारणाकाराग्रहश्चेत्यादिकं सर्वैरुपेतम् । मन्त्रार्थ-वादप्रामाण्येन त्रिवृत्करणादिश्रुत्यर्थस्वीकारः गुरुमताद्विशेषः ॥

**अलातेति** ॥ **अन्तरालाग्रहणादिति** ॥ अलातस्य तत्तत्प्र-देशेन पूर्वापरकालसंयोगयोः मध्यकालाग्रहणात् क्रमाग्रहणादित्यर्थः । **दर्पणेति** ॥ विपर्यस्तसव्यदक्षिणभागस्य दर्पणस्थ मुखस्य च निरन्तर-भानात्तथा प्रतीतिः । **दिङ्मोहेति** ॥ दिगन्तरोपाधेः दिगन्तरस्य नीर-न्ध्रधीरवधेया । पीतशङ्खादिदिङ्मोहपर्यन्तेषु प्रतिबिम्बं विना पञ्चसु स्थलेषु द्रव्यान्तरसंसर्गान्निर्वाहः ॥

द्विचन्द्रज्ञानं निर्वहति—**द्विचन्द्रेति** ॥ चाक्षुषतेजोगतिरूप-सामग्रीद्वयजन्यमतिशैघ्र्यादगृहीतक्रममगृहीतभेदं च ज्ञानद्वयमगृहीतै-

कत्वं च चन्द्रमगृहीतान्तरालं देशान्तरं च निरन्तरं गृह्णाति, ततो द्विचन्द्रव्यवहार इति प्रकृतार्थः । **देशान्तरस्येति** ॥ निरन्तरमप्रधानत्वेनभातत्वमेव सर्वत्रविशेषणत्वमित्यर्थः । **ग्राह्याकारद्वित्वं** निरन्तरभातदेशद्वित्वम् । चन्द्रैकत्वाग्रहमुपपादयति—**तत्रविशेषणद्वयेति** ॥ सोऽयं देवदत्त इत्यादौ संस्कारसहकृतमेव चक्षुरैक्यग्राहकम् । प्रकृते संस्कारस्य विलम्बितभावित्वान्न तद्ग्रह इत्यर्थः । यथार्थख्यातिवादं निगमयति—**अतस्सर्वमिति** ॥

**नेत्रवृत्ती द्विधा भूता द्वे तु वित्ती वितन्वती ।**
**द्वित्वं चन्द्रं च युगपत् निर्भासयति तत्र नः ॥**

इति प्राभाकराः वित्तिगतद्वित्वमगृहीतासंसर्गकं भासत इति वदन्ति । सिद्धान्ते तु देशगतं द्वित्वमिति विशेषः ॥

**अथवेति—समंजसमित्यन्तं** भाष्यं बहुषु श्रीकोशेषु न दृश्यते । अथापि व्याख्यातृभिः व्याख्यातमिति श्रुतप्रकाशिकादिषूक्त्वा व्याख्यातम् । **सेत्स्यति उपपद्यते** इति मानतर्कसिद्धिरुक्ता । अत्र स्वाप्नप्रपञ्चवैचित्र्यं परमार्थमित्युपपाद्य दृष्टान्तासिद्धिरनिर्वचनीयत्वे प्रदर्शिता भवति॥

१०३. श्रुत्यादिदूषणम् .

अथानिर्वचनीयाविद्यायां श्रुतिमसिद्धयति—**यत्पुनस्सदसदिति**॥ "एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः" इति श्रुतिः कर्मबद्धसंसारिविषया, ऋतशब्दस्य कर्मपरत्वात् "नासदासीत्" इतिश्रुतिरपि प्रलयसमये सदसच्छब्दवाच्यव्यष्टिचेतनाचेतनशून्यतापरा । शङ्कते—**सत्यं तम इति** ॥ पुनश्शङ्का —**मायेति** ॥ **यथोक्तं तेन मायेति** ॥ इदं विष्णुपुराणे प्रह्लादोपाख्यानवचनम् । न हि रज्जुसर्पः शस्त्रच्छेद्य इति भवः ॥

अन्यथोपपत्तिं व्युदस्यति — **नाप्यैक्येति** ॥ वेदान्तव्युत्पत्तिं सूचयति — **अनेन जीवेनेति** ॥

१०४. स्मृतिप्रमाणदूषणम्.

उपबृंहणयोस्तदप्रतीतिमाह — **इतिहासेति** ॥ अत्रेयं विष्णुपुराणे (२-१२-३८) भुवनकोशदशश्लोकी —

**यदम्बु वैष्णवः कायः ततो विप्र वसुन्धरा ।**
**पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥**

**ज्योतींषि विष्णुः भुवनानि विष्णुः**
**वनानि विष्णुर्गिरयो दिशश्च ।**
**नद्यस्समुद्राश्च स एव सर्वं**
**यदस्ति यन्नास्ति च विप्रवर्य ॥ १ ॥**

**ज्ञानस्वरूपो भगवान्यतोऽसा-**
**वशेषमूर्तिर्न्न तु वस्तुभूतः ।**
**ततो हि शैलाब्धिधरादिभेदान्**
**जानीहि विज्ञानविजृम्भितानि ॥ २ ॥**

**यदा तु शुद्धं निजरूपि सर्व-**
**कर्मक्षये ज्ञानमपास्तदोषम् ।**
**तदा हि सङ्कल्पतरोः फलानि**
**भवन्ति नो वस्तुषु वस्तुभेदाः ॥ ३ ॥**

**वस्त्वस्ति किं कुत्रचिदादिमध्य-**
**पर्यन्तहीनं च सदैकरूपम् ।**
**यच्चान्यथात्वं द्विज याति भूयः**
**न तत्तथा तत्र कुतो हि तत्त्वम् ॥ ४ ॥**

**मही घटत्वं घटतः कपालिका**
**कपालिकाचूर्णरजस्ततोऽणुः ।**
**जनैस्स्वकर्मस्तिमितात्मनिश्चयैः**
**आलक्ष्यते ब्रूहि किमत्र वस्तु ॥ ५ ॥**

तस्मान्न विज्ञानमृतेऽस्ति किंचि-
त्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेद
विभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ६ ॥

ज्ञानं विशुद्धं विमलं च नित्य-
मशेषलोभादिनिरस्तसङ्गम् ।
एकस्सदैकं परमः परेश-
स्स वासुदेवो न यतोऽन्यदस्ति ॥ ७ ॥

सद्भाव एवं भवतो मयोक्तः
ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं
तत्रापि चोक्तं भुवनाश्रितं ते ॥ ८ ॥

यज्ञः पशुर्वह्निरशेषऋत्वि-
क्सोमस्सुरास्स्वर्गमयश्च कामः ।
इत्यादिकर्माश्रितमार्गदृष्टं
भूरादिभोगाश्च फलानि तेषाम् ॥ ९ ॥

यच्चैतद्भुवनगतं मया तवोक्तं
सर्वत्र व्रजति हि तत्र कर्मवश्यः ।
ज्ञात्वैतत् ध्रुवमचलं सदैकरूपं
तत्कुर्याद्विशति हि येन वासुदेवम् ॥ ४७ ॥ १० ॥

इयं भुवनकोशदशश्लोकी। तत्र द्वितीयतृतीयषष्ठसप्तमाष्टमाः पञ्चश्लोकाः पूर्वपक्षे समुदाहृताः। अस्याः पूर्वपक्षरीत्या तात्पर्यमनुवदति—**ननु ज्योतींषीति** ॥ अत्र बाधायां सामानाधिकरण्यं चोरः स्थाणुरितिवत् । स्थाणुरेवायं न चोर इति तदर्थः । **विशुद्धं विमलं** अविद्यातत्कार्यव्यावृत्तिः । **एकं सदैकं** सजातीयविजातीयभेदव्यावृत्तिः । **संव्यवहारभूतं** व्यवहारार्हं यदेतत्सर्वं तत्राप्यज्ञानमेव कारणमिति प्रोक्तमित्यर्थः ॥

अत्र पौर्वापर्यपरामर्शेन सिद्धान्ततात्पर्यं विशदयति—**नैतदेवमिति**॥ अत्र ज्ञानतदन्यसत्यासत्यास्तिनास्तिशब्दाः चेतनाचेतनपराः। अविद्याऽज्ञानादिशब्दाः कर्मपराः । एकाद्वितीयादिशब्दाः प्रकारैक्यपराः । भेदविकारादिशब्दाः देवमनुष्यादिदेहपराः । सामानाधिकरण्यं शरीरात्मभावनिबन्धनम् । इत्यादयोंशाः सिद्धान्तशिक्षणीयाः । अत्र संक्षिप्य उपदिष्टोऽर्थ एषः—चेतनाचेतनयोः स्वरूपं तदुभयस्य भगवच्छरीरत्वं च । **एतद्रूपमिति** ॥ अर्थरूपमित्यर्थः ॥

उक्तमुपपादयति—**तथाहि यदम्बु वैष्णव इति** ॥ परोक्तार्थाननुगुणत्वमाह—**अत्र निर्विशेषपर इति** ॥ अस्तिनास्त्यादिशब्दानां निरुक्तार्थपरत्वं न साङ्केतिकमित्याह—**एतदुक्तं भवति ज्ञानेति**॥ यथावस्थिततत्त्वत्रयनिरूपणपरं विष्णुपुराणमित्यनुभाषणेन निर्णीतमित्याह—**श्रोतुश्च मैत्रेयस्येति** ॥

१०५. विवर्तकानुपपत्तिः.

अथ निवर्तकानुपपत्तिः—**यदुक्तं निर्विशेषब्रह्मविज्ञानादिति** ॥ बह्वीभ्यः श्रुतिभ्यः सविशेषब्रह्मविज्ञानस्यैव मोक्षहेतुत्वावगमात् तादृशज्ञानं भवदीयाया अविद्याया न निवर्तकमित्यनिर्मोक्षप्रसङ्ग इति भावः ॥

१०६. सामानाधिकरण्यम्.

अथ सामानाधिकरण्यानुपपत्त्या परोक्तनिर्विशेषधिय उपायत्वं व्युदस्यति—**तत्त्वमस्यादीति** ॥ शाब्दसामानाधिकरण्यविषये एवं विकल्पाः पराभिमता । सत्यज्ञानादिवाक्येषु सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम् । तत्त्वमस्यादिषु जीवब्रह्मणोः अन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्। सर्वं खल्विदं ब्रह्मेत्यादिषु अचिद्ब्रह्मणोः अतात्त्विकरूपारोपणेन वस्त्वैक्यपरम् । ज्योतींषि विष्णुरित्यादिषु इतरव्यावृत्तिलक्ष-

णापवादरूपबाधमुखेन वस्त्वैक्यपरम् । इति चतुर्धा सामानाधिकरण्यं पराभितम् । अपिच शारीरकभाष्ये (३-३-१०) "व्याप्तेश्च समंजसम्" इति सूत्रे अपरं चतुर्विधं बुद्धिसामानाधिकरण्यमुक्तम् । यथा—अध्यासापवादैकत्वविशेषणभेदेन । अध्यासः प्रतिमादिषु विष्णुबुद्धिः । अपवादः तत्त्वमसीत्यादिबुद्धिः । अनया देहात्मबुद्धिरपोद्यते । एकत्वं अनतिरिक्तार्थत्वलक्षणं द्विजोत्तमो ब्राह्मणो भूमिदेव इत्यादिः । विशेषणं सङ्कोचलक्षणं नीलं यदुत्पलं तदानीतेत्यादौ । एवं व्यवहारवैचित्र्यस्य मूलं शब्दबुद्ध्योरविवेकमूलविज्ञानवादवासनेति विवेचका विदामासुः । सिद्धान्ते तु सर्वत्र अनेकविशेषणविशिष्टैकविशेष्यबोधकत्वमेव सामानाधिकरण्यं शाब्दमेकमिति निर्णयः । अत्रसामानाधिकरण्यं स्वरूपार्थमुतापवादलक्षणनिवृत्तिरूपबाधार्थं वेति विकल्पः । आद्ये पक्षे सामानाधिकरण्यलक्षणहानिः लक्षणापत्तिः उपक्रमविरोधः प्रतिज्ञाविरोधः सकलापुरुषार्थाश्रयत्वापत्तिश्चेति पञ्च दोषाः । द्वितीये अधिष्ठानलक्षणा निवृत्तिलक्षणा बाधकादर्शनं विरुद्धधर्मानुपस्थितिश्चेति चत्वारो दोषाः ॥

अयमत्र पदार्थः—**बाधार्थत्वे चेति** ॥ एकेन पदेनाधिष्ठाने लक्षिते परेण धर्मान्तरनिवृत्तिर्लक्ष्येति लक्षणाद्वयं रज्जुस्सर्पः चोरः स्थाणुरित्यादौ प्रसिद्धम् । **इयांस्तु विशेषः** अधिकं दोषद्वयमित्यर्थः । रज्जुस्सर्पः इत्यादौ वाक्ये प्रत्यक्षादिप्रमाणैनैक्यानुपपत्तिलक्षणं बाधकदर्शनमस्ति तथा रज्जुत्वरूपधर्मान्तरस्य सर्पत्वविरुद्धस्योपस्थापनं च रज्जुपदेन वर्तते । तदुभयमत्र बाधकल्पकम् । तादृशमुभयं तत्त्वमसीत्यत्र नास्तीत्यर्थः । विरुद्धधर्म एवोपस्थाप्य इति न नियमः, विरुद्धार्थोपस्थापनमेव बाधकल्पकमित्याशङ्क्य परिहरति—**अधिष्ठानमिति** ॥ अधिष्ठानमतिरोहितस्वरूपं यथा भवति तथोपस्थाप्यत इति क्रियाविशेषणम् । तदाश्रये-

त्याश्रयशब्दो विषयपरः । **भ्रमाश्रयमधिष्ठानमिति** ॥ आश्रयशब्दस्य नित्यपुंल्लिङ्गतया आश्रयोऽधिष्ठानमिति पाठस्स्यादिति श्रुतप्रकाशिकाचार्यास्सूचयन्ति । **अधिष्ठानातिरेकिपारमार्थिकेति** ॥ रज्जुत्वमिथ्यात्वे सर्पसत्यत्वप्रसङ्ग इति भावः । विरोध्याकारस्यापारमार्थ्येऽपि भ्रमनिवृत्तिरुपपद्यते । यथा—"भ्रमरी भ्रमरभ्रमेण वृन्ते यददावभ्रममाश्लिषत्पलाशम्" इति । तत्रापि पुष्पत्ववृन्तत्वादीनां पारमार्थ्यात् । अन्यथा भ्रमपरंपरैव शरणमिति ॥

स्वसिद्धान्तमाह—**जीवशरीरकेति** ॥ **एकविज्ञानेनेति** ॥ कार्यकारणयोरेकद्रव्यत्वात् प्रतिज्ञोपपत्तिरित्यर्थः । विशेषणाज्ञानेऽपि विशेष्यमात्रज्ञानेन ज्ञातत्वव्यवहारः मुख्यः सोयं देवदत्तो मया ज्ञातपूर्व इत्यादिः प्रसिद्ध इति भावः । **उद्देश्योपादेयविभागः कथमिति** ॥ मानान्तरावगतस्यैवोद्देश्यतया जीवशरीरकब्रह्मणोऽनवगतत्वात्तत्पर्यन्तस्योद्देश्यत्वासम्भवात् जीवमात्रमुद्दिश्य तस्य ब्रह्मभावो विधीयत इत्युपगन्तव्यमिति शङ्कितुराशयः । अस्य वाक्यस्य प्राप्तविषयत्वात् उक्तार्थप्रतिष्ठार्थनिगमनरूपत्वेन उपदिष्टत्वादत्रोद्देश्यविधेयभाव एव नास्तीति समाधातुराशयः । **ऐतदात्म्यमिति** ॥ इदं सर्वस्य सदात्मकत्वरूपविधेयसमर्पकम् । एष आत्मा यस्य तदेतदात्म, तदेवैतदात्म्यम्, स्वार्थे ष्यञ्चातुर्वर्ण्यब्राह्मण्यादिवत् । **सदायतना इति** ॥ अनेनाधाराधेयभावास्सिद्धः । चेतनेन यावदात्मभावितया धार्यं द्रव्यं हि शरीरम् । हेतुत्वप्राकट्याय वाक्यान्तरम्—**सर्वं खल्विति** ॥ अस्य च वाक्यस्य कार्यकारणावस्थप्रकार्यैकत्वमर्थः । स्वप्रकरणवाक्यं **अनेन जीवेनेति** ॥ **जीवेन** जीवशरीरकेण **आत्मना** मयेत्यर्थः । "सिंहेन भूत्वा बहवो मयाऽत्ताः" इतिवत् । **वस्तुत्वं** तत्तद्देवादिवस्तुत्वं **शब्दवाच्यत्वं** देवादिशब्दवाच्यत्वम् ।

**ब्रह्मानुप्रवेशादेवेति** ॥ न स्वरूपैक्यादित्यर्थः । ऐतदात्म्यशब्दव्याख्या-
नोपसंहारः—**अतस्सर्वशब्दानामिति** ॥ ऐतदात्म्यमिदं सर्वमिति वैय-
धिकरण्येन सामान्येनोक्तस्य तत्त्वमसीति सामानाधिकरण्येन विशेषेणो-
पसंहार इति भावः। तत्त्वमसीत्यत्र पुरुषव्यवस्था तु "प्रकृत्याश्रयः
पुरुषो भवति" इति महाभाष्यवचनात्प्रकृतित्वविवक्षानिबन्धना ।
प्रकृतित्वं च तत्पदार्थस्य तात्पर्यभूमित्वम् । अत एव "यदग्ने त्वं
स्यामहमहं वा त्वं स्याः" इत्यत्रौ विवक्षाधीनो नियमः । अतएव च
न्यायपरिशुद्धौ सुवर्णं खादिराङ्गारसदृशे कुण्डले भवत इत्यादिप्रयोगात्
उद्देशानुसारित्वनियमाभावस्समार्थितः ॥

१०७. अपर्यवसानवृत्तिः.

शरीरवाचकशब्दस्य शरीरिणि मुख्यत्वे प्रमाणं पूर्वमीमांसाऽऽकृ-
त्यधिकरणं (१-३-१०) उपजीव्य प्रवृत्तमुत्तरमीमांसागतमंशाधिकरणं
(२-३-७) अभिमतम् । आकृत्यधिकरणे हि जातिगुणवाचकपदानां
द्रव्यपर्यन्तत्वं व्यवस्थापितम् । तत्र जातिवाचकत्वं गुणवाचकत्वं वा मिथः
व्यभिचारेण प्रयोजकमिति वक्तुं न शक्यत इत्यनुगतप्रयोजकपरीक्षायां
अयुतसिद्धविशेषणवाचकत्वं प्रयोजकमित्याकृत्यधिकरणसिद्धोऽर्थः । इमं
च न्यायं मनसिकृत्वा "अंशो नानाव्यपदेशादन्यथाचापि दाशकितवा-
दित्वमधीयत एके" (२-३-४२) इति सूत्रं प्रवृत्तम् । तत्र हि जीव-
परयोः विशेषणविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः प्रव-
र्तन्ते । अभेदनिर्देशास्तु पृथक्सिद्ध्यनर्हविशेषणानां विशेष्यपर्यन्तत्व-
माश्रित्य मुख्यत्वेनोपपद्यन्ते इति सिद्धान्तः कृतः । अस्य च सिद्धान्तस्या-
कृत्यधिकरणन्याय एव मूलम् । शरीरवाचकपदानामपि लोकवेदयोरात्म-
पर्यन्तत्वेन प्रयोगप्राचुर्यात् अपृथक्सिद्धविशेषणवाचकत्वं विशेष्यपर्यन्त-

ताप्रयोजकमिति निर्णयः । एतेनांशाधिकरणेन निर्णीतेन न्यायेन सर्वेषां श्रुतिवाक्यानां सौहार्दं प्रदर्श्यते सिद्धान्ते । परेषां सिद्धान्तेषु चतुर्षु बहुविधो विरोधः । अतस्तान्विरोधान् प्रदर्श्य प्रागुक्तं मुख्यत्वमुपपादयितुमुपक्रमते—**अतो निर्विशेषेति** ॥ अतः तत्तन्नामभाक्त्वनिर्वाहकशरीरशरीरिभावश्रवणात् । **भेदाभेदवादिन इति** ॥ स्वाभाविकौपाधिकभेदवादिनोः यादवभास्करयोस्तन्त्रेणोक्तिः । **केवलभेदवादिनः** स्वनिष्ठभेदवादिनो वैशेषिकादेरित्यर्थः । उपपादयति— **एकस्मिन्वस्तुनीति** ॥ **सामानाधिकरण्यतादात्म्येति** ॥ तृतीयातत्पुरुषः । बाधार्थसामानाधिकरण्यनिरासादित्यर्थः । **केनापीति** ॥ विशेष्यांशतोऽप्यैक्यासिद्धेरित्यर्थः ॥

सिद्धन्तमाह —**निखिलेति** ॥ **सम्यक्त्वम्** मुख्यत्वम् । जातः पुरुषः कर्मभिरित्यत्र पुरुषपदं विवक्षितम् । **द्रव्यप्रकारत्वमेवेति** ॥ न त्वद्रव्यत्वमित्यर्थः । **परस्परव्यावृत्ताः** परस्पराननुगताः। अत्र प्रतिबन्द्यभिप्रेता । **सामानाधिकरण्यावसेयमिति** ॥ न मत्वर्थप्रत्ययेनेत्यर्थः ॥

यत्रापृथक्सिद्धविशेषणत्वं तत्र विशेष्येण सहधीनियमः जात्यादिषु दृष्टः । प्रकृते व्यापकनिवृत्त्या शरीरिणि देवमनुष्यादिव्यवहारः लाक्षणिक इत्याशङ्क्य गङ्गापदादावनुगताकारादर्शनेन लाक्षणिकत्वाभ्युपगमेऽपि तादृशाकारदर्शनेन प्रकृते सम्भवति मुख्यत्वे क्वचिदमुख्यताकल्पनं विनिगमनाविरहादनुचितमिति समाधत्ते—**यदि गौरश्व इति** ॥ **तत्प्रकारत्वं चेति** ॥ पृथगवस्थितत्वेनाप्रतिपन्नत्वं चेत्यर्थः । **जात्यादितुल्यमिति** ॥ मत्त्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकापृथक्सिद्धविशेषणत्वे प्रयोजकं तुल्यमित्यर्थः । **तत्प्रकारत्वमपीति** ॥ पृथक्स्थितत्वप्रतीत्यभावोऽपीत्यर्थः । **एतत्** निरुक्तं रूपत्रयम् ॥

अपृथक्सिद्धविशेषणत्वसहधीनियमयोः व्याप्तिरेकसामग्रीवेद्यत्वरूपोपाधिदुष्टेत्याह---**जातिव्यक्त्योर्नियमेनेति** ॥ एकसामग्रीवेद्यत्वमेवापृथक्सिद्धविशेषणत्वे प्रयोजकं स्यादित्याशङ्क्य प्रागुक्तयुक्त्या परिहरति—**पृथग्ग्रहणेति** ॥ **प्रकारैकस्वरूपत्वमिति** ॥ प्रकारत्वमेव स्वरूपं धर्मो यस्येति बहुव्रीहिः । निरुक्तव्याप्तेर्व्यभिचारमप्याह—**यदा चक्षुषा पृथिव्यादेरिति** ॥ अबाधितं व्यवहारं तत्र प्रमाणयति--**आत्मप्रकारतयेति** ॥

शरीरवाचकशब्दत्वं यत्र तत्र शरीरिपर्यन्तत्वमित्यत्र निष्कर्षकभिन्नत्वेन शब्दो विशेषणीय इति शङ्कासमाधानाभ्यां सूचयति—**ननु च शाब्देपीति** ॥ निष्कर्षकशब्देष्वपि केचिद्वैवक्षिकनिष्कर्षकाः । केचित् नियतनिष्कर्षकाः । आद्याः शुक्लनीलात्मादिशब्दाः । अनन्तराः जातिगोत्वशरीरादिशब्दाः । प्रयोगाधीना त्वियं व्यवस्था । **अयमर्थ इति** ॥ सर्वस्य शरीरत्वेऽपि तत्प्रयुक्तदोषानवकाशादिकं तत्र निरूपितमिति भावः ॥ स्वरूपैक्यपरत्वेन पराभिमतं सूत्रं वाक्यं च व्याचष्टे—**इदमेवेति** ॥ अहमित्येव परमात्मानमुपासीतेत्यर्थः । तत्रास्मच्छब्दः अन्तर्यामिपरमात्मपर्यन्त इति भावः ॥

१०८. सङ्कलितार्थः.

अथ शङ्करभास्करयादवप्रकाशाभिमतविवर्तपरिणामभेदाभेदपक्षापेक्षया स्वपक्षे सर्वप्रमाणसामरस्यलक्षणं वैलक्षण्यं तत्रतत्रप्रोक्तं सुग्रहत्वाय संङ्कलय्य दर्शयति--**अत्रेदं तत्त्वमिति** ॥ **स्वरूपविवेकः** ॥ स्वभावभेदः अत्रोदाहृतवाक्येषु व्याख्येयव्याख्यानभावेन प्रायः क्रमोऽवगन्तव्यः । **भोक्ताभोग्यमिति** ॥ अयं समग्रो मन्त्रः श्वेताश्वतरोपनिषदि (१-१२)–

**एतत् ज्ञेयं नित्यमेवात्मसंस्थं**
**नातः परं वेदितव्यं हि किंचित् ।**

**भोक्ता भोग्यं प्रेरितारं च मत्वा**
**सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत् ॥ इति ॥**

इयं श्रुतिः "अपिचैवमेके" (३-२ १३) इति शाङ्करसूत्रभाष्यानुसारेण संक्षेपशारीरके (३-२१.२) एवं व्याख्याता—सर्वं त्रिविधं ब्रह्म मे मह्यं प्रोक्तं पूर्वैरिति मन्त्रदृगाहेति। इदानीमुपलभ्यमानमुद्रितश्वेताश्वतरभाष्ये ब्रह्ममिति पदं विच्छिद्य व्यख्यातम्। अतो न तद्भाष्यं सम्प्रदायानुसारि, नापि शाङ्करमिति विभावयन्ति सुधियः। वेदार्थसङ्ग्रहश्रुतदीपिकायां "त्रिविधं ब्रह्म चैतत्" इति पाठः स्वीकृत इत्यवगम्यते ॥

एवं भेदश्रुतीरुदाहृत्याभेदश्रुतिविरोधं परिहर्तुं घटकश्रुतीरुदाहरति—**एवं भोक्तृभोग्येति ॥ यः पृथिवीमन्तरे सञ्चरन्निति ॥** सुबालोपनिषदियम्। **अन्तः प्रविष्टेति ॥** अन्त प्रविश्य नियामकत्वस्यैव शरीरलक्षणत्वात् शरीरात्मभावोऽनेनापि फलितः ॥

अथ भेदश्रुतीरुदाहृत्य व्याख्याति—**एवं सर्वावस्थाऽवस्थितेति॥ तद्धेदं तर्हीति ॥** नामरूपाभ्यामिति विशेषणे तृतीया। अनया श्रुत्या कालविशेषोक्तमैक्यं नामरूपव्याकरणाभावरूपं न स्वरूपैक्यरूपमित्यवगम्यते ॥

अथ सर्वश्रुतीनामस्मिन्नेवार्थे मुख्यत्वं दर्शयन् उपक्रमगतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं मध्यगतं कार्यकारणयोरैक्यं उपसंहारगतं तत्त्वमसीतिसामानाधिकरण्यमित्येतत्त्रयमद्वैतप्रतीतिकारणं पराभिमतं निर्वहति—**अतः कार्यावस्थ इति ॥** स्वपक्षे दोषाः परैः शङ्किता निराक्रियन्ते—**अतः स्थूलसूक्ष्मचिदचिदिति ॥ एवं च सति परस्येति ॥** अयमाशयः—सर्वावस्थाऽवस्थितसर्ववस्तूनामन्तर्यामित्वेन सर्वदाऽवस्थानात् तत्तत्कालीनतत्तदवस्थवस्तुनियमनरूपस्यावस्थाविशेषस्याद्वारेण ब्रह्म-

णस्सम्भवात् कारणत्वकार्यत्वव्यवहारः मुख्यः । अचिद्गतस्य चिद्गतस्य-च सर्वविधस्यावस्थाविशेषस्य स्वाश्रयाश्रयत्वेन परम्परयाऽप्याश्रितत्वं सम्भवतीति कार्यकारणादिसर्वशब्दवाच्यत्वमुपपद्यत इति च ॥

भेदनिषेधश्रुत्यर्थमाह—**सोऽकामयत बहु स्यामिति ॥ रूपतया** शरीरतया **अब्रह्मात्मकवस्तुनानात्वं** ब्रह्मान्तर्यामिकत्वरहितवस्तुभेदः । विहितव्यतिरिक्तस्वनिष्ठवस्तुभेदः । विहितव्यतिरिक्तस्वनिष्ठवस्तुभेदः इति यावत् । **योऽन्यत्रात्मनस्सर्वं वेदेति ॥ अन्यत्रेति** अव्ययं विनाशब्दपर्यायम् । ब्रह्मणः पृथग्भूतं तदविनाभावरहितं वस्तु वेदेत्यर्थः ॥

इममर्थं वैदिकदृष्टान्तेनोपपादयति—**चिदचिदीश्वराणामिति ॥** अयमर्थः—आग्नेयः अग्नीषोमीयः उपांशुयाजः ऐन्द्रं पयः ऐन्द्रं दधि ऐन्द्राग्नश्चेति षड्यागाः । तत्राद्यत्रयं पौर्णमास्यां कर्तव्यमिति पौर्णमासीशब्देन व्यवह्रियते । अनन्तरत्रिकममावास्यायां कर्तव्यमित्यमावास्याशब्देनाभिधीयते । एतत्त्रिकद्वयं दर्शपूर्णमासयागपदेन व्यपदिश्यते । "यदाग्नेयोऽष्टाकपालः" इत्यादिभिः वाक्यैः उत्पत्तिविधिनामकैः षण्णां यागानां स्वरूपाण्यवगम्यन्ते । "य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते" इति वाक्याभ्यां समुदायानुवादभ्यां कर्तव्यः कालोऽवगम्यते । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकारविधिवाक्येन स्वर्गार्थं दर्शपूर्णमासयागः कतव्यं इत्यवधार्यते ॥

तत्र यथा विभिन्नस्वरूपस्वभावानेतान् षड्यागान् एकेनोपाधिना द्विराशीकृत्यापरेणोपाधिना एकराशीकृत्य वचोभङ्ग्या व्यवहारे कृतेऽपि षडेव यागव्यक्तयः वस्तुतः प्रतिपाद्यन्ते न द्वे व्यक्ती नाप्येका व्यक्तिः । तथा प्रकृते भोक्तृभोग्यप्रेरितृरूपं तत्त्वत्रयं शरीरात्मभेदेन द्विराशीकृत्य कार्य-

कारणभावेनैकराशीकृत्य तत्तत्पदेन व्यवहारे कृतेऽपि वस्तुतः तत्त्वत्रयमेव प्रतिपाद्यत इत्यवधेयम् । इयान् विशेषः—तत्र यागाः कर्तव्यकालबोधनाय द्विराशीकृताः । अनुष्ठानायैकराशीकृताः । तत्त्वत्रये तु शरीरात्मभावेन पारतन्त्र्यसूचनाय द्विराशीकरणम् । कारणत्वेनोपासनायैकराशीकरणमिति । कारणत्वे रक्षकत्वमन्तर्नीतमिति सर्वविद्यानुयायीदं कारणत्वमिति केषांचिदाचार्याणामभिप्रायः ॥

आग्नेयादिसमुदायेऽन्यतमवाचकपदेन समुदायानभिधानेऽपि अत्र परमात्मवाचकसदादिशब्देन समुदायाभिधाने लौकिकं दृष्टान्तं प्रदर्शयति—**चिदचिद्वस्तुशरीरिण इति** ॥ अयमर्थः—आग्नेयादिसमुदाये प्रत्येकं स्वनिष्ठः यागः । अत्र तु एकस्य इतरत् द्वयमपृथक्सिद्धम्, अतः सद्ब्रह्मात्मादिशब्दाः अर्थात्प्रकरणात् सापेक्षत्वाच्च पृषदाज्यन्यायेन विशिष्टस्योपस्थापका इति । पृषदाज्यपदं हि "पृषदाज्येनानूयाजान्यजति" इत्यादौ न द्रव्यान्तरपरम्, अपि तु लौकिकदधिसंस्कृतप्राकृताज्यपरमिति निर्णीतम् ॥

## १०९. निवृत्त्यनुपपत्तिः.

अथ निवर्तकाभावे निवृत्त्यनुपपत्तिः—**यत्पुनरिति** ॥ प्रपञ्चो न ज्ञाननिवर्त्यः सत्यत्वात् सत्यसर्पवत् । ज्ञानं न भेदरूपप्रपञ्चनिवर्तकं अपरमार्थभूतैक्यविषयकत्वात् सम्मतवदित्यत्राशयः । **परमपुरुषप्रसादेति** ॥ उपासनस्य गरुडोपासनादिवत् देवताप्रीतिरूपादृष्टद्वारा निवर्तकत्वमित्यभिप्रायः । **मिथ्यैतदिति** ॥ "परमात्मात्मनोर्योगः परमार्थ इतीष्यते" इति पूर्वार्धम् । अत्र योगः ऐक्यलक्षणः संबन्धः । इष्यते इति पूर्वपक्षः । प्रमाणविरोधमुक्त्वा युक्तिविरोधमाह—**अपि च भवदिति** ॥ **तत्कल्पनाकल्पकेति** ॥ विनाशज्ञानकल्पकदोषरूपाविद्ये-

त्यर्थः । **अन्वेषणीयमिति** ॥ अनवस्थादोष इति भावः । **तदुत्पत्त्यसंभवादिति** ॥ अन्यथा विरोधपरित्यागप्रसङ्ग इति भावः ॥

निवर्तकज्ञानांशे विरोधमभिधाय ज्ञात्रंशे तमाह—**अपिच चिन्मात्रेति** ॥ मानजा धीस्साश्रयैवेति भावः । **अध्यास इति** ॥ कल्पित इत्यर्थः । **न तस्येति** ॥ कर्तुस्सिद्धत्वात्कर्मणः साध्यत्वात्कालविरोधः ॥ **किं स्वरूपमिति** ॥ स्वाभाविकमित्यर्थः । **त्रिरूपत्वादिति** ॥ कर्तृकर्मक्रियात्मकानि त्रीणि रूपाणि ॥ **अस्मदीय इति** ॥ ब्रह्मणोऽपि धर्मभूतज्ञानाश्रयत्वादिति भावः । स्वनाशप्रवृत्तिपरिहारं शङ्कते—**तन्नाशस्येति** ॥ कर्तृनाशस्येत्यर्थः । तन्नाशे तिष्ठति तदुत्पत्त्यसंभवादित्याभिप्रेत्याह—**भेददर्शनेति** ॥

इदमत्रावधेयम्—तत्त्वटीकायां महापूर्वपक्षेऽविद्यानिरूपणसन्दर्भे "केचिदाहुः बन्धमूलमज्ञानं कर्मरूपं प्रवाहानादि । भ्रान्तिमूलं त्वज्ञानं इन्द्रियादिदोषोऽधिष्ठानयाथात्म्यज्ञानप्रागभावश्चेति । एतत्सर्वं तत्कार्याणि च सदसद्विलक्षणानि । सर्वमूलाविद्या त्वर्धपञ्चमाकारा । तन्निवृत्तिर्हि पञ्चमाकारेति" इति दृश्यते ॥ सर्वार्थसिद्धावपि—

**अविद्यां विश्वजननीमर्धपञ्चमरूपिणीम् ।**
**निवृत्तिपञ्चमाकारां कल्पयन्तोऽप्यधःकृताः ॥**

इति ॥ सोऽयं विलक्षणोऽविद्यापरिष्कारः अविद्याभ्रान्त्यज्ञानानां वैलक्षण्याभिप्रायगर्भः । अत्र प्रपञ्चः सदसद्विलक्षणलक्षणतुरीयकोटिविश्रान्तः । तत्कारणीभूतस्तु अविद्यापदवाच्यः सार्धतुरीयकोटिविश्रान्तः । तन्निवृत्तिपदार्थस्तु पञ्चमकोटिविश्रान्तः । अनेन परिष्कारेण अविद्यानिवृत्तिविषयकपरकीयचोद्यानां परिहारः भवतीत्यभिसन्धिः ॥

परमप्रकृतस्य ब्रह्मविचारस्य कर्मसापेक्षत्वं निगमयति—**तस्मादिति** ॥ वस्तुसामर्थ्यासिद्धेरित्यर्थः । **कर्मप्रवाहरूपेत्यनेनानिर्वाच्यत्व-**

व्युदासः । **उक्तलक्षणेत्यनेन** वाक्यार्थज्ञाननिरासः । **तत्रकेवलेति** ॥ कर्मणामेव अल्पास्थिरफलत्वानन्तस्थिरफलत्वयोः कथनं फलद्वारा हानार्थं स्वरूपेणोपादानार्थम् ॥

## 23. प्रथमसूत्रतात्पर्यार्थः.

### ११०. अधिकार्यभावः.

एवं महता प्रबन्धेन बन्धस्य सत्यत्वव्यवस्थापनेन धीः न कर्मसमुच्चिता इत्यनुमाने मिथ्याभूतवस्तुबाधनपर्याप्तत्वलक्षणः सामर्थ्यहेतुरसिद्धीकृतः । ततश्च कर्मविचारो न ब्रह्मविचारपूर्ववृत्तः विद्यासमुच्चयानर्हविषयकत्वादिति लघुपूर्वपक्षमूलभूतप्रत्यनुमाने हेतुरप्यसिद्धीकृतः । ततश्च कर्मविचारो ब्रह्मविचारपूर्ववृत्तः ब्रह्मविचारनियतपूर्ववृत्तित्वादिति युक्तिं व्यवस्थाप्य अथशब्दः आनन्तर्यार्थकः असाधारणवृत्तविशेषादृष्टिलक्षणप्रसिद्ध्यपवादकलिङ्गाभावादिति युक्तिः समर्थिता । तथैवातश्शब्देऽपि ॥

एवं सूत्राक्षरार्थमुक्त्वा तात्पर्यार्थं वक्तुमारभते—**तत्र पूर्वपक्षवादीति** ॥ यथा पूर्वतन्त्रे अध्ययनस्याचार्यकाधिकारकत्वात् न शास्त्रमारम्भणीयमिति पूर्वपक्षं कृत्वाऽर्थज्ञानाधिकारकत्वादारम्भणीयमिति सिद्धान्तः प्राभाकरैः कृतः । यथा वा—अध्ययनस्य स्वर्गार्थत्वात् न शास्त्रमारम्भणीयमिति पूर्वपक्षं कृत्वा अर्थज्ञानार्थत्वादारम्भणीयमिति सिद्धान्तः भाट्टैः कृतः । एवमत्रापि सिद्धव्युत्पत्त्यभावात् न शास्त्रमारम्भणीयमिति पूर्वपक्षं कृत्वा कार्यव्युत्पत्तेरेवासंभवादारम्भणीयमिति सिद्धान्तः क्रियते ॥

अयमत्र सारार्थः—यथा पूर्वतन्त्रे वेदाचार्यो जैमिनिः "स्वाध्यायोऽध्येतव्यः" इति श्रुत्यर्थमनुसन्धाय "अथातो धर्मजिज्ञासा" इति

सूत्रयामास, तथा वेदान्ताचार्यो बादरायणः "परीक्ष्य लोकान्" इति श्रुत्यर्थमनुसन्धाय "अथातो ब्रह्मजिज्ञासा" इति सूत्रयामास ॥

**अत्राधिकारी विषयः सबन्धश्च प्रयोजनम् ।**
**चतुस्सूत्र्या सूचितं स्यात् प्रवृत्त्यङ्गचतुष्टयम् ॥**

"परीक्ष्य लोकान्" इति श्रुत्या च न्यायसिद्धार्थानुवादेन ब्रह्मविचाराय गुरूपसदनं नियम्यते शास्त्रज्ञोऽपि स्वातन्त्र्येण ब्रह्मज्ञानान्वेषणं न कुर्यादिति । तथाच विचारकर्तव्यत्वप्रसक्तिः । अत्रेत्थमाशङ्का—वेदान्तवाक्यार्थपरीक्षारूपः ब्रह्मविचारः न कर्तव्यः—प्रेक्षावत्प्रवृत्त्यनर्हः । विशिष्टाधिकारिशून्यत्वात् । काकदन्तपरीक्षावत् । सा चेत्थं संगृहीता—

**काकस्य कति वा दन्ताः मेषस्याण्डं कियत्पलम् ।**
**कम्बले कति रोमाणि का वार्ता चोलमण्डले ॥**

इति। प्रकृते अधिकारिवैशिष्ट्यं तु कर्मविशेष्यकाल्पास्थिरफलत्वप्रकारकनिर्णयविशिष्टब्रह्मविशेष्यकानन्तास्थिरफलत्वप्रकारकापातप्रतीतिमत्त्वम्। तादृशाधिकारिशून्यत्वं च शब्दस्य सिद्धवस्तुबोधनसामर्थ्यावधारणरूपसिद्धव्युत्पत्तिविरहेण वेदान्तवाक्यस्य सिद्धे ब्रह्मणि तात्पर्यग्रहविरहात् यत् यादृशार्थतात्पर्यग्रहशून्यं तत्तादृशार्थनिर्णायकाधिकारिशून्यं यथा यूपादित्यैक्यतात्पर्यशून्यं "आदित्यो यूपः" इत्यादिवाक्यम् ॥

१११. सिद्धव्युत्पत्तिविरहः.

सिद्धव्युत्पत्तिविरहश्च प्राथमिकव्युत्पत्तिग्रहस्य नियोगरूपकार्यान्वितविषयकव्यवहाराधीनत्वात् । तथाहि—व्युत्पित्सुः बालः गामानयेत्यादिप्रयोजकवाक्यश्रवणसमनन्तरं गवानयने प्रवृत्तं प्रयोज्यमुपलभ्य इयं गवानयनप्रवृत्तिः गवानयनकार्यताज्ञानसाध्या गवानयनप्रवृत्तित्वात् मदीयगवानयनप्रवृत्तिवदिति प्रयोज्यस्य गवानयनकार्यताज्ञानमनुमाय तच्च ज्ञानं निरुक्तशब्दजन्यं तदन्वयव्यतिरेकानुविधायित्वात् यत् यदन्वयव्य-

तिरेकानुविधायि तत्तज्जन्यामिति सामान्यमुखव्याप्त्या तस्य शब्दजन्यतां निश्चिनोति । एवं बहुषु प्रयोगेषु अनुवृत्तशब्दस्यानुवृत्तार्थसंबन्धं व्यावृत्तशब्दस्य व्यावृत्तार्थसंबन्धं गृहीत्वा आवापोद्वापमुखेन अर्थविशेषशब्दविशेषसंबन्धं निश्चिनोतीति प्राथमिकी व्युत्पत्तिः कार्यार्थावलम्बिनी । तदुपजीविद्वितीयादिव्युत्पत्तिग्रहोऽपि कार्यविशेषविषयक एवेति कार्यानन्विते सिद्धार्थे ब्रह्मणि व्युत्पत्तिग्रहासंभवाद्वेदान्तानां तत्परत्वग्रहासंभवेन अनन्तस्थिरफलापातप्रतीतिरूपविशेष्यांशासिद्धिः । यद्युपासनाविधिशेषभूतमन्त्रार्थवादाधीनानन्तस्थिरफलब्रह्मापातप्रतीतिः तर्हि "अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति" इत्यादिवाक्याधीनानन्तस्थिरफलकर्मप्रतीत्या विशेषणांशासिद्धिः । अतो विशिष्टाधिकारिविरह इति पूर्वपक्षसंग्रहः । अत्र सिद्धव्युत्पत्तिसमर्थनेन वेदान्तानां ब्रह्मणि तात्पर्यसमर्थनात् ततश्चाधिकारिसमर्थनाच्च अनारम्भपूर्वपक्षहेतुरसिद्ध इति सिद्धान्तसारार्थः॥

श्रीभाष्यार्थस्तु—**व्यवहारेति** ॥ गवानयनप्रवृत्तेः कार्यताज्ञानसाध्यत्वादित्यर्थः । भाट्टमतं व्युदस्यति—**न च पुत्रेति** ॥ **वाक्येष्वित्यस्य अर्थविशेषबुद्धीत्यनेनान्वयः** नैयायिकमतं व्युदस्यति—**नापि व्युत्पन्नेति** ॥ पुरुषस्येति शेषः । **ज्ञातकार्येति** ॥ अत्रापि पूर्ववत् शेषः ॥ मायावादिमतं व्युदस्यति—**नच सर्पेति** ॥ शाङ्करे समन्वयसूत्रे मतमिदमुपलभ्यते । अन्यान्वितसिद्धपरवादिवाचस्पतिमतं व्युदस्यति—**कार्यबुद्धीति** ॥ सर्वपदानामित्यन्वयः । यत्र प्रवृत्तः तत्र कार्यताज्ञानमिति व्याप्तिः । व्याप्तिभङ्गमाशङ्क्याह—**इष्टसाधनेति** ॥

११२. सिद्धव्युत्पत्तिसमर्थनम्.

**अत्राभिधीयते इति** ॥ सूत्रकृतेति शेषः ॥ संबन्धस्य सामयिकत्ववादं निरस्यति—**सङ्केतयित्रिति** ॥ अस्य शब्दस्यायमर्थ इति

विशिष्यव्युत्पत्तिमाह—**पुनश्चेति** ॥ बुद्धिपूर्वकव्युत्पत्तिमुक्त्वा यादृच्छिकीं व्युत्पत्तिमाह— **प्रकारेति** ॥ शब्दानपेक्षत्वायाह—**मूकवदिति** ॥

अभ्युपगम्याह—**कार्यार्थत्वेऽपीति** ॥ विशिंषन् विषयः धात्वर्थः । **उपासनविषयेति** बहुव्रीहिः । कार्यविशेषणम् । तत्राधिकृतस्य पुरुषस्येत्यर्थः । फलतया सिद्धिकथनात् विषयतया सिद्धिं वदतां ध्याननियोगवादिनां मतस्य व्युदासः । तन्मते हि ध्येयस्वरूपसमर्पणमात्रपर्यवसानात् वस्तुसत्यत्वासिद्धिः । फलतया सिद्धिकथने फलस्यासत्यत्वे प्रवृत्तिरेव न घटेतेति भावः । विधिस्थफलस्यार्थवादिकविशेषणस्वीकारः—**दुःखेति** ॥ आर्थवादिकस्यैव फलस्य स्वीकारः—**रात्रीति** ॥ विधेयविरोधिफलस्य वाक्यान्तरस्थस्य स्वीकारः—**अपगोरणेति** ॥

## 24. कार्यवाक्यार्थः

### ११३. मण्डनमतखण्डनम्.

अथ कार्यव्युत्पत्तेरेवाभावाय कार्यप्रतिक्षेपः क्रियते । अतः तत्स्वरूपमवधेयम् ।

अत्र कार्यवाक्यार्थवादः वाक्यार्थमातृकायां शालिकनाथेन निरूपितः अत्यवश्यज्ञातव्यतया संगृह्यते । अत्र मण्डनमिश्राः प्राहुः—

**पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।**
**प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥**
**कर्तुरिष्टाभ्युपाये हि कर्तव्यमिति लोकधीः ।**
**विपरीतं त्वकर्तव्यमिति तद्विषये मतिः ॥**

इति । इष्टसाधनत्वमेव प्रवर्तकं तदेव कार्यतारूपं कृतिसाध्यत्वमिति । अत्र गुरवो वदन्ति—

**आस्तां तावत्क्रिया लोके गमनागमनात्मिका ।**
**अन्ततः स्तनपानादितृप्तिकारिण्यपि क्रिया ॥**

**सा यावन्ममकार्येयमिति नैवावधार्यते ।**
**तावत्कदाऽपि लोकेऽत्र प्रवृत्तिर्न भविष्यति ॥**

इति । कार्यताज्ञानमेव प्रवर्तकम् । इष्टसाधनता न कार्यतारूपेति ॥

११४. कार्यतानिरूपणम्.

**कार्यता कृतिसाध्यत्वं फलसाधनता पुनः ।**
**कारणत्वं फलोत्पादे भिद्येते ते परस्परम् ॥**

अतीतस्यानागतस्य चेष्टसाधनताऽस्ति । न च तत्कर्तव्यतयाऽध्यवसीयते । तेनान्या कार्यता अन्या चेष्टसाधनतेति । तथाच प्रवृत्तिरपि तन्मात्रावगमायत्ता न भवतीति । यद्यप्येकवस्तुनिवेशिता द्वयोः । तथापि स्वरूपभेदोऽस्त्येव । तदेवहि वस्तु फलं प्रत्युपायभावात्फलसाधनमित्युच्यते । कृत्यधीनात्मलाभतया च कार्यमिति । किमितीष्टाभ्युपायेष्वेव कर्तव्यताऽवगमोऽन्यत्र नेति । तत्राह—

**किं तु स्वयं क्लेशरूपं कर्म यत्कार्यतां व्रजेत् ।**
**फलसाधनता तत्र कारणं तेन कार्यता ॥**
**तद्भावभाविनी नित्यं तदात्मेव प्रकाशते ॥**

स्वभावेन हि कर्माणि दुःखोत्पादहेतुभूतानि । तेषु कार्यत्वावगमः फलसाधत्वावगमनिबन्धनः । कार्यता हि न कृत्यधीनसिद्धिमात्ररूपा । किं तु यत् कृतिं प्रति प्रधानभूतं सत् तदधीनसत्ताकं तत्कार्यमुच्यते । तच्च कृतेः प्रधानम् , यदधिकृत्य कृतिः प्रवर्तते । न च दुःखं दुःखहेतुं वाऽधिकृत्य कृतेः प्रवृत्तिरुपपन्ना । किन्तु सुखं सुखहेतुं वा । तत्र न तावत्स्वयं सुखरूपं कर्म । सुखसाधनमिति चेत् , स्यात् , न तस्य कृतिं प्रति प्राधान्याभ्युपगमो घटते । अतः कर्मसु कार्यत्वावगमः फलसाधनत्वावगमनिबन्धन इति ज्ञापककोटिनिविष्टां फलसाधनतां कार्यताऽनुरुध्यते, न त्वसौ तदात्मैव ॥

तथाचासाधनस्यापि सुखस्यैवास्ति कार्यता। सुखं हि सर्वः कार्य-तयाऽवैति, न तस्य फलसाधनतामपेक्षते। तेन साधनतोत्तीर्णकार्यत्वा-वगमेन मे प्रवृत्तिरिति निश्चित्य व्युत्पित्समानः चैत्रं प्रवर्तमानं दृष्ट्वाऽ-नुमिनोति चैत्रोऽपि कार्यबोधात्प्रवर्तत इति। चैत्रस्य प्रवृत्तिर्धर्मिणी कार्यबुद्धिपूर्विकेति साध्यो धर्मः। बुद्धिपूर्वकत्वे सति प्रवृत्तित्वात् मदी-यप्रवृत्तिवदिति। लिङादयश्च प्रवृत्तिहेतुभूतार्थाभिधायिनः कार्यमेवाभि-दधते, तस्यैवावगतस्य प्रवृत्त्यनन्तरकारणत्वात्। इच्छा यद्यपि प्रवृत्ति-हेतुस्तथापि सा लिङादिवाच्या न भवति तदवगमस्य प्रवृत्तावनपेक्षित-त्वात्। उत्पन्ना हि सा प्रवृत्तिकारणम्। नावगता। अतश्च—

**शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि।**
**आवापोद्वापभेदेन तथा कार्ये लिङादयः॥** इति॥

११५. कार्यत्वावगमः.

केन पुनः प्रमाणेन बालः स्वयं कार्यमवगच्छति, यतः प्रवर्तत इत्यत आह—

**कृतिसाध्यं प्रधानं यत्तत्कार्यमवसीयते।**
**तच्च मानान्तरेणापि वेद्यमोदनपाकवत्॥**

कृतौ सत्यां च भावादसत्यां चाभावादनुमानतः कृतिसाध्यता तावदव-गम्यते। यदधिकृत्य कृतिः प्रवर्तते तत्कृतिप्रधानम्। प्रयत्नश्च कृतिः। स च मानसप्रत्यक्षवेद्य इति विशिष्टप्रयोजकताऽपि प्रयत्नस्य प्रत्यक्षवे-द्यैव। तेन प्रत्यक्षानुमानाभ्यामवगम्यते, यथा ओदनपाकस्येति न किंचिदनुपपन्नम्—

**एवं कार्यात्मकेऽप्यर्थे व्युत्पद्यन्ते लिङादयः।**
**तदन्वितेषु स्वार्थेषु तथा शब्दान्तराण्यपि॥** इति॥

११६. क्रियातिरिक्तता.

एवमपि कथं मानान्तरावेद्यकार्यवाचिता लिङादीनामित्याशङ्क्य मीमांसावतारः—

संप्रधार्यमिदं त्वत्र तत्कार्यं किं क्रियात्मकम् ।
यद्वा तद्व्यतिरेकीति तत्र लोकानुसारतः ॥
प्रमाणान्तरविज्ञेया क्रिया कार्येति यद्यपि ।
प्रतिभाति तथा वेदे सिद्धान्तो न भविष्यति ॥
स्वर्गकामादयः कार्ये नियोज्यत्वेन सङ्गताः ।
स्वर्गकामादिभिः शब्दैर्वक्तव्या इत्यवस्थितम् ॥

लिङादिप्रयोगे तावत्कार्यावगतिरस्तीति निर्विवादम् । कृतिसाध्यं च कार्यं भवति । सति कर्तरि तस्यात्मलाभः । कर्तृलाभश्च स्वसंबन्धिकार्यविबोधे सति भवति नान्यथा । तेन यद्यपि लोकानुसारेण क्रियाया एव कार्यतया बोध्यमानायाः वाक्यार्थत्वात् तदन्वयित्वाच्चेतरेषामपि पदार्थानां, कारकत्वादृते चान्यस्य क्रियान्वयित्वासंभवात् लोहितोष्णीषिन्यायेन विशेषणभूतस्वर्गकामनासमर्पणपरतया कर्तृविशेषणत्वेन स्वर्गकामस्यान्वयोऽवगम्यते । तथापि स्वसंबन्धिकार्यबोद्धृत्वेनैवान्वयो वर्णनीय इति नियोज्यसमर्पकत्वमेव आश्रीयते ॥

नियोज्यस्स च कार्यं यस्स्वकीयत्वेन बुध्यते ।
स्वर्गादिः कामयोगाच्च साध्यत्वेनैव गम्यते ॥

साध्यविषयैव हि सर्वत्र कामना भवति । तेन तत्संबन्धात् साध्यभूतं स्वर्गादि काम्यमानतया पुरुषं विशिनष्टि ॥

तेन साध्यत्वपर्यन्तस्वर्गादीच्छाविशेषितः ।
तदेव शक्नुयात्कार्यं बोद्धुं यत्काम्यसाधकम् ॥
लिङादिस्तत्र कार्यं चेत् क्रियामेवावबोधयेत् ।
समन्वयो नियोज्येन तदानीमिव हीयेत ॥
क्रिया हि क्षणिकत्वेन न कालान्तरभाविनः ।
स्वर्गादेस्साध्यमानस्य न शक्ता जननं प्रति ॥

इष्टस्याजनिका सा च नियोज्येन फलार्थिना ।
कार्यत्वेन न संबन्धमर्हति क्षणभङ्गिनी ॥
तस्मान्नियोज्यसंबन्धसमर्थं विधिवाचिभिः ।
कार्यं कालान्तरस्थायि क्रियातो भिन्नमुच्यते ॥

शक्तिमति चातीते शक्तिरप्यतीतेति प्रमाणान्तरसिद्धमिति न क्रिया-शक्तिरपि स्थायिनी शक्या कल्पयितुम् ॥

### ११७. देवताराधनविचारः.

ननु यागादिक्रिया देवताराधनोपायभूता सती कार्यतयोच्यताम्। सा तत्प्रत्यासत्तिद्वारेण कालान्तरेऽपि फलं जनयितुमलमेव। देवता फलदानसमर्था कर्मभिराराध्यते। साऽऽराधिता प्रसीदति। प्रसन्ना च कर्तॄन् कालान्तरेऽपि फलेन योजयत्येवेति ॥ नैतदेवम्—यागादीनां देवताराधनहेतुत्वे प्रमाणाभावात्। ननु देवतापूजार्थ एव यजिः स्मर्यते। पूजा च सर्वा पूज्यमानार्थेत्यवगतम्। उच्यते—न स्मृतिः प्रमाणं स्मृतित्वादेव। प्रमाणान्तरापेक्षया च स्मृतीनामर्थवर्णनम्। न च प्रमा-णान्तरेण देवताराधनोपायता यागस्येत्युक्तम्। अतो देवतोद्देशेन द्रव्य-त्यागो याग इति गौणं देवतापूजात्मकत्वमवगमयितव्यम्। पूजाऽपि पूज्योद्देशेनैव हि प्रवर्तत इति ॥

अपि च सा कर्मभिराराध्यते, याऽऽराधनं प्रतिपद्यते। नाना-दिग्देशगामिना पुरुषेणानुष्ठीयमानयागात्मकपूजावगमश्च देवताया इति प्रमाणविरुद्धमेव। तस्या अनादित्वानुपपत्तेः। देवताधिकरणे च प्रपञ्चे-नायं ग्रन्थो निरस्त इति नातीव यतितव्यम् ॥

### ११८. कल्पापूर्ववादनिरासः.

ननु क्रियैव कार्यतयोच्यताम्। फलसाधनता च तस्या एवाश्री-

यताम् । तदन्वयानुपपत्त्या तु किंचिदप्यपरं तज्जन्यं फलोदयानुगुणं कालान्तरस्थायि आत्माश्रयं परिकल्प्यताम् । मा भूत्तस्य लिङादिवाच्यतेति । उच्यते—तद्धि तदनुपपत्त्या कल्प्यते यत्तस्योपपादकम् । न च क्रियाजन्येनान्येन फलजनकेन कल्पितेन क्रियायास्साधनतोपपादिता भवति । न हि साधनसाधनं तस्य साधनं भवति । अवान्तरव्यापारो वा शक्तिर्वा तत्साधनं निर्वाहयति । व्यापारयोगितयैव शक्तिमतां साधनता यतः । नचात्मसमवायि अर्थान्तरं कर्मणामवान्तरव्यापारो, नापि शक्तिरिति न तस्यार्थापत्तिगम्यता युक्ता । किंत्वन्विताभिधाने स्थिते नियोज्यानुगुण्यात् शब्दवाच्यतैवोचितेति ॥

११९. अपूर्वं नियोगश्च.

तद्धि कालान्तरस्थानात् शक्तं स्वर्गादिसिद्धये ।
संबन्धोऽप्युपपद्येत नियोज्येनास्य कामिना ॥
क्रियादिभिन्नं यत्कार्यं वेद्यं मानान्तरैर्न तत् ।
अतोमानान्तरापूर्वमपूर्वमिति गीयते ॥
कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।
नियोग इति मीमांसानिष्णातैरभिधीयते ॥
कार्यस्यैव प्रधानत्वात् वाक्यार्थत्वं च युज्यते ।
वाक्यं तदेव हि प्राह नियोज्यविषयान्वितम् ॥
आत्मसिद्ध्यनुकूलस्य नियोज्यस्य प्रसिद्धये ।
कुर्वत्स्वर्गादिकमपि प्रधानं कार्यमेव नः ॥

यत्तदपूर्वं कार्यं तस्य नियोज्यान्वयं विना कार्यत्वानुपपत्तिः । अनुष्ठानं विना तदसंभवात् । कर्त्रा च विना तदनुपपत्तेः । अधिकारिणा च विना कर्तुरभावात् । नियोज्यत्वं विना तदयोगात् । अकामसाधने च नियोगानवगमात् इत्यात्मसिद्ध्यर्थमेव नियोगः काम्यमानफलसिद्धिहेतु-

त्वमवलम्बते स्वामिवत्। यथा आत्मन एव संविदधानः स्वामी गर्भदासस्योपकरोति। तथा नियोगोऽपि नियोज्यस्येति न प्राधान्यपदच्युतिः॥

एवं कामाधिकारार्थपर्यालोचनचिन्तया।
व्युत्पत्तिस्सर्ववाक्यार्थप्रतिपत्तिनिबन्धनम्॥
व्युत्पत्तिरिह कार्येऽर्थे व्यवहारानुसारिणी।
किं तु निर्धारणामात्रं वेदवाक्यविमर्शजम्॥
अपूर्वं हि क्रियासाध्यं साधिता खाधनं क्रिया।
तस्मादपूर्वसाध्यत्वं क्रियासाध्यत्वसङ्गतम्॥
प्रमाणान्तरगम्यं हि लोकश्शब्दैर्विवक्षति।
क्रियाकार्यत्व एवातः प्रयोगो लक्षणान्वितः॥
लक्षणानभिमानं तु मुख्यार्थानवधारणात्।
ये तु मुख्यार्थकुशलाः तेषां लाक्षणिकत्वधीः॥
तस्मान्मानान्तरावेद्यं कार्यमर्थान्तरान्वितम्।
वेदवाक्यं ब्रवीतीति संक्षेपोऽयमुदाहृतः॥ इति॥

## १२०. शाब्दबोधः.

स्वर्गकामो यजेतेत्यत्र प्राभाकरमते कार्यवाक्यार्थवादे शाब्दबोधक्रमस्त्वयं मानमेयरहस्यवार्तिके संगृहीतः प्रकाश्यते—

यजेतेति पदात्कार्यप्रधानं यागगोचरम्।
स्यात्कार्यं यागविषयमिति बोधस्स चादिमः॥
ततश्च यागविषयं कार्यं स्यात्स्वर्गसाधनम्।
इत्यर्थाध्याहारविद्भिः द्वितीयो बोध इष्यते॥
स्वर्गकामपदश्रुत्या स्वर्गकामनियोज्यकम्।
प्रागुक्तद्विदलं कार्यमिति स स्यात्तृतीयकः॥
ततश्च स्वर्गकामीयकृतिसाध्यमिति क्रमात्।
प्रागुक्तत्रिदलं कार्यमिति बोधस्तुरीयकः॥
नापूर्वे स्वर्गहेतुत्वं यागे तेन विना भवेत्।
इति चानुपपत्तेस्तु प्रतिसन्धानसंभवे॥

स्वर्गकामकृतेस्साध्यः स्वर्गकामनियोज्यकः ।
स्वर्गस्य साधनं यागः इति बोधस्तु पञ्चमः ॥
यदप्यनुपपत्तेस्तु प्रतिसन्धानमुच्यते ।
तदुपादानमित्युक्तं धीरौपादानिकी ह्यसौ ॥
विध्याक्षेप उपादानं श्रुतार्थापत्तितः पृथक् ।
सा स्यादभिहितापर्यवसानाऽश्रुतकल्पना ॥
अभिधानानवसितिरुपादानमितीर्यते ।
तेनौपादानिकीत्युक्ता फलसाधनतामतिः ॥
इति प्राभाकरमतं वादावल्यामुदाहृतम् ॥ इति ॥

१२१. कार्यनिराकरणम्.

अथापूर्वकार्यं दुर्निरूपत्वेन प्रत्याख्याय व्युत्पत्तेः सिद्धसाध्यभेदेन द्वैविध्यमेवोन्मूल्य सिद्धव्युत्पत्त्यभावरूपां मूलयुक्तिमेवासिद्धयति—**गामिति** ॥ कृतिसाध्यत्वमिष्टत्वं कृत्युद्देश्यत्वं चेति कार्यस्य त्रय आकाराः । आद्यद्वयं धात्वर्थफलसाधारणम् । अन्त्यस्त्वपूर्वस्य विशेष इत्याहुः । अत्र तृतीयमाकारं विकल्प्य विदूषयति—**कृतिभावभावीति**॥ किं कृतिकर्मत्वं किं प्रेरकत्वं किमनुकूलत्वं किं शेषित्वं किं प्रयोजनत्वं किं स्वतइष्टत्वरूपप्रयोजनत्वप्रयुक्तं प्राधान्यं किं वा सुखरूपत्वलक्षणं प्रयोजनत्वमिति सप्त विकल्पाः । कर्मत्वमुद्देश्यत्वमिति पक्षे इष्टस्य कृतिसाध्यत्व एव पर्यवस्यतीति भावः । अथेष्टस्य इच्छाविषयत्वं प्रेरकत्वं चेत्याकारद्वयमस्ति । तत्र द्वितीय आकारः उद्देश्यत्वमिति द्वितीयविकल्पेऽपि पूर्ववदेव दोष इत्याह—**इच्छाविषयस्येति** ॥ अनुकूलत्वमिति तृतीयं पक्षमसिद्धयति—**न च पुरुषस्येति** ॥ शेषित्वमिति तुरीयं दूषयति—**न च कृतिं प्रतीति** ॥ **कृतेरशेषत्वेनेति** ॥ कृत्यनुकूलकृतेरभावेन कृतौ कृतिव्याप्त्यर्हत्वलक्षणकृतिसाध्यत्वघटितशेषत्वलक्षणस्यासंभवेनेत्यर्थः । निरुक्तशेषत्वलक्षणस्यातिव्याप्तिमाह—**प्रधानस्यापीति**॥

अव्याप्तिमाह—**न भृत्योपि हीति** ॥ शेषत्वलक्षणं तु—"परस्यातिशयाधानेच्छया उपादेयत्वमेव यस्य स्वरूपं स शेषः, परश्शेषी" इति वेदार्थसंग्रहे निरूपितम् । प्रयोजनत्वमिति पञ्चमं दूषयति—**नापि कृतिप्रयोजनत्वमिति** ॥ **पुरुषस्येति** ॥ न हि कृतिः चेतन इति भावः । साक्षादिष्टत्वप्रयुक्तकृतिसाध्यत्वसंवलितं कृतिप्रधानत्वमिति षष्ठं दूषयति—**नियोगस्यापीति** ॥ **अत इति** ॥ स्वर्गसाधनतया इष्टत्वेन कृतिसाध्यत्वादेवेत्यर्थः ॥

विवृणोति—**स्वर्गकामेति** ॥ कृतिप्रधानत्वमाशङ्क्यनिरस्यति—**अत इति** ॥ व्युत्पत्तावेव साधनत्वोल्लेखः । व्युत्पन्नस्य तु अनन्यार्थतया प्रतीयते इत्यत्राह—**सुखेति** ॥ उक्तदोषपरिहाराय नियोगस्य सुखरूपत्वलक्षणप्रयोजनत्वपक्षं सप्तममाशङ्क्य परिहरति—**अपिचेति** ॥ पण्डापूर्वसुखवादं निरस्यति—**नापि नित्येति** ॥ योग्यानुपलब्धिमाह—**नियतेति** ॥ कृतिसाध्यत्वमपि निरस्यति—**अतो विधीति** ॥ सुखरूपत्वासंभवादित्यर्थः । विशिष्टहेतुसिद्धिमाह—**अतो वेदान्ता इति** ॥ कार्ये व्युत्पत्त्यसंभवादित्यर्थः ॥ अधिकरणार्थमुपसंहरति—**अतः केवलेति** ॥ विशिष्टाधिकारिशून्यत्वादनाम्भणीयमित्यत्र हेतुरसिद्ध इतिभावः ॥

सोऽयं कार्यरूपापूर्ववादः प्राभाकरसंमतः शंकराचार्येणाप्युपनिषद्भाष्यादिषु निरस्तः । कल्प्यापूर्ववादश्च भट्टसंमतः स्वीकृतः । ततश्च सिद्धपराणामपि वाक्यानां प्रामाण्यं व्यवस्थापितम् । अतएव माधवाचार्येण पराशरस्मृतिव्याख्यायां (१-१८) "व्यवहारे भट्टनय इत्यभ्युपगमात्" इति धर्मपदव्याख्यायामुक्तम् । तत्त्वटीकायामनुभूतेरवेद्यत्वनिराकरणप्रकरणे "व्यवहारे भट्टनयः" इति पराभिसन्धिरनूदितः । अनेनाभ्युपगमेन प्राभारनयो व्यवच्छिद्यते ॥

## १२२. पूर्वपक्षयुक्तिस्वारस्यम्.

शांकरभाष्ये—

**अथातोधर्मजिज्ञासासूत्रमाद्यमिदं कृतम् ।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥**

इति कुमारिलवार्तिकं हृदि निधाय ब्रह्मात्मैक्यरूपविषयप्रयोजनसिद्ध्यर्थमध्यासो निरूपितः । एवंच विषयप्रयोजनाभावे शास्त्रमनारम्भणीयमिति पूर्वपक्षयुक्तिरत्राभिमता । ततश्च प्रयोजननिरूपणपरं प्रथमं सूत्रमिति मतम् । श्रीभाष्ये तु संबन्धनिरूपणपरं तदिति मतम् । तथाहि—कर्मकाण्डमात्रप्रामाण्यवादिनां "वेदोषराः वेदान्ताः" इति वादिनां जरन्मीमांसकानां कार्यवाक्यार्थसिद्धान्तानुरोधेन वेदान्तानामेव प्रामाण्यासिद्ध्या तद्व्याख्यानस्यरम्भणानर्हतां हृदि निधायाप्रामाण्यहेतुभूतः सिद्धव्युत्पत्त्वभावः पूर्वपक्षयुक्तितयाऽऽशङ्क्य निराकृतः ॥

अत्र प्रयोजनरूपविषयनिरूपणं सर्वव्यापाराणां साधारणम् । संबन्धनिरूपणं प्रबन्धासाधारणमित्यभिप्रेत्य तदेवादृतम् । प्रयोजननिरूपणं तु तुरीयसूत्रे क्रियते । अत्रापीत्थं कुमारिलवचनम्—

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्य चित् ।**
**यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते ॥**
**सिद्धार्थं सिद्धसंबन्धं श्रोतुं श्रोता प्रवर्तते ।**
**ग्रन्थादौ तेन वक्तव्यस्संबन्धस्सप्रयोजनः ॥**

इति । अतएव वाक्यारम्भे वररुचिः "सिद्धे शब्दार्थसंबन्ध" इत्याह । सोऽयं सिद्धव्युत्पत्त्यभाववादः सौगतसंमतार्थासंस्पर्शवादसोदरः । अर्थासंस्पर्शवादनिरासायैव हि अनुबन्धचतुष्टये संबन्धनिरूपणमन्तर्भाव्यते । स खलु वादः प्रकरणपञ्चिकायामुपपाद्य दूषितः ॥

**न शब्दसंस्पर्शयोग्या निर्विकल्पाः स्वलक्षणाः ।**
**सामान्यलक्षणास्तुच्छा अपोहा अपि तादृशाः ॥**

**विकल्पयोनयश्शब्दाः विकल्पाश्शब्दयोनयः ।**
**कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यमी ॥**

इति । ततश्च समन्वयसूत्रं प्रयोजनपरम् । प्रथमसूत्रं संबन्धपरमिति श्रीभाष्यमतम् । शांकरे तु विपर्ययः ॥ इति ॥

## 25. चतुस्सूत्र्यर्थः.

### १२३. जिज्ञासासूत्रार्थः.

तथाचायं प्रथमसूत्रस्य निर्गलितार्थः—**अथातो ब्रह्मजिज्ञासा॥** अत्र शब्दस्वारस्यात् समभिव्याहृतपदस्वारस्यात् अर्थस्वारस्याच्च अथशब्दस्यानन्तर्यमर्थः । स चाध्याहर्तव्यकर्तव्यपदार्थान्वयी । अवध्याकांक्षापूरकं कर्मविचारादिति पदमध्याहर्तव्यम् । अनुक्तिस्तु अतश्शब्दोपस्थितस्यैव वृत्तस्य तदुपस्थापकपदोद्भावनद्वारा उपस्थितिर्भवतीत्यभिप्रायेण । वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवाचकैतच्छब्दस्य कर्मविचारोऽर्थः । स चाप्रामाण्यशङ्कानास्कन्दितकेवलकर्मविशेष्यकाल्पास्थिरफलत्वप्रकारकनिर्णयविशिष्टाप्रमाण्यशङ्कासहब्रह्मविशेष्यकानन्तस्थिरफलत्वप्रकारकप्रतीतिलक्षणः । कर्मविचारात्पूर्वं ब्रह्मविचारानन्तरं वा ब्रह्मविचारे प्रवृत्तिवारणाय विशेषणविशेष्यांशौ । तसिलर्थः जन्यत्वं प्रकृत्यर्थस्य प्रत्ययार्थे निरूपितत्वसंबन्धेनान्वयः । तस्य च ब्रह्मजिज्ञासापदार्थे आश्रयतासंबन्धेनान्वयः । ब्रह्मशब्दार्थः निरतिशयोत्कृष्टविशिष्टः श्रियःपतिः । जिज्ञासापदार्थः वेदान्तवाक्यार्थविचारात्मकः लाघवतर्कः । स च अयुक्तांशप्रतिषेधपूर्वकयुक्तांशाभ्युपगमलक्षणः ज्ञानविशेषः सकलेतरपुरुषार्थतत्साधनपरित्यागपूर्वकप्राप्यत्वोपायत्वावच्छिन्नविषयताशालिनिर्णयफलकः । तस्य च रागप्राप्तत्वप्रियतमत्वद्योतनार्थः सन्प्रयोगः । अध्याहृतकर्तव्यपदार्थः प्रेक्षावत्प्रवृत्त्यर्हत्वम् ॥

तथाच — अप्रामाण्यशङ्कानास्कन्दितकेवलकर्मविशेष्यकाल्पा-स्थिरफलत्वप्रकारकनिर्णयविशिष्टाप्रामाण्यशङ्कासहब्रह्मविशेष्यकानन्तस्थिरफलत्वप्रकारकप्रतीतिनिष्ठजनकतानिरूपितजन्यताविशिष्टनिरतिशयोत्कर्षविशिष्टलक्ष्मीपतित्वावच्छिन्नविषयकविचारात्मकज्ञानविशेषः निरुक्तप्रतीत्यनन्तरकालीनप्रेक्षावत्प्रवृत्त्यर्ह इति फलितार्थः । रागतो ब्रह्मविचारे प्रवृत्तस्यापि सिद्धवस्तुनि व्युत्पत्तिर्नास्तीति युक्त्याभासेन अनारम्भणीयत्वं ज्ञायते । तं प्रति सिद्धवस्तुनि व्युत्पत्तिसंभवात् आरम्भणार्हत्वज्ञापनमज्ञातज्ञापनरूपमित्युद्देश्योपादेयविभागवत्त्वं सूत्रस्येत्यवधेयम् ॥

पुनरिदमत्रावधेयम् -- उपदेशज्ञापनन्यायभेदेन सूत्रलक्षणं शास्त्रं तावत्त्रिविधम् । "अथ योगानुशासनम्, अथ शब्दानुशासनम्," इत्यारभ्यमाणमाद्यम् । "अथातो दर्शपूर्णमासौ व्याख्यास्यामः, अथातस्सामयाचारिकान् धर्मान् व्याख्यास्यामः" इत्यादिकं द्वितीयम् । "अथातो धर्मजिज्ञासा, अथातो ब्रह्मजिज्ञासा" इत्यादिजिज्ञासापदघटितप्रारम्भकं तृतीयम् ॥ तथाच न्यायनिबन्धनात्मकत्वादस्य शास्त्रस्य न्याय इत्थं प्रयोक्तव्यः—ब्रह्मजिज्ञासापदं पक्षपरं, अथ कर्तव्येति साध्यपरं, अत इति हेतुपरम् । तथाच ब्रह्मविचारः कर्मविचारानन्तरकर्तव्यत्वार्हः, कर्मविचारहेतुकत्वात्, यो यद्धेतुकः स तदनन्तरकर्तव्यत्वार्हः साङ्गाध्ययनहेतुकः कर्मविचारः सामान्येनोदाहरणमिति ॥

कर्मविचारस्य हेतुत्वं च— ब्रह्मविचारस्य कर्मविचारसिद्धन्यायोपजीवकत्वात्, यत्संशयव्यतिरेकनिश्चयौ यत्प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति न्यायेन कर्मणामल्पास्थिरफलत्वव्यतिरेकरूपानन्तस्थिरफलत्वसंशयनिश्चययोः ब्रह्मविचारं प्रति प्रतिबन्धकतयाऽल्पास्थिरफलत्वनिश्चयस्य तत्र हेतुत्वात्, विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारक-

निर्णयस्य कारणतया यज्ञेनविविदिषन्तीत्यखण्डवाक्यर्थबोधं प्रति यज्ञ-पदार्थज्ञानस्य कारणत्वात्, दृष्टान्तदार्ष्टान्तिकभावज्ञानस्य दृष्टान्तज्ञान-सापेक्षत्वात्, अङ्गिज्ञानस्याङ्गज्ञानपूर्वकत्वादित्यादिविधया बोद्धव्यम् ॥

अत्र ब्रह्मशब्दस्यैव निखिलमुमुक्षूपास्यतावच्छेदकनिरतिशयबृह-त्वावच्छिन्नवाचकत्वात् तदवच्छिन्नज्ञानस्यैव साक्षान्मोक्षोपायत्वात् सर्वज्यायस्त्वस्यैव सर्वशेषितानियामकत्वात् परशेषतैकरसत्वज्ञानस्यैव सर्वो-ज्जीवकत्वात् तैत्तिरीयाद्युपनिषत्सु साक्षात् ब्रह्मपदस्यैव श्रवणात् एवंभूत-निरतिशयोत्कर्षनियामकस्य सर्वजगच्छरीरत्वसत्यज्ञानाद्यात्मकत्वनिरव-धिककल्याणगुणवत्त्वादेः नारायणपदार्थतावच्छेदकस्य जगत्कारणत्व-लक्षणप्रतिपादकश्रुत्यनुरोधेन द्वितीयसूत्रे प्रतिपादयिष्यमाणत्वाच्च सदा-त्माकाशनारायणादिशब्दानादर इति ॥

अपिच काण्डत्रयात्मकेऽस्मिन् मीमांसाशास्त्रे सङ्कर्षकाण्डस्योप-संहारे "अन्ते हरौ तद्दर्शनात्" इति देवताकाष्ठां प्रदर्श्य "स विष्णु-राह हि" इति सर्वदेवताराधनानां तत्पर्यवसानाय तस्य सर्वान्तरात्मत्वेन व्याप्तिं प्रतिपाद्य "तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते" इति तस्यैव वेदान्तवेद्यपरब्रह्मत्वोपक्षेपेणोपसंहारात् ब्रह्मकाण्डारम्भे ब्रह्मपदमेवोचितं प्रयोक्तुमिति संप्रदायः। अधिकं शतदूषण्यां शास्त्रैक्यवादे द्रष्टव्यम् ॥ अत्रेदं तत्त्वरत्नाकरपद्यं तत्त्वटीकायामुदाहृतमनुसन्धेयम् ॥ ५४ ॥—

**कर्मदेवताब्रह्मगोचरा सा त्रिधोद्भवा सूत्रकारतः।**
**जैमिनेर्मुनेः काशकृत्स्नतः बादरायणादित्यतः क्रमात्** ॥ इति ॥

१२४. जन्मादिसूत्रार्थः.

अथ जन्मादिसूत्राणामपि विशिष्टैकार्थ्यसिद्धये वाक्यार्थः प्रद-र्श्यते। प्रारम्भे "पूर्ववृत्तात्कर्मज्ञानादनन्तरं ततएव हेतोः ब्रह्म ज्ञात-

व्यमित्युक्तं भवति" इति भाषितत्वात् निरतिशयबृहत्त्वं जिज्ञास्यताव-च्छेदकं मुमुक्षूपास्यतावच्छेदकत्वात् इति "परीक्ष्यलोकान्" इति श्रुत्यर्थस्सूचितः। तत्रायमाक्षेपः—निरतिशयबृहत्त्वं न जिज्ञास्यतावच्छे-दकं दुर्निरूपत्वात्। तच्च बहूनामसंभवित्वेसति बहुषु प्रतीयमानत्वात् अनेकवाक्यप्रतिपन्नं चैत्रपितृत्वादिकं सामान्येनोदाहरणमित्यत आह—

**जन्माद्यस्य यत इति ॥**

**अस्य यतो जन्मादि** तद्ब्रह्म जिज्ञास्यमित्यन्वयः। "यतो वा इमानि" इत्यादिशास्त्रेण यज्जगत्कारणं तद्ब्रह्मेत्यवगमात् या गन्धवती सा पृथिवीत्यादौ गन्धस्य पृथिवीत्वनियामकत्वमिव कारणत्वस्य निर-तिशयबृहत्त्वनियामकत्वेन बहुषु प्रतीयमानत्वस्यान्यथासिद्ध्या दुर्निरूप-त्वासिद्धिः। अन्यथासिद्धिश्च "आपो वा इदं सर्वम्" इत्यादीनां कर्म-विधिशेषत्वम्। सृष्टिप्रलयश्रुतयस्तु अनन्यपराः अशेषभूताश्चेति ॥ नच कारणत्वस्यापि बहुषु प्रतीयमानत्वात्तद्दोषतादवस्थ्यमितिचेन्न—कारण-त्वमेकमात्रवृत्तीति श्रुत्यभिप्राय इति सूत्रकाराशयात् ॥

अथ—अथातो ब्रह्मजिज्ञासा। तत्सत्यादिलक्षणम्। इति कुतो नासूत्रयदितिचेत् विभूतेरुपास्यतावच्छेदकत्वसूचनार्थं कारणत्वलक्षानु-सरणम्। कारणत्वस्य सत्यत्वाद्याक्षेपकत्वमस्ति। सत्यत्वादेः कारणत्वा-क्षेपकत्वं नास्ति। कारणत्वस्यैवोत्तरत्र विचारयिष्यमाणत्वात्तत्प्रस्तावोऽ-प्यावश्यक इत्यवधेयम् ॥

तर्हि—तज्जगत्कारणम्। इति सूत्र्यतामित्यपि शङ्का नोचिता। प्रथमं तावत्कारणत्वसाधकहेतूनां दुर्निश्चयत्वात् वक्ष्यमाणैः न्यायैः यत्र कारणता पर्यवस्यति तद्ब्रह्म भविष्यतीति तात्पर्येण श्रुत्यनुसारेण च यत इत्येव सूत्रणस्योचितत्वात्। अतएव नोत्तराधिकरणानां वैयर्थ्यशङ्काऽपि ॥

नन्वथातो जगत्कारणजिज्ञासा । इति सूत्र्यताम् । अत्रोच्यते — तत्तद्वाद्यभिमतस्य प्रधानपरमाण्वादेः कारणत्वस्य प्रतिक्षेप्यत्वात् ब्रह्मण एव सर्वशेषित्व सर्वरक्षकत्व सर्वकर्मसमाराध्यत्व सर्वफलप्रदत्वानां चतुर्भिर्न्यायैः स्फुटीकरणाय ब्रह्मजिज्ञासेत्येव सूत्रयितव्यमिति ॥

१२५. शास्त्रयोनिसूत्रार्थः

अथ जगज्जन्मादिकारणत्वावच्छिन्ननिरतिशयबृहत्वं जिज्ञास्यतावच्छेदकं न भवितुमर्हति शास्त्रप्रतिपाद्यतावच्छेदकत्वाभावात् । स चाभावः शास्त्रतात्पर्यविषयत्वाभावात् । स च "अप्राप्ते हि शास्त्रमर्थवत्" इति न्यायेन शास्त्रप्रामाण्यविरहात् इत्याक्षेपे प्राह—**शास्त्रयोनित्वादिति** ॥

शास्त्रमेव वेदाख्यं योनिः कारणं प्रमाणं यस्य तच्छास्त्रयोनि । तस्य भावः । तस्मान्निरुक्तब्रह्मजिज्ञासा कर्तव्येत्यन्वयः । अत्र त्रिसूत्र्यामेकवाक्यत्वमभिमतम् । अतएव "अथातो धर्मजिज्ञासा । चोदनालक्षणोर्थो धर्मः" इतिवत् "अथातो ब्रह्मजिज्ञासा । जगत्कारणं ब्रह्म" इत्यनिर्देशः । ब्रह्मणि शास्त्रप्रामाण्यं च शास्त्रेतरप्रमाणागोचरत्वेन सिद्ध्यतीति सूत्रार्थः । तेन न साध्याविशेषः । तेन प्रामाण्यविरहरूपहेतुरसिद्धः । ततश्च तात्पर्याविषयत्वासिद्धिः । ततश्च प्रतिपाद्यत्वाभावासिद्धिः । ततश्च जिज्ञास्यत्वसिद्धिरिति

अत्र जिज्ञासापदेन श्रुत्यधीनसाधकबाधकयुक्तिचिन्तनरूपस्य निर्णयजनकव्यापारविशेषस्य विचारस्य विवक्षितत्वात् न तच्छङ्कावकाशः । शङ्कातु—शास्त्रैकगोचरस्याप्यनेकस्याजिज्ञास्यत्वं दृश्यते । शास्त्रेतरगोचरस्याप्यनेकस्य जिज्ञास्यत्वं पश्यामः । अतश्शास्त्रयोनित्वमन्यथासिद्धमिति ॥

## १२६ समन्वयसूत्रार्थः.

ननु इष्टप्राप्त्यनिष्टनिवृत्त्यन्यतरप्रयोजनकप्रवृत्तिनिवृत्त्यन्यतरप्रयोजकानवगतार्थविषयकज्ञानजनकवाक्यत्वं शास्त्रत्वम्—

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥**

इति कुमारिलवचनंच । (४०६ पु.) ततः यत्र शास्त्रप्रामाण्यं तत्र सप्रयोजनत्वं यत्र सप्रयोजनत्वं तत्र प्रवृत्तिनिवृत्त्यन्यतरान्वयः । तथाच वेदान्तानां सिद्धवस्तुनि व्युत्पत्तावपि प्रवृत्तिनिवृत्त्यन्वयरूपव्यापकनिवृत्त्या प्रयोजननिवृत्तिः । ततश्च ब्रह्मणि शास्त्रप्रामाण्यविरहः । तेन च तात्पर्यविरहः । तेनच जिज्ञास्यत्वविरह इत्याक्षेपे प्राह—**तत्तुसमन्वयादिति ॥**

तु शब्दः प्रसक्ताशङ्कानिवृत्त्यर्थः । **तत्** शास्त्रप्रमाणकत्वं संभवतीति शेषः । **समन्वयात्** बोध्यबोधकभावरूपस्संबन्धोऽन्वयपदार्थः । संशब्दार्थः अनुकूलत्वम् । तच्च प्रकारतया बोधान्वयि । तथाच ब्रह्म शास्त्र प्रमाणकं शास्त्रजन्यबोधीयानुकूलत्वावच्छिन्नविषयताशालित्वात् ज्योतिष्टोमादिवत् इति ॥

अयमर्थः—अनुकूलत्वमेवानन्दपुरुषार्थसुखादिपदप्रवृत्तिनिमित्तम् । तच्च स्वत इष्टत्वं इतरेच्छानधीनेच्छाविषयत्वलक्षणम् । तदेतत् विषयविषयिसाधारणं सिद्धसाध्यसाधारणम् , पुत्रोत्सवनिधिपयःपानगतिश्रवणादौ सुखव्यवहारात् । परमपुरुषेऽप्येतादृशमानन्दत्वं स्वरूपतस्स्वभावतश्च स्वात्मनीव श्रुतिशतसमधिगतम् । एतादृशानन्दप्रतिपादकःशब्दः प्रमाणमितिच सर्वसंमतम् । ततश्च सप्रयोजनत्वप्रवृत्तिनिवृत्त्यन्वययोः न व्याप्यव्यापकभाव इति भावः । अपिच सामान्यतः प्रयोजनं प्रति प्रवृत्तिनिवृत्त्यन्वयोऽप्रयोजकः, प्रवृत्त्यन्वयिनः स्वशिरश्छेदादेः निवृत्त्यन्व-

यिनः पयःपानादेः तदुभयरहितस्य शत्रुवृद्ध्यादेश्च पुरुषार्थत्वाननुभवात् ॥ इति चतुस्सूत्र्यर्थः ॥ तदुच्यते—

व्युत्पत्त्यभावात्प्रतिपत्तिदौः-
स्थ्यादन्येन सिद्धेरफलत्वतश्च ।
अमात्वमाशङ्क्य निराचकार
न्यायैश्चतुर्भिः प्रतिपाद्यमेतत् ॥ इति ॥

समन्वयोऽविरोधश्च साधनं साध्यमेव च ।
इति शास्त्रस्य सारार्थः चतुर्भिस्सूत्र्यते क्रमात् ॥
शेषित्वं रक्षकत्वं च कर्माराध्यत्वमेव च ।
पुरुषार्थत्वमित्येते रहस्यार्थाः क्रमादिह ॥ इति ॥

## 26. जन्माद्यधिकरणम्.

१२७. अधिकरणम्.

अत्र प्रदर्श्यमानस्संशयस्सर्वोऽपि बुभुत्सोरेव । न पूर्वपक्षिणः नापि सिद्धान्तिनः नापि मध्यस्थस्य यस्यकस्यचित् । सोऽपि वाक्यस्य तत्तदसाधारणतत्तद्विरुद्धपदघटितत्वात्तात्पर्यांश एव मानसः । स एव पूर्वपक्षे सिद्धान्ते च प्रदर्शनीयः । अत एवोच्यते तन्त्रवार्तिके (२२२) "दृढविपर्ययज्ञानानन्तरं सहसैव सम्यक् ज्ञानोत्पादातिभारात् एकदेशावतरणार्थं संशयोत्थापनामात्रमेव तावद्युक्तम्" इति ॥

अस्मिंश्च शास्त्रे स च संशयः क्वचित्पदार्थविषयकः क्वचिद्वाक्यार्थविषयकः क्वचित्पदार्थनिर्णयविषयकः । आनन्दमयाधिकरणान्तरधिकरणवैश्वानराद्यधिकरणानि क्रमेणोदाहरणानि । तथा च सौत्रपदं क्वचित्पदार्थलाक्षणिकं क्वचित्पदघटितवाक्यार्थलाक्षणिकं क्वचित्पदार्थनिर्णयलाक्षणिकम् । वाक्यस्य विषयत्वं तु संशयविषयकोटिद्वयोपस्थापकपदघटितत्वे सति न्यायाधीनतात्पर्यनिर्णयप्रयोज्यान्यतरकोटिविषयकप्रमाज-

नकवाक्यत्वम् । न्यायत्वं च विषयसंशयपूर्वपक्षोत्तरपक्षप्रयोजनरूपाङ्ग-पञ्चकप्रतिपादकवाक्यसमुदायत्वमधिकरणत्वलक्षणम् ॥

## १२८. लक्षणम्.

**जन्माद्यस्य यतः ॥** अस्य सूत्रस्य सङ्गतिरर्थश्च प्रागेव प्रतिपादितौ । इह श्रीभाष्यं विभूष्यते । अस्य लक्षणसूत्रत्वाल्लक्षणविषये संक्षेपशारीरकमुदाह्रियते---

**लक्ष्यार्थनिष्ठमुपलब्धमतोऽन्यतोऽर्थान्**
**निश्शेषतो यदतिरिच्य तदर्थवस्तु ।**
**लक्ष्यं निवेदयति लक्षणमेतदाहुः**
**सामान्यलणमिदं त्रिषु लक्षणेषु** ॥ १-५१५ ॥

यत् धर्मरूपं वस्तु लक्ष्यार्थसंबद्धमुपलब्धं सत् तदर्थवस्तु लक्ष्यात्मकं वस्तु लक्ष्यं अतोऽन्यतोऽर्थान् लक्षणीयात्सकाशात् व्यतिरिक्तान्सर्वानर्थानतिरिच्य व्यावर्त्य निवेदयति अवगमयति तल्लक्षणमित्यर्थः । व्यावर्तकत्वं लक्षणसामान्यलक्षणमिति भाव ॥ अथ लक्षणविभागः—

**लक्ष्यस्य लक्षणमिह त्रिविधं प्रसिद्धं**
**लोके स्वलक्षणममुष्य विशेषणं वा ।**
**यद्वोपलक्षणमिमानि च लक्षणेन**
**व्यावर्णयामि पृथगेव तु तत्प्रतीहि** ॥ ५१४ ॥

अमुष्य लक्ष्यस्य स्वरूपलक्षणं विशेषणलक्षणं उपलक्षणलक्षणं चेति लक्षणं त्रिविधमित्यर्थः । तत्र स्वरूपलक्षणस्य लक्षणमिदम्---

**लक्ष्यस्वरूपमपि सत् यदमुष्य साक्षात्**
**अर्थान्तराद्भवति भेदकमेतदाहुः ।**
**अस्य स्वलक्षणतयैव तु लक्षणं खं**
**छिद्रं जलं द्रवमितीदृशमत्र लोके** ॥ १-५१६ ॥

यद्वस्तु लक्ष्यस्वरूपमेव सत् लक्ष्यस्यार्थान्तरात् भेदकं चेत् एतत् स्वरू-

पलक्षणमित्यर्थः । आकाशं छिद्रं जलं द्रवमित्यादिकमुदाहरणम् । विशेषणलक्षणस्य लक्षणमिदम्—

**स्वानुरक्तमतिजन्मकारणं**
**यत्पुनर्भवति लक्ष्यवस्तुनि ।**
**तद्विशेषणतयाऽस्य लक्षणं**
**केसरादिकमिवाश्ववस्तुनः ॥ १-५१७ ॥**

यल्लक्षणं स्वानुरक्ततया लक्ष्यस्वरूपावियुक्ततया लक्ष्यस्य व्यावर्तकं भवति तद्विशेषणमिति ॥ केसरादीत्यादिपदेन शोणत्वादिपरिग्रहः । उपलक्षणस्य लक्षणमाह—

**स्वानुरक्तमतिजन्महेतुतां**
**लक्ष्यवस्तुनि निरस्य लक्षणम् ।**
**अस्वरूपमपि तस्य यद्भवेत्**
**काकवत्तदुपलक्षणं विदुः ॥**

स्वानुरक्तमतिजन्महेतुतां निरस्य तद्व्यतिरेकेणेत्यर्थः । काकनिलयं यदृश्यते तद्देवदत्तगृहमित्यत्र उपलक्ष्यस्य गृहस्यास्वरूपभूतः विशेषणतयाचाननुप्रविष्टः काकः देवदत्तगृहं लक्षयतीत्यवधेयम् ॥

एतत्सर्वमवलोक्य संप्रदायं च समाश्रित्य जगत्कारणत्वस्य विशेषणत्वमुपलक्षणत्वं वेति विकल्प्य पूर्वपक्षं कृत्वा उभयरूपत्वमपि विवक्षाभेदेन संभवतीति सिद्धान्त उच्यते ॥

**तद्गुणेति** ॥ "सर्वादीनि सर्वनामानि" इत्यादिवत् विधेयान्वयित्वं तद्गुणसंविज्ञानत्वम् । विशेष्यपरः तच्छब्दः । विशेषणपरः गुणशब्दः । तद्गुणौ संविज्ञायेते यस्मि समासे इति विग्रहः ॥ कारणत्वप्राप्यत्वप्रापकत्वौपयिकानि विशेषणान्युपादीयन्ते — **यस्मादिति** ॥ **सत्यसङ्कल्पादिति** ॥ इदमुभयलिङ्गलोपपादकम् । **परमकारुणिकादिति** ॥ प्रलयकालेऽसत्कल्पं चेतनजातं निरीक्ष्य दयया

सृष्टिः । अतः जगत्सर्गे प्रधानं निमित्तं कारुण्यम् । समुदितकारणत्वमेव निरतिशयबृहत्त्वनियामकमिति भावः ॥

१२९. विशेषणदूषणम्.

विशेषणपक्षं दूषयति—**विशेषणत्वं हीति** ॥ जन्मकारणत्वं स्थितिकारणत्वादिधर्मावच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकं तत्समानाधिकरणत्वेन प्रमाणान्तराप्रतिपन्नत्वे सति व्यावर्तकत्वात् खण्डत्वमुण्डत्वादिवदिति पूर्वपक्षाशयः । सिद्धान्ताशयस्तु जन्मकारणत्वं स्थितिकारणत्वादिसमानाधिकरणं तद्विरुद्धतया मानान्तराप्रतिपन्नत्वे सत्येकवचनान्तपदोपस्थाप्यार्थवृत्तित्वेन प्रतीयमानत्वात् देवदत्तत्वयुवत्वादिवदिति ॥ **अत एवेति** ॥ शब्दैकसमधिगम्यविशेषणनानात्वस्य परस्परसमानाधिकरणधर्मद्वयावृत्तित्वव्याप्यत्वादित्यर्थः । ज्ञाप्यान्तर्भूतः ज्ञाप्यप्रतीत्युपायः धर्मः विशेषणम् । ज्ञाप्यानन्तर्भूतः तादृशो धर्म उपलक्षणमिति विवेकः ॥

१३०. उपलक्षणदूषणम्.

उपलक्षणपक्षं दूषयति—**नाप्युपलक्षणत्वेनेति** ॥ **आकारान्तरं** पूर्वप्रतिपन्नाकारः केदारत्वस्थानीयः । **अन्योन्याश्रयणादिति** ॥ सत्यत्वादिलक्षणस्य विशेषणत्वे विशेष्यभेदापत्त्या उपलक्षणत्वस्याश्रयणीयत्वे तृतीयाकारज्ञप्त्यर्थं यतोवेत्यादिवाक्यसापेक्षत्वादन्योन्याश्रयः ॥

१३१. सिद्धान्तः.

**एवंप्राप्तेऽभिधीयत इति** ॥ सूत्रकाराभिप्रेते पूर्वपक्षे प्राप्ते सूत्रकाराभिप्रेतस्तत्परिहार उच्यत इत्यभिप्रायः ॥ **उपलक्षणंभूतैरिति** ॥ धीस्थत्वक्रमेण उपलक्षणपक्षे समाधानम् । तृतीयाकारमाशङ्कापूर्वकं विश-

दयति—**नचोपलक्षणेति** ॥ **तदर्थत्वादिति** पञ्चम्यन्तस्य **नचवाच्य-मित्यने**नान्वयः। एतेनोपलक्ष्याकार उक्तः। **तदुपलक्षणेत्यने**नोपलक्षणा-कार उक्तः। **यतो येनेत्यनेन** सर्वज्ञत्वसत्यसङ्कल्पत्वादिस्तृतीयाकार उक्तः। **आक्षिप्तेत्यनेन** प्रागुक्तान्योन्याश्रयस्यानवसरस्सूचितः। उपल-क्षणस्य उपलक्ष्यस्य च संबन्धः हेतुहेतुमद्भावलक्षणश्च प्रदर्शितः। **इतिचेति** ॥ अतश्चेत्यर्थः। केदारत्वं सारससंबन्धः देवदत्तीयत्वं चेति त्रय आकाराः दृष्टान्ते अवगन्तव्याः ॥

अयमत्र निष्कर्षः—जगज्जन्मादौ सारसादाविव स्वान्वयिताव-च्छेदकपूर्वप्रतिपन्नकिञ्चिद्धर्मावच्छिन्नविशेष्यकस्वनिरूपितोपलक्ष्यताव – च्छेदकधर्मप्रकारकप्रमितिजनकत्वस्योपलक्षणत्वव्यापकस्य तादृशकिञ्चि-द्धर्माप्रसिद्धया व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति पूर्वपक्षाशयः। निरु-क्तसर्वज्ञत्वादिधर्मप्रसिद्धया न व्यापकनिवृत्तिरिति सिद्धान्ताशयः ॥

अथ विशेषणतया लक्षणत्वमप्युपपादयति—**जगज्जन्मादीनां विशेषणतयेति** ॥ अत्र पूर्वपक्षसिद्धान्ताशयौ प्रागेव निरूपितौ। **अत्र तु कालभेदेनेति** ॥ एतेन विशेषणानां विरोधशङ्कापरिहारः। प्रागुक्तान्योन्याश्रयदोषं प्रत्याह—**यतो वा इमानीति** ॥ **कारणवा-क्येनेति** ॥ कारणत्वमेव लक्षणत्वेनोक्तमिति कारणवाक्यताव्यपदेशः। **व्यावृत्तं स्वरूपमिति** ॥ व्यावृत्तिः इतरभेदविधेयकानुमितिः। सा द्वि-विधा–लक्ष्येतरत्वावच्छिन्नप्रतियोगिताकभेदविधेयका लक्ष्येतरत्वसमाना-धिकरणतत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदकूटविधेयका च। जगत्का-रणत्वं प्रथमव्यावृत्तिजनकं सत्यत्वादिकं द्वितीयव्यावृत्तिजनकमित्यवधे-यम्। सत्यत्वादीनां स्वरूपनिरूपकधर्मत्वेन स्वरूपलक्षणत्वेन व्यवहारः। जगत्कारणत्वं विशिष्टनिष्ठम्। सत्यत्वादिकं स्वरूपनिष्ठमिति विशेषः।

जगत्कारणत्वं केषुचिदुपासनेषु अनुसन्धेयं केषुचिन्नेति विशेषसद्भावात् तत्र विशेषणत्वोपलक्षणत्वपक्षयोः ज्ञाप्यान्तर्गतत्वानन्तर्गतत्वरूपविरोधसत्त्वेऽपि पक्षद्वयमप्युपपादितम् । अधिकं तैत्तिरीयभृगुवल्ल्युपनिषद्भाष्येऽनुसन्धेयम् ॥

अस्य सूत्रद्वयस्य परपक्षासङ्गतिमाह—**येतु निर्विशेषेति** ॥ निरतिशयोत्कर्षलक्षणबृहत्त्वकारणत्वेक्षणकर्तृत्वादिरूपानन्तविशेषणवैशिष्ट्य—प्रतिपादनात् न निर्विशेषवस्तुसिद्धिरिति भावः । **तर्कश्चेति** ॥ अनुमानमपीत्यर्थः । **प्रकाशैकरसता** प्रकाशैकस्वभावता । **प्रकाशत्वं** प्रकाशपदवाच्यत्वम् । **व्यवहारयोग्यतापादनस्वभावः** व्यवहारानुगुण्यापादनरूपः स्वभावः । तदनभ्युपगमे केवला सौगती गतिरिति भावः ॥

## 27. शास्त्रयोनित्वाधिकरणम्.

### १३२. अधिकरणावतरणम्.

**शास्त्रयोनित्वात्** ॥ अथ शास्त्रयोनित्वसूत्रसङ्गतिः सूत्रार्थश्च प्रागेव प्रतिपादितौ । भाष्यार्थस्तु—**अत्यन्तातीन्द्रियत्वेनेति** ॥ अत्रेन्द्रियप्रत्यक्षशब्दयोः करणतत्फलविवक्षया भिन्नार्थता । **अप्राप्ते त्विति** ॥ शाबरे भाष्ये अनुमानादिप्रमाणलक्षणेषु "असन्निकृष्टेऽर्थे बुद्धिः" इत्यसंनिकृष्टार्थविषयकत्वं विशेषणमुक्तम् । तस्य व्यावृत्तिः कुमारिलेनैवमुच्यते—

**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ।**
**ताद्रूप्येण परिच्छित्तिः तद्विपर्ययतोऽपि वा ॥**
**ताद्रूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम् ।**
**वैपरीत्यपरिच्छिन्ने नावकाशः परस्य तु** ॥ इति ॥ ३६३ ॥

अथानुमाननिरासकर्ता ईश्वरानभ्युपगन्ता मीमांसकश्चोदयति—**किं तर्हि प्रमाणमिति** ॥ न किञ्चिदित्यर्थः । विशदयति—**नतावदिति** ॥

**प्रकर्षपर्यन्तजन्मनः** प्रकर्षस्य पर्यन्तात् काष्ठातः जन्म यस्येत्यर्थः। **विशेषतोदृष्टं** वह्निमान् धूमादित्यादौ धूमादिकम्। **सामान्यतोदृष्टं** आदित्यो गतिमान् देशान्तरप्राप्तिमत्त्वाद्देवदत्तवदित्यादौ देशान्तरप्राप्तिः। **नियतं** व्याप्तम्॥

१३३. यामुनेयसरणिः.

अत्रत्यस्सर्वो वाक्यार्थस्सिद्धित्रये ईश्वरसिद्धौ आगमप्रामाण्ये च दृश्यते। तार्किकैस्तु कार्यलिङ्गकमदृष्टलिङ्गकमुपदेशलिङ्गकं चेतीश्वरेऽनुमात्रयं प्राधान्येनोक्तम्। अत्र लिङ्गपदं पक्षपरम्। प्राकट्यलिङ्गकानुमानमित्यत्रापि लिङ्गपदं पक्षपरम्। क्षित्यङ्कुरादिकं सकर्तृकं कार्यत्वात् घटादिवदिति कार्यलिङ्गकमनुमानम्। अदृष्टं तदभिज्ञचेतनाधिष्ठितं अचेतनत्वे सति कार्यकरत्वात् वास्यादिवदित्यदृष्टलिङ्गकम्। ज्योतिष्टोमाद्युपदेशः तदर्थसाक्षात्कर्तृपूर्वकः उपदेशत्वात् वैद्यकाद्युपदेशवदिति उपदेशलिङ्गकम्। अचेतनारब्धत्वलिङ्गकमनुमानं तु—

**नन्वेकचेतनाधीनं विवादाध्यासितं जगत्।**
**अचेतनेनारब्धत्वादरोगस्वशरीरवत्॥**

इतीश्वरसिद्धौ श्रीयामुनमुनिनोदाहृतम्। प्रकृते उपदेशलिङ्गकं नानूदितम्। वैशेषिकैः शब्दप्रामाण्यानभ्युपगमात् तन्मतरीत्या कार्यलिङ्गकमदृष्टलिङ्गकं चेति द्विविधमेवानुमानम्। तयोरपि क्रमे हेतुरयमागमप्रामाण्ये तेनैवमुनिनैवं सूचितः—नच वाच्यं कर्मणामेव स्वानुष्ठातृपुरुषसमीहितानि संपादयतां अन्तरा नान्तरीयकं तनुभुवनाधिकार्यनिर्माणमिति, यतः चेतनानधिष्ठितानि तानि न कार्याणि जनयितुमुत्सहन्ते अचेतनत्वात् वासीवत्। न हि चेतनेन तक्ष्णाऽनधिष्ठिता वासी स्वयमेव यूपादीन्यापादयितुमलम्—

**नचापूर्वाण्यधिष्ठाय स्वयं निर्मातुमीश्वराः ।**
**न हि कर्मोदयात्पूर्वं साक्षात्कर्तुं क्षमामहे ॥ इति ॥**

एतेन कार्यलिङ्गकानुमानमदृष्टेनान्यथासिद्धमपि अदृष्टलिङ्गकमनन्यथासिद्धमित्यभिप्रायोऽवगम्यते । अनुमानेनेश्वरसाधनप्रकारः ईश्वरसिद्धावागमप्रामाण्ये च विस्तरेणावगन्तुमर्हः ॥

१३४. मध्यस्थशङ्कासमाधी.

अत्रपूर्वपक्षाभिमानी सामान्यतोदृष्टमनुमानं शङ्कते— **ननु च जगत इति ॥ संप्रदानं** भोक्ता **प्रयोजनं** विनियोगः । जगत् उपादानोपकरणसंप्रदानप्रयोजनाभिज्ञकर्तृकं कार्यत्वात् घटादिवत् । जगत् एकचेतनाधीनं अचेतनारब्धत्वात् अरोगस्वशरीरवदिति प्रयोगः । कार्यत्वं च सावयवत्वात्सिद्धमित्यर्थः ॥

अत्र सिद्धान्ताभिमानी प्रतिवक्ति—**किमिदमेकचेतनेति** ॥ बुद्धिस्थोऽत्र क्रमः । एकचेतनाधीनत्वं तदायत्तोत्पत्तित्वं अथ तदायत्तस्थितित्वमुततदायत्तप्रवृत्तित्वमिति विकल्प्य प्रथमद्वितीययोः दृष्टान्तस्य साध्यविकलता । पञ्चवृत्तिप्राणसहितत्वलक्षणस्थितिविवक्षायां बाधः । तृतीये रथादौ व्यभिचारः । एकत्वाविवक्षायां जीवात्मभिस्सिद्धसाध्यतेति चत्वारो दोषाः द्वितीयहेतोरित्यर्थः ॥ **किञ्चोभयेति** ॥ अत्र कार्यत्वहेतोः जीवैस्सिद्धसाध्यता शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चेत्युपाधिद्वयं विशेषविरुद्धत्वं चेति त्रयो दोषा उक्ताः । अनुमानदूषणं निगमयति —**अत्र इति** ॥ निरुक्तदोषत्रयादित्यर्थः ॥

१३५. साक्षात्पूर्वपक्षः.

अथ साक्षात्पूर्वपक्षिणोऽनुमानं समर्थयन्ति दोषत्रयं च परिहरन्ति—**अत्राहुरिति** ॥ अत्र प्रथमं सकलदोषविकलं हेतुमाह—**सावयवत्वादेवेति** ॥ महत्पदेन परमाणोः क्रियावत्त्वमूर्तत्वपदाभ्यां

गगनादेश्च व्यवच्छेदः । सोपाधिकत्वप्रतिक्षेपस्सामान्येन—**सावयवेषु द्रव्येष्विति** ॥ **रूपान्तरमुपाधिः** । उपाधिं विशदीकृत्य प्रतिक्षिपति—**कार्यत्वप्रतिनियतमिति** ॥ ज्ञानशक्तयनुमानेन पक्षेऽपि शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं च विज्ञायेते, ततश्च न साधनाव्यापकत्वमिति भावः । एतेनोपाधिः प्रतिक्षिप्तः ॥

अनुमानान्तरम्—**किञ्च सर्वेति** । इदमेवादृष्टलिङ्गकम् । अयमर्थः—धर्माधर्मौ स्वसाक्षात्कर्तृचेतनाधिष्ठितौ अचेतनत्वे सति कार्यकरत्वात् वास्यादिवदिति । एतेनातीन्द्रियार्थसाक्षात्कारक्षमः पुरुषविशेषस्सिध्यतीति । बीजेनाङ्कुरमुत्पद्यते सुखादिना पुलकाङ्कम्पादिः । तत्र चेतनाधिष्ठानं नास्तीति व्यभिचाराशङ्कायां तेषां पक्षत्वमुपगम्य ईश्वराधिष्ठानस्य सिषाधयिषिततया न व्यभिचार इत्याह—**बीजाङ्कुरादेरिति** । सिद्धसाधनपरिहारः—**न च लाघवेनेति** । लाघवदृष्ट्या अशक्तस्य कार्यकरत्वकल्पनायामेकेन्द्रियवादपरिग्रहप्रसङ्ग इति भावः ॥

अदृष्टलिङ्गकानुमानं निगमयति—**अतः प्रमाणेति** ॥ पक्षधर्मताबललब्धं विशेषं कार्यलिङ्गकानुमाने प्रदर्श्य सिद्धसाधनं वारयति—**समर्थकर्तृपूर्वकेति** ॥ अत्रैव विशेषविरुद्धत्वं निराकरोति—**यत्त्वनैश्वर्येति** ॥ अयमर्थः— लिङ्गबलेन लिङ्गसहचरिता धर्मास्सर्वे लिङ्गिन्युपस्थाप्यन्ते इति शङ्कितुराशयः । नियमेन लिङ्गापेक्षिता एव धर्मा उपस्थाप्यन्त इति समाधातुराशयः । ते च धर्माः प्रकृतकार्यविषयकशक्तयुपादानविज्ञानादयः । न त्वन्यासामर्थ्याज्ञानादय इति । एतेन दोषत्रयमपि परिहृतम् । अभ्यासामर्थ्यादीनामकिञ्चित्करत्वं विकल्प्य विशदयति—**किञ्चक्रियमाणेति** ॥ **कार्यत्वस्यासाधकानामिति** ॥ नियमेनानपेक्षितानामित्यर्थः ॥

शरीरं कार्योपयोगितयाऽपेक्षितमिति शङ्कते—**कुलालादीनामिति** ॥ तदीयव्यापारानुकूलव्यापारत्वरूपं प्रेरकतात्वलक्षणमधिष्ठानत्वं यत्र तत्र शरीरावच्छिन्नत्वमिति व्याप्तिः भूतवेतालगरलाद्यधिष्ठाने व्यभिचारदर्शनात् शरीरमनपेक्षितमिति समाधत्ते—**न सङ्कल्पमात्रेणेति** ॥ सङ्कल्पश्चेच्छात्मकः आत्मविशेषगुणः । तत्रापि शरीरमेवावच्छेदकत्वेन कारणमित्याक्षिप्य मन एव कारणं शरीरमन्यथासिद्धं मनश्चेश्वरेऽभ्युपगम्यते इति समाधत्ते—**कथमशरीरेति** ॥ मुक्तात्मनां मनस्सत्त्वेऽपि संकल्पज्ञानाद्यनुत्पादः भोगसाधनादृष्टविरहनिबन्धनः । ईश्वरस्य तु संकल्पः जगदनुग्रहनिबन्धन इति भावः । इदानींतननैयायिकग्रन्थेषु प्रक्रियैषा नोपलभ्यते । नैयायिकैकदेशिमतमिदं स्यात् यतस्सिद्धित्रयेऽयमर्थः अनूदितोऽस्ति ॥

पक्षधर्मताबललब्धं क्षेत्रज्ञवैलक्षण्यं सिद्धसाधनदोषपरिहाराय पुनरनुकीर्तयति—**अतो विचित्रेति** ॥ एवमीश्वरानुमाननिरासकं मीमांसकं परिभूय तार्किकः वेदान्तिनमाक्षिपति—**अतः प्रमाणान्तरेति** ॥ निमित्तोपादानैक्यस्य गगनादिसृष्टेश्चानुमानाविषयत्वेन शास्त्रस्याधिकविषयत्वाद्ब्रह्मणि प्रामाण्यमाशङ्क्य तद्विषयस्यापि बाधकान्तरेण बाधितत्वात् अप्रामाण्यमेवेत्याह—**किंचात्यन्तेति** ॥ शास्त्रस्यानुमानसापेक्षत्वे तदनुरोधेनैव शास्त्रं नेतव्यमिति भावः ॥

### १३६. सिद्धान्तः.

**एवंप्राप्ते इति** ॥ प्रथमं जगत्कर्तुः क्षेत्रज्ञवैलक्षण्योपपादकं पक्षधर्मताबलं त्रेधा विकल्प्यासिद्धयति । तत्रैते विकल्पाः—किं कार्याणां कर्तृकालैक्यनियमः किं विपुलत्वविचित्रत्वादिकं किंवा शरीरानपेक्षसृष्टिकर्मत्वमिति । प्रथमस्यासिद्धिः—**महीमहार्णवेति** ॥ **एकं कार्यत्वं**

एकसामग्रीपूर्वकत्वम् । अथ द्वितीयस्य—**नच क्षेत्रज्ञानामिति** ॥ **तदतिरिक्तेति** ॥ धर्मिकल्पनातो वरं धर्मकल्पनेति भावः । अथ तृतीयस्य—**नचयुगपदिति** ॥ युगपत्सर्वलये देहानपेक्षकर्तृत्वं जीवस्य न संभवतीति शङ्कितुराशयः । **अतः** पक्षधर्मताबलस्यासिद्धत्वादित्यर्थः । अभिज्ञकर्तृकत्वसाध्यं चतुर्भिर्दोषैर्दूष्यते—**बुद्धिमदेककर्तृकत्व इति** ॥ अत्र एककर्तृकत्वे सर्वज्ञकर्तृकत्वे सकर्तृकत्वे इति विकल्पाः बोध्याः ॥ पक्षविशेषाधीनविशेषविकल्पेन द्वाभ्यां दोषाभ्यां हेतुं दूषयति—**सार्वज्ञ्येति** ॥ **अत्रापीति** ॥ घटपटादौ दृष्टस्य भिन्नकर्तृकत्वस्य प्रतिक्षेप इत्यर्थः । शास्त्रविरोधोपपादनम्—**कुम्भकार इति** ॥ इदमर्थोपादानं, न तु पाठक्रमः । कुम्भरथयोरेककर्तृकत्वे तत्कर्त्रोः पृथगुक्तिः व्यर्थेत्यर्थः । पक्षधर्मताबलेन कार्यस्य हेतुभूतेनैव कर्मसंवन्धविशेषेण विशेषविरोधमाह—**अपिच सर्वेषामिति** ॥

एवं सप्त दोषानभिधाय चतुरः प्रतितर्कानाह—भवन्ति च प्रयोगा इति ॥ कार्यत्वे क्षेत्रज्ञकर्तृकत्वप्रसङ्गः । कर्तृत्वे सापेक्षत्वसशरीरत्वप्रसंगौ । कालत्वे लोकवत्त्वप्रसङ्गश्चेति । तृतीयप्रसङ्गे व्यभिचारमाशङ्क्यपरिहरति—**नच क्षेत्रज्ञानामिति** ॥ अनादित्वं प्रवाहतः । क्षेत्रज्ञवैलक्षण्यं शरीरनिरपेक्षस्रष्टृत्वं विशिष्य दूषयन् अदृष्टलिङ्गकानुमानमपि दूषयति—**अपिच किमीश्वर इति** ॥ कृतिलक्षणव्यापारमात्रेण स्रष्टृत्वमसिद्ध्यति—**स किं सव्यापार इति** ॥ इच्छालक्षणव्यापारमात्रेण स्रष्टृतां निवारयति—**कार्यं जगदिति** ॥ दर्शनानुगुण्येनैते दोषाः कल्पनायाम् । श्रुत्यनुसरणे यथाश्रुति प्रतिपत्तव्यमिति भावं सूचयति—**अतो दर्शनानुगुण्येनेति** ॥ मानान्तरेण बाधितोऽर्थो न शास्त्रेण शक्यप्रतिपादन इत्येतदनूद्य परिहरति—**यत्तु निमित्तेति** ॥ शास्त्रैक-

प्रतिपाद्यत्वे मानान्तराप्रतिपाद्यत्वहेतुरशुद्ध इत्युपसंहरति—**अतः प्रमाणान्तरेति** ॥

## 28. भावनावादः.

### १३७. शास्त्रावस्था.

इदंपुनरिहावधेयम्—वेदाख्यस्य शास्त्रस्य कालक्रमेण तिस्रोऽवस्थास्संपन्ना इत्यवधार्यते । तत्र शास्त्रं नियोगापरपर्यायं फलचिन्तां भयचिन्तां वा विनैव केवलं कर्तव्यमिति श्रद्धया स्वाभाविक्याऽनुवर्तनीयमिति प्राथमिकी आर्यसंप्रदायसिद्धा दशा । यैषा भगवताऽप्युपदिश्यते "कार्यमित्येव यत्कर्म नियतं क्रियते" इति । ततः यत्किञ्चनफलमुद्दिश्यैव शास्त्रं प्रवर्तयति, तस्मात् फलेऽपि दृष्टिं निधाय हितानुशासनवदनुवर्तितव्यमिति द्वितीयाऽवस्था । तृतीया तु शास्त्रं राजशासनवदनुवर्तितव्यं प्रत्यवायभयेनेति ॥

तत्रेदं प्रमाणम्—तन्त्रवार्तिके कुमारिलेन "न हि विधिशतेनापि तथा पुरुषः प्रवर्तते यथा लोभेन" इति (९९९) द्वितीयाऽवस्था-प्रकाशिता । विधिविवेके मण्डनमिश्रेण "भयात्प्रवृत्तिस्तु ध्रुवभाविनी न तथा लोभात्" (३१६) इति प्राभाकरसंमता तृतीया दशाऽनूदिता । प्राथमिकी दशा तु बाह्यैरप्यनूदिता—

**सुखार्थं क्रियते कर्म तथापि स्यान्न वा सुखम् ।**
**कर्मैव तु सुखं यस्य निष्कर्मा स सुखी कथम् ॥**

इति ॥ बोधि (२७७.)

### १३८. प्रयोजनविचारः.

नैयायिकादिभिस्तु अनिष्टनिवृत्तिमपि फलपक्षे निक्षिप्य फलवाद एव समर्थ्यते ॥

अत्रैते श्लोका अवगन्तव्याः—

यावत्खलु प्रमातृणां प्रवर्तननिवर्तने ।
शब्दा न कुर्वते तावत् न निराकाङ्क्षबोधनम् ॥
प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।
एवमेव प्रवृत्तौ तु चैतन्येनास्य किं फलम् ॥
न हि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित् ।
प्रयोजनक्षमं नापि पदमाख्यातवर्जितम् ॥
भयं नाशङ्कते यस्मात् फलं वाऽपि समीहितम् ।
तथाविधस्य राज्ञोऽपि नाज्ञाऽनुष्ठीयते जनैः ॥
वर्तमानापदेशेऽपि फलं यत्रावगम्यते ।
तत्र प्रवर्तते लोकः लिङादिष्वश्रुतेष्वपि ॥
भवत्यारोग्यसंपत्तिः भुञ्जानस्य हरीतकीम् ।
तत्कामो भक्षयेच्चेति को विशेषः प्रवर्तने ॥
विधिवीर्यस्वभावस्तु क्रिमेरपि तथाविधः ।
सप्रत्ययप्रेरकतां विधिर्नोपैति निष्फलः ॥
क्वचित्साक्षात्पदोपात्तं क्वचित्प्रकरणागतम् ।
क्वचिदालोचनागम्यं फलं सर्वत्र गम्यते ॥
तस्मात्फलस्य साध्यत्वात् सर्वत्र तदवर्जनात् ।
क्रियादीनां च तादर्थ्यात् तस्य वाक्यार्थतेष्यते ॥
वेदाद्गुरुनियोगाद्वा शासनाद्वा महीभुजाम् ।
न सचेताः क्रियां काञ्चिदनुतिष्ठति निष्फलाम् ॥
जडो माणवकोऽप्येषः चपेटापातहानये ।
मोदकावाप्तये वाऽपि करोति गुरुशासनम् ॥
तस्मात्पुंसः प्रवृत्तौ प्रभवति न विधिः नापि शब्दो लिङादिः
व्यापारोऽप्येतदीयो न हि पटुरभिधा भावनानामधेया ।

न श्रेयस्साधनत्वं विधिविषयगतं नापि रागादिरेवं
तेनाख्यत्काम्यमानं फलममलमतिः प्रेरकं सूत्रकारः ॥
इति श्लोकवार्तिकन्यायमञ्जर्यादौ ॥

१३९. भावनास्वरूपम्.

अत्र नियमेन ज्ञातव्यं भावनास्वरूपं नियोगस्वरूपं च विशदयामः । कार्यस्वरूपं तु प्रागेव निरूपितं जिज्ञासासूत्रे । तत्रैवं मन्यन्ते भाट्टाः—भाव्यनिष्ठः पुरुषव्यापारः करोत्यर्थः अर्थभावनापदवाच्यः आख्यातार्थः । लिङादिशब्दव्यापारस्तु शब्दभावनाख्यः अर्थभावनानुष्ठाने प्रवर्तकः, स विधिरित्युच्यते ॥

भाव्यनिष्ठः भावकव्यापारो हि भावना । भाव्यं स्वर्गादि फलं साध्यमानत्वात् । साध्यत्वं चास्य भवनक्रियाकर्तृत्वात् । भवनक्रियायां च कर्तृत्वमुत्पत्तिधर्मकस्य वस्तुनो दृष्टम् , न नित्यंभूतस्याकाशादेः । नापि नित्यमभूतस्याकाशकुसुमादेः । तन्निष्ठः तदुत्पादकश्च पुरुषव्यापारो यस्सा भावना । सा ण्यन्तेन भवतिनोच्यते । प्रकृत्यर्थस्य भवतेः कर्ता यः स्वर्गादिः स एव ण्यन्तस्य तस्य कर्मतां प्रतिपद्यते । कर्ता त्वस्य प्रयोजकः भावयितेत्यादौ तृन्प्रत्ययाद्यर्थः । णिज्वाच्यः प्रयोजकव्यापारः । पुरुषो हि भवन्तं स्वर्गादिमर्थं स्वव्यापारेण भावयति संपादयति । सः तत्संपादको व्यापारः भावनेत्युच्यते—

भावार्थाः कर्मशब्दा ये तेभ्यो गम्येत भावना ।
यजेतेत्येवमादिभ्यः स एवार्थो विधीयते ॥
क्रियाविशेष एवायं व्यापारो ज्ञातुरात्मनः ।
स्पन्दात्मकबहिर्भूतक्रियाक्षणविलक्षणः ॥ इति केचित् ॥
पुरुषस्य प्रयत्नो वा भावनेत्यभिधीयते ।
औदासीन्यदशापायं पुमान्येन प्रपद्यते ॥

स यत्नः यागहोमादिक्रियानिर्वृत्तिकारणम् ।
तस्य तद्व्यतिरिक्तत्वं प्रायस्सर्वोऽनुमन्यते ॥
स चायमात्मधर्मोऽपि न विभुत्वादिवन्मतः ॥
साध्यरूपाभिसंबन्धाद्धत्ते विषयतां विधेः ॥ इत्यन्ये ॥

सैषा पुरुषार्थभावनेत्युच्यते । तस्या आकाङ्क्षितमंशत्रयं किं केन कथमिति साध्यं साधनमितिकर्तव्यता च । स्वर्गकामो यजेतेत्यत्र स्वर्गः साध्यत्वेनान्वेति । यागः करणत्वेन । प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेन । इयं भावनाऽऽख्यातत्वेनाभिधीयते । लिङ्त्वेनाभिधीयमाना शब्दव्यापारलक्षणा शब्दभावनाऽप्यंशत्रयवती । तत्रांशत्रयवती आर्थीभावना साध्यभूता । लिङादिज्ञानं करणम् । अर्थवादप्रतिपाद्यप्राशस्त्यज्ञानमितिकर्तव्यता ॥ विशिष्टशाब्दबोधप्रकारस्तु मानमेयवार्तिके विज्ञेयः । यथा—

यजेतेत्यत्र चाख्यातं लिङ्त्वेनाख्याति भावनाम् ।
अभिधाख्यां तथैवार्थीमाख्यातत्वेन बोधयेत् ॥
उभे अंशत्रययुते इति विश्रुतमेव तत् ।
विशिष्टशाब्दप्रयोज्या तादृश्यार्थीति गम्यते ॥
प्रयोज्यत्वं स्वविषयज्ञानजन्याऽनुमा तु या ।
तत्प्रयोज्यत्वमनुमा त्वेतादृश्यत्र गम्यताम् ॥
यागो मदिष्टहेतुस्स्यादित्याकारा तया पुनः ।
पुमान् प्रवर्तत इति प्रयोज्यत्वं निरूपितम् ॥
यागस्य चेष्टहेतुत्वमेव प्राशस्त्यलक्षणम् ।
स शब्दभावनांशस्सन् एवमत्रोपयुज्यते ॥

इति ॥ शब्दभावनायाः प्रवर्तकत्वान्यथाऽनुपपत्त्या यागस्येष्टसाधनत्वमवगम्यते । तादृशावगम एवानुमितिः । सा पुरुषप्रयत्नं प्रति प्रयोजिकेति भावः । तथाच यजेत स्वर्गकाम इत्यादौ निरुक्तांशत्रययुतशब्द-

भावनाप्रयोज्या स्वर्गसाध्यका यागकरणिका प्रयाजादीतिकर्तव्यताका भावनेति भावनामुख्यविशेष्यकः शाब्दबोध इति भावनावादिभाट्टसंप्रदायः ॥

## 29. नियोगवादः.

### १४०. नियोगस्वरूपम्.

अथ नियोग एव विधिपदाभिधेयो वाक्यार्थ इति प्रभाकरमतं निरूप्यते—कः पुनरसौ नियोगः? यस्मिन् ज्ञाते सति नियुक्तोऽहमत्रेति प्रतिपद्यते पुरुषः सोऽसावर्थ एव विधिरित्युच्यते । स च प्रेषणात्मकः । यः प्रेष्यते स करोति यः । करोति, प्रेष्यते हि स इति क्रियाकर्तृसंबन्धादन्य एवायं प्रैषप्रैष्यसंबन्धः । यतः प्रेषितोऽहमिति विदित्वा क्रियायां प्रवर्तते । आचार्यचोदितः करोमीति हि दृश्यते । यजेतेति श्रुते नियुक्तोऽहमिति प्रथममवगच्छति । ततो यजते । तेनायमाद्यस्संबन्धः । पाश्चात्यस्तु क्रियाकर्तृसंबन्धः ॥

स च नियोगः णिजर्थविलक्षणः । प्रयोजकव्यापारो हि णिजर्थः । ज्ञापकव्यापारस्तु लिङर्थः । प्रवृत्ताक्रियाविषयश्च प्रयोजकव्यापारः णिजर्थः । इह तु तद्विपरीतः । तत्र हि कार्यं पश्यतः प्रवर्तनम् । इह तु प्रवर्तितस्य कार्यदर्शनमिति महान् भेदः ॥

### १४१. नियोगावगमः.

एष नियोगः प्रमाणान्तरानवगम्यश्चेत्कथं शब्दैकगोचरे तत्र संबन्धव्युत्पत्तिः । अत्राहुः—गच्छाधीष्वेति शृण्वन् वृद्धश्चेष्टमानो दृश्यते । चेष्टा च स्वात्मनि प्रवर्तकावगमपूर्विका दृष्टा । प्रत्यक्षदृष्टे चाम्रादौ सुखसाधनतयाऽन्वयव्यतिरेकाभ्यामवगते तदनुस्मरणात्प्रवर्तमानः कस्मिंश्चिदात्माकूते समुपजाते सति भौतिकं व्यापारमारभते । स चात्म-

धर्मः । आत्मैव स्वसंवेद्यः । स्वेनैव संवेद्यः । अहंप्रत्ययगम्यो ह्यात्मा । नासौ परस्मै दर्शयितुं शक्यते । न चर्चयितुं शक्यते । एतावता नानुभूयते इति न शक्यते वक्तुम् । परोऽपि ह्येनमहंप्रत्ययेनानुभवत्येव । तथाऽयमपि भौतिकव्यापारहेतुरात्माकूतविशेषः न प्रमाणान्तरवेद्यो भवति न च न वेद्यते । तत्संवेदने सति चेष्टा । यद्वन्तं दृष्ट्वा तस्यापि तादृश-प्रेरणावगमोऽनुमीयते । तदेतदात्मप्रत्यक्षम् ॥

लिङादिशब्दश्रवणे सति प्रेरणावगतिर्भवति । ननु यदि लिङा-दिव्यतिरेकेण नान्यतो नियोगोऽवगम्यते कथमसौ नियोगशब्दात्प्रतीयते । कथं वा नियोगशब्दस्य नाम्नोऽप्यर्थः प्रमाणान्तरागोचरस्स्यात् । अयि साधो न नियोगो निपूर्वेण युजिना घञन्तेन बोधयितुं शक्यते, व्यव-हारमात्रमेतत्स्वरूपमाख्यातुमाश्रीयते । यथा तु यजेतेत्येवमादिभ्यः शब्देभ्यस्सोऽवगम्यते तथा नान्यत इत्यत एव न प्रमाणान्तरगोचरो धर्मः । लिङर्थो हि नियोगः वाक्यार्थः । स च धर्म एव । स च न प्रमाणान्तरगम्य इति ॥

### १४२. नियोग एव कार्यम्.

इदमत्रावधेयम्—प्रेरकत्वमेव शब्दार्थः । आर्थं तु तस्य नियोगस्यानुष्ठेयत्वलक्षणं कार्यत्वम् । यतो विधिरनुष्ठेयतयाऽवगम्यते आचार्याज्ञां करोमि राजाज्ञां करोमीति । किमर्थं तर्हि विषयानुष्ठान-मिति चेत् न ह्याज्ञा घटादिवत्स्वरूपेण कर्तुं शक्या । अपि तु विषय-द्वारकं तत्संपादनम् । कमण्डलुं बिभृहीत्याचार्येणाज्ञप्तः कमण्डलुं भृत्वाऽऽचार्याज्ञां कृतां मन्यते । कटकं गच्छेति राज्ञाऽऽज्ञप्तः कटकं गत्वा राजाज्ञां कृतां मन्यते सोऽयं नियोग एवानुष्ठेयः ॥

अन्ये तु शाब्दं कार्यत्वं नियोगस्य । प्रेरकत्वं त्वार्थमित्या

चक्षते । अनुष्ठेयता हि तस्य निजं रूपम् । स्वसिद्धये स तु नियोज्यं नियुञ्जानः प्रेरक इत्युच्यते । तदुक्तम्—

**कार्यत्वेन नियोज्यं च स्वात्मनि प्रेरयन्नसौ ।**
**नियोग इति मीमांसानिष्णातैरभिधीयते ॥** (प्रक. १८८) ॥

इति । तदिदं कार्यत्वमपरित्यक्तप्रेरकभावमवगम्यते । प्रेरकत्वं चापरित्यक्तकार्यभावमित्यन्यतरदत्र शाब्दं रूपमिति । कार्यवाक्यार्थवादः प्रागेव विस्तृतः ॥

१४३. नियोगानुबन्धः.

स चायं नियोगः प्रतीयमानः यजेत स्वर्गकाम इत्यनुबन्धद्वयावच्छिन्नः प्रतीयते । यज्यादिनाऽस्य विषयानुबन्धः धातुनोच्यते । स्वर्गकाम इत्यधिकारानुबन्धः पदान्तरेणार्प्यते । तत्र च स्वर्गकामस्यैवमधिकारो निर्वहति यदि भावार्थस्य स्वर्गं प्रति साधनत्वमवगम्यते । एवं तर्हि स्वर्गकामेनैवायं कृतो भवति । एवं स्वर्गकामपदान्वयः । न पुनस्स्वर्गादिफलप्रदर्शनपूर्वकं विधेः प्रवर्तकत्वम्, अस्वातन्त्र्यप्रसङ्गात् । न हीदृशं शास्त्रस्य दैन्यं, यत्फलं विना पुंसः प्रवर्तयितुं न शक्नोति । अन्यथा यावज्जीवं यजेतेत्यादावप्रवर्तकं शास्त्रं स्यात् । किं यावज्जीवमित्यादिचोदनाः फलशून्या एव? ओमित्युच्यते । न हि विधिः फलमाकाङ्क्षति । अपि तु नियोज्यं विषयं, कस्य नियोगः कुत्र नियोग इति । अतः परं फलकल्पनं पुरुषबुद्धिप्रभवं भवति न शास्त्रीयम् । कामाधिकारे तु नियोज्यतैवान्यथा स्वर्गकामस्य नोपपद्यत इति स्वर्गस्य साध्यत्वमुपगतम् । न पुनर्विधेः फलार्थत्वात् । अत एव न तत्र वैधी प्रवृत्तिरिति लिप्साऽर्थलक्षणेत्याहेति ॥

**प्रतिषेधाधिकारेऽपि प्रत्यवायो न कल्प्यते ।**
**निषेध्यविषयादेव लब्धत्वादधिकारिणः ॥**

**नियोज्यस्तावदेतावान् क्रुद्धोऽरिहननोद्यतः ।**
**विषयस्तन्निवृत्तिश्च नियोगो ह्यत्र गम्यते ॥ इति ॥**

अयमत्र निर्णयः—भट्टमते अप्रवृत्तप्रवर्तकत्वं विधित्वं, लिङादि-वृत्तेश्शब्दभावनायाः पुरुषार्थभावनां प्रति हेतुत्वाभ्युपगमात् । "अभि-धत्ते करोति च" इत्यभ्युपगमाच्च । प्रभाकरमते अज्ञातज्ञापकत्वं विधि-त्वम्, लिङादिर्हि नियोगं कार्यं वा बोधयतीति विशेषः । कार्यत्वावग-मादेव प्रवृत्तिरिति । सैषा शास्त्रदशा प्रागेव निरूपिता ॥

१४४. अर्थपदार्थः.

इदमप्यत्रावधेयम्—"चोदनालक्षणोऽर्थो धर्मः" इत्यत्र चोद-नालक्षणमात्रस्य धर्मत्वं मा भूदित्यर्थशब्देन विशेष्यते। चोदनाशब्देन च प्रवर्तकं निवर्तकं च वाक्यमुच्यते । ततश्च निषेधवाक्यैः "न हिंस्यात्" इत्यादिभिः अनर्थत्वेन लक्ष्यमाणानां हिंसादीनामपि धर्मत्वं स्यात्तद्व्यावृत्त्यर्थं य एवार्थरूपेण प्रवर्तकवाक्यैर्लक्ष्यते तस्यैव धर्मत्वं वक्तुम-र्थग्रहणमिति कौमारिलं मतम् ॥

प्राभाकरास्तु लक्षणां परिहरन्तः श्येनादिस्वरूपमेवार्थपदस्य व्यावर्त्यं मन्यन्ते । तेषामेव "नैव श्येनादयः कर्तव्या विज्ञायन्ते" इति विधेयत्वनिराकरणेन प्रतिषेधविषयत्वसमर्थनात् । कथंपुनस्तेषां विधेयत्वं निराकरिष्यते? तत्राहुः—यस्य हि विधिः स्वसिद्ध्यन्यथाऽ-नुपपत्त्याऽनुष्ठानमाक्षिपति तद्विधेयमित्युच्यते। काम्येषु च कर्मसु काम-नावशादेव प्रवृत्तिसिद्धेः तत एव विधिस्सिध्यन् अन्यथानुपपत्त्यभावात् न स्वयमनुष्ठानमाक्षिपति ॥

ननु कर्तव्यताबोधनमेव प्रवर्तनं, कर्तव्यता च वेदे यागस्य लिङैव बोधितेति कथमविधेयत्वम् । सत्यम्, न तु यागस्य कर्तव्यता

लिङाऽभिधीयते । स्वार्थस्य कर्तव्यतां लिङभिधत्ते । यागश्च तस्य विषयः करणं च । सोऽयं कर्तव्यतात्मा नियोगोऽन्यथानुपपत्त्या स्वविषयस्य कर्तव्यतां बोधयन् अनुष्ठापक इत्युच्यते । श्येनादीनां तु रागादेवानुष्ठानसिद्धेः न नियोगस्तेषामनुष्ठानमाक्षिपतीति न तेषां विधेयत्वम् । असति च विधेयत्वे तेषां निषेधविषयत्वात् अनर्थत्वमिति तद्व्यावृत्त्यर्थमर्थपदमिति ॥ कुमारिलमते तु यागो विहितः, हिंसा प्रतिषिद्धेति विरोधपरिहारः ॥

## 30. समन्वयाधिकरणम्.

### १४५. अधिकरणविषयः.

अस्मिन्नधिकरणे पूर्वपक्षी मीमांसकः भाट्टमतानुयायी प्रपञ्चसत्यतावादी उपनिषदप्रामाण्यवादी वेदान्तानां प्रामाण्यं प्रथममाक्षिपति । स प्रथमः वाक्यार्थः । निष्प्रपञ्चीकरणनियोगपरत्वेन वेदान्तानां प्रामाण्यं संभवतीति जरन्मायावादिवाक्यार्थः द्वितीयः । अयं पुनर्वादः गौडमीमांसकाप्तसंमत इति सर्वार्थसिद्धावुक्तः । स च गौडमीमांसकः प्रकरणपञ्चिकादिप्रणेता शालिकनाथ इति न्यायकुसुमाञ्जलिबोधिन्यां व्याख्यातं तृतीयपरिच्छेदे । ततस्तृतीयो वाक्यार्थः पूर्वपक्षिणा क्रियमाणः द्वितीयवाक्यार्थप्रतिक्षेपः । ततः ध्याननियोगवादिजरन्मायावादिमतानुसारेण वेदान्तप्रामाण्यविचारः तुरीयः । एष एव परिष्कृतः मण्डनमिश्रसम्मतः । तस्य निराकरणरूपः नवीनमायावादिशाङ्करसम्मतः पञ्चमः वाक्यार्थः । तस्य निरासः ध्याननियोगवादिनः षष्ठः । सप्तमाष्टमावपि भेदाभेदवादः भास्करसंम्मतः तन्निरासश्च ध्याननियोगवादिन एव वाक्यार्थौ । ततो ध्याननियोगवादनिरासपूर्वकः पूर्वपक्षः नवमः । दशमस्तु सिद्धान्त इत्यस्मिन्नधिकरणभाष्ये दश प्रधानभूतावाक्यार्था इति संग्रहः ।

१४६. अधिकरणारम्भः.

**तत्तु समन्वयात्** ॥ अस्य सूत्रस्यार्थः सङ्गतिश्च प्रागेव प्रतिपादितौ । श्रीभाष्यार्थस्तु—**एवमिवेति** ॥ उत्तरोत्तरं विशेषशब्दाः । तेषां सर्वशाखाप्रत्ययन्यायात् सामान्यविशेषन्यायाच्चैकार्थ्यम् । पुरुषार्थत्वायाह—**आनन्द इति** ॥ **प्रवृत्तिनिवृत्तिरूपप्रयोजनेति** ॥ सुखदुःखनिवृत्तिलक्षणस्य मुख्यप्रयोजनस्य प्रवृत्तिनिवृत्तिसाध्यत्वात् तद्रूपत्वोक्तिः । **अन्यपरत्वं** तात्पर्याभावः । अप्रामाण्यमिति यावत् । **स्वविषयेति** ॥ यत्र प्रामाण्यं तत्र प्रवृत्तिनिवृत्त्यन्यतरान्वयः । ततश्च व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति शङ्कितुराशयः । तृणलोष्टादिदर्शनेषु भग्नेयं व्याप्तिरिति यत्र प्रामाण्यं तत्र विषयपरिच्छेदकत्वलक्षणं व्यवहारानुगुण्यसंपादकत्वमिति व्याप्तिरिति समाधातुराशयः ॥

**नच प्रयोजनेति** ॥ यत्र प्रामाण्यं तत्र सप्रयोजनत्वं यत्र सप्रयोजनत्वं तत्र प्रवृत्तिनिवृत्त्यन्यतरान्वय इति पुनराशङ्कायां तत्रापि प्राथमिकी व्याप्तिः लोष्टदर्शनादिष्वेव भग्नेति भावः ॥ **प्रयोजनं हीति** ॥ यत्र सप्रयोजनत्वं तत्र प्रामाण्यमिति व्याप्तिरित्यर्थः । प्रत्यक्षादिषु यथातथाभावेऽपि बुभुत्सितग्राहिणि शास्त्रे प्रयोजनाभावे बुभुत्सानुदयात् प्रयोजनपर्यवसायित्वं शास्त्रप्रामाण्यव्यापकमिति शङ्कायां तदुपेत्य प्रयोजनस्य न प्रवृत्तिनिवृत्त्यन्वयव्याप्यत्वमित्याह—**नच प्रवृत्तीति** ॥ **विरहिण इति** ॥ शास्त्रस्येति शेषः । चशब्दो व्याप्यनिषेधद्वयसमुच्चये । यथा मानत्वं न प्रवृत्तिनिवृत्त्यन्वयव्याप्यं तथा प्रयोजनं चेति । तत्र हेतुः—**पुरुषार्थेति** ॥ ब्रह्मणः तथाऽन्वयप्रतीतेरित्यर्थः । लौकिके सिद्धपरवाक्येऽपि पुरुषार्थान्वयं दर्शयति—**तथा स्वरूपपरेष्विति** ॥ एवमक्षरयोजनायां संक्षेपेणार्थ उक्तः । अथ तात्पर्यं वक्तुं पूर्वपक्षं विस्त-

रेण प्रस्तौति—**अत्राह नेति** ॥ सिद्धपरस्यापि प्रयोजनपर्यवसानं दृष्ट-मित्याशङ्क्य दूषयितुमनुवदति—**यत्पुनरिति** ॥

### १४७. निष्प्रपञ्चीकरणनियोगः

अथ निष्प्रपञ्चीकरणनियोगवादं प्रस्तौति—**अत्र कश्चिदाह वेदान्तेति** ॥ नियोगवाक्यार्थवादिनः जरत्प्राभाकराः टीकाकाराः। नव्यप्राभाकरास्तु कार्यवाक्यार्थवादिनो गौडमीमांसकाः। निरूपितः प्रागनयोर्विशेषः ॥ सोऽयं नियोगवादः शाङ्करेप्युभयलिङ्गाधिकरणे निराकृतोऽस्ति। **न दृष्टेरिति** ॥ पञ्चम्यन्तमिदम्। खण्डयति—**तद-युक्तमिति** ॥ नियोगो हि पञ्चाङ्गः। तत्र नियोगस्वरूपं प्राङ्नि-रूपितम्। तस्य कुत्र नियोगः कस्य नियोग इत्यंशद्वयापेक्षित्वात् **नियोज्यः** वक्तव्यः। तस्य नियोज्यतासिद्ध्यर्थं **विशेषणमपि** निरू-पणीयम्। तच्च यागस्थले स्वर्गकामना शौचजीवनादिकम्? **विषयः** यागादिः। नियोगस्याक्रियारूपत्वेन साक्षात्कृतिसाध्यत्वाभावात् याग-द्वारा कृतिसाध्यतेति प्रतीयते। ततश्च "कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः" (भाव) इत्युक्तरीत्या यागविषयकृतिसाध्यो नियो-ग इति प्रतीतौ नियोगकृतिविषयत्वेन यागस्य भानात् नियोगं प्रति-यागस्य विषयत्वम्। तत्र फलं प्रत्यकरणस्य तत्कामकृतिविषयत्वासं-भवात् यागस्य नियोगफलं प्रति करणत्वमपि अभिधानापर्यवसानलक्ष-णोपादानप्रमाणेनावगम्यते। ततश्च कार्यज्ञप्तौ विषयः यागः। तदु त्पत्तौ करणमिति विशेषः ॥

**इतिकर्तव्यता** नाम कथं कर्तव्यमित्यपेक्षायां इत्थं कर्तव्यमिति करणस्य प्रकाराणामुपदेशात् इतिकर्तव्यं करणं इतिकर्तव्यता करणस्य प्रकारः, अङ्गमिति यावत्, दर्शपूर्णमासादौ प्रयाजादिः। **प्रयोक्ता**

प्रयोगोऽनुष्ठानम् । तस्य कर्ताऽनुष्ठाता । नियोज्यस्यैवेदमाकारान्तरम् । तदुक्तम्—

> कर्तृत्वमधिकारित्वं नियोज्यत्वमिति स्थितम् ।
> अवस्थात्रितयं तत्रानुष्ठातृत्वं हि कर्तृता ॥
> अधिकारः स्वकीयत्वबुद्धिमत्त्वं हि कर्मणि ।
> कार्ये स्वकीयत्वबुद्धिमत्त्वं तु स्यान्नियोज्यता ॥

इति मानमेयवार्तिके (५०५) विस्तरः द्रष्टव्यः । अतएव भगवद्गीतायां निरुक्ताकारत्रयप्रतिषेधाय फलसङ्गकर्तृत्वत्याग उपदिश्यते ॥

### १४८. नियोगनिराकरणम्.

तत्र विशेषणानुपपत्त्या नियोगं दूषयति—**नियोज्यविशेषणमनुपादेयमिति** ॥ उपादेयं विधेयं अनुष्ठापकं तद्भिन्नं वक्तव्यमित्यर्थः । नैमित्तिकनियोगो वा काम्यनियोगो वेति विकल्प्य दूषयति—**निमित्तं फलं वेति** ॥ जीवनादिवन्निमित्तपक्षं प्रतिक्षिप्य पुत्रजन्मादिवन्निमित्तपक्षं प्रतिक्षिपति—**निमित्तत्वेचेति** ॥ अथ विषयानुपपत्त्या नियोगदूषणम्—**कश्चात्र नियोगेति** ॥ अत्र विषयविचारे द्वयी गतिः प्रपञ्चनिवृत्तिर्विषयः, अपवर्गः फलमित्येका । स्वर्गकामस्य यागोऽनुष्ठातव्य इत्युपदिश्यते । एवमपवर्गकामस्य प्रपञ्चविलयः । तमस्यवस्थितं घटादितत्त्वं बुभुत्समानेन तत्प्रत्यनीकं तमः प्रविलाप्यते, तथा ब्रह्मतत्त्वं बुभुत्समानेन तत्प्रत्यनीकः प्रपञ्चः प्रविलापयितव्य इति ॥

प्रपञ्चनिवृत्तिरेव फलं ज्ञानं विषय इति द्वितीया गतिः । ततश्च प्रपञ्चप्रविलयाविषयो वा ज्ञानविषयो वा नियोग इति पक्षद्वयम् । द्वितीयपक्षे ज्ञानेन प्रपञ्चस्य नियोगद्वारा निवृत्तौ सत्यत्वप्रसंग इति दूषणस्य स्पष्टत्वात् प्रपञ्चनिवृत्तिरेव विषय इति पक्षः परिशिष्यते । तत्रापि प्रपञ्चनिवृत्तिव्यतिरेकेण नियोगसाध्यस्य ब्रह्मतत्त्वावबोधस्या-

संभवात् तयोरैक्यं सिद्धवत्कृत्यान्योन्याश्रयेण दूषणं प्रधानभूतोऽर्थः । **अभव्यरूपत्वात्** असाध्यत्वात् । **अभावार्थत्वात्** क्रियारूपत्वाभावात् । फलत्वं विषयत्वं चेत्याकारद्वयोपगमेऽन्योन्याश्रय इत्याह—**अस्य चेति** ॥ निवृत्तेरित्यर्थः । फलत्वविवक्षया क्लीवता ॥

**स्ववाक्यात्** प्रपञ्चमिथ्यात्वब्रह्मनिर्विशेषत्वपरवाक्यात् । अथ करणानुपपत्त्या नियोगदूषणम्—**अपि च किमिति** ॥ सत्यत्वेऽपि फलानुपपत्तिमुखेन करणानुपपत्तिरुच्यते—**प्रपञ्चस्य निवर्त्यत्व इति** ॥ सत्यत्वेन नियोगानिवर्त्यत्वे इत्यर्थः ॥

इतिकर्तव्यत्वानुपपत्तिं वक्ष्यन् प्रयोक्त्रनुपपत्तिमत्रैव सूचयति—**अथ ब्रह्मस्वरूपव्यतिरिक्त इति** ॥ अथेतिकर्तव्यत्वानुपपत्तिः—**किञ्च प्रपञ्चनिवृत्तेरिति** ॥ भावपक्षे निष्पादिका अनुग्राहिका चेतीतिकर्तव्यता द्विविधा । आद्या अवघातादिः दृष्टरूपा । द्वितीया प्रोक्षणादिरदृष्टरूपा । उभयथाऽपि न संभवतीत्याह—**भावरूपा चेति** ॥ अत्र करणशरीरनिष्पादकरूपमङ्गमप्रसिद्धम् । निष्पन्नस्य करणस्य फलोत्पत्तौ सहकारिलक्षणमङ्गमपि न संभवति सिद्ध्यसिद्ध्योः व्याघातादिति भावः । अद्वितीयताज्ञानस्याङ्गतामाशङ्क्य प्रपञ्चनिवृत्तेः करणत्वव्याघातकत्वान्न संभवतीति समाधत्ते—**ब्रह्मणोऽद्वितीयत्वेति** ॥ अभावपक्षः अप्रामाणिक इत्याह—**अभावरूपत्व इति** ॥ **अभावादेव** अप्रामाणिकत्वादेव । शमादीनां निवृत्तिरूपत्वेऽपि ज्ञाननिष्पादकत्वमेव नतु प्रपञ्चनिवृत्तिं प्रत्यङ्गत्वमिति भावः । **अतः** पञ्चविधस्याप्यङ्गस्यानुपपत्त्या **विधिः** नियोगः न संभवति । वेदान्तवाक्यजातमप्रमाणमेवेति भावः ॥

### १४९ ध्याननियोगवादः.

अथ ध्याननियोगवादः **अन्योप्याह यद्यपीति** ॥ अत्र

ध्याता प्रयोक्ता साक्षात्कर्ता नियोज्यः। अविध्यानिवृत्तिः फलतया नियोज्यविशेषणम्। ध्यानं विषयः करणं च इतिकर्तव्यता शमादिः। अत्रापि फलविषये त्रयी गतिः ब्रह्मभावः अविद्यापनयः साक्षात्कारो वेति। अत्र शाङ्कररीत्या वाचस्पतिदूषणमिदम्—"तस्माद्ब्रह्मभूयस्याविद्यापिधानापनयमात्रेणाविर्भावात् अविद्यापनयस्य च वेदान्तार्थविज्ञानादवगतिपर्यन्तादेव संभवात् उपासनायास्संस्कारहेतुभावस्य संस्कारस्य च साक्षात्कारोपजनने मनस्साचिव्यस्य च मानान्तरसिद्धत्वात् आत्मेत्येवोपासीतेति न विधिः। अपि तु विधिसरूपोऽयं यथोपांशुयाजवाक्ये विष्णुरुपांशुयष्टव्य इत्यादयो विधिसरूपा न विधय इति" (१–१–४)॥

श्रीभाष्ये तु साक्षात्कारद्वाराऽविद्यानिवृत्तिं प्रति नियोगस्य उपायत्वपक्षोऽनूद्यते। वाक्यार्थज्ञानमात्रोपायवादः प्रत्यक्षविरोधेन शास्त्रविरोधेन च निरस्त इत्याह—**नच वाक्यादित्यादिना**॥

१५०. वाक्यार्थज्ञानोपायवादः.

अथ ध्याननियोगवाद्येव शाङ्करपरिगृहीतं वाक्यार्थज्ञानोपायवादमनुवदति—**अथोच्येत रज्जुरेषेति**॥ अत्रायं सारार्थः—साक्षात्कारस्य नियोगद्वारत्वेऽपि अविद्यानिवृत्तिपूर्वकब्रह्मभावस्यापि नैयोगिकफलत्वेन मोक्षस्यानित्यत्वप्रसङ्गः। अविद्यालक्षणस्य भ्रमस्य विद्यालक्षणप्रमाणज्ञानेनैव दृष्टविधया निवृत्तिसंभवात् न धर्मलक्षणनियोगापेक्षा। नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिः परं वाक्यार्थज्ञानेन क्रियते। अतोऽविद्याकल्पितभेदनिवृत्तिपरं शास्त्रम्। ब्रह्म तु स्वतस्सिद्धम्। भेदलक्षणाविद्यानिवृत्तिस्साध्याऽपि प्रध्वंसाभावरूपत्वान्न विनश्यति। श्रवणमननध्यानादिविधयस्तु अनादिप्रवृत्तसकलेतरविकल्पाविमुखीकरणद्वारेण वाक्यार्थज्ञानहेतवः। प्रत्यक्षविरोधस्त्वसिद्धः। शरीरपातादूर्ध्वं बन्धनिवृत्ति-

पक्षस्तु भ्रान्तिप्रमितिस्वभावाविवेकमूलः । बन्धनिवृत्त्यदर्शने ज्ञानं नैव जातम् । शरीरस्थितिप्रतिभासस्तु दग्धपटे पटप्रतिभासवत् अकार्यकरः । अतो विधिशेषतया वेदान्तेन न ब्रह्मणस्सिद्धिः । अपितु सिद्धरूपार्थपरेणैवेति ॥

पदार्थस्तु—**तस्मात्** संसारफलत्वप्रसङ्गात् । **इत्यशरीरत्वरूप इति** ॥ नियोगसाध्यत्वे धर्माधर्मफलसंबन्धराहित्यश्रवणानुपपत्तिरिति श्रुत्यर्थापत्तिरुक्ता भवति । **नियोगविशेषः** प्रायश्चित्तादिनियोगः । **अन्यत्रधर्मात्** धर्मेण विना । **कृताकृतात्** वर्तमानात् । **अपिचोत्पत्तीति** ॥

**उत्पत्तिराप्तिर्विकृतिस्संस्कृतिश्चेति साध्यता ।**
**आधानाधीत्यवाघातप्रोक्षणैरिह भज्यते ॥**

**निघर्षेण** पाणावादर्शस्य आदर्शे पाणेश्च । देहाश्रयस्नानादिक्रिययाऽऽत्मसंस्कारमाशङ्क्यापनुदति—**नच देहेति** ॥ **अविद्यागृहीतः** अविद्याकल्पित । **तत्संगतः** देहसंङ्गतः । **तत्साक्षित्वादिति** ॥ यो यस्य साक्षी न हि स एव स इति भावः । **तयोरहङ्कर्त्रात्मनोः** । आत्मेन्द्रियेत्यत्रात्मा देहः । **पर्यगात्** अमन्यत । धर्मासाध्यत्वनिगमनम्— **अविद्यागृहीतादिति** ॥

अपरयाऽपि श्रुत्यर्थापत्त्या ब्रह्मणः विधिसंबन्धं वारयति—**नच विदिक्रियेति** ॥ नियोगद्वयनिषेधाय कर्मत्वद्वयोपादानम् । अथ शास्त्रप्रत्यक्षविरोधयोः परिहारः—**नचैतावतेति** ॥ **इदन्तया** प्रमेयतया । **अविषयं** अविषयतया प्रतिपादयदित्यन्वयः । **न निवृत्तः** न निवृत्त इति प्रत्ययः । **शरीरस्थितिः** शरीरप्रतिभासः । एतादृशध्याननियोगवादकटाक्षेण कुमारिलमतकटाक्षेण च नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मे-

त्युपदिश्यते । नित्यशुद्धत्वात् शरीरादिसंबन्धाभावः । नित्यबुद्धत्वात् नित्यसिद्धत्वात् कयाऽपि विधया कर्मसाध्यत्वाभावः । बुद्धत्वं सिद्धत्वम् । नित्यमुक्तत्वात् संसारस्याविद्याकल्पितत्वात् तन्निवृत्त्यर्थं ज्ञानप्रधानं सकलं शास्त्रमिति भावः ॥

१५१. वाक्यार्थज्ञानोपायतानिरास .

अथ वाक्यार्थज्ञानोपायवादनिरासः—**तदयुक्तं वाक्यार्थज्ञानेति॥** अयमर्थः—वाक्यार्थज्ञानस्योपायत्ववादिनी कण्ठोक्तिर्नास्ति । **न च** प्रत्यक्षभ्रमः परोक्षेण वाक्यजन्यज्ञानेन निवर्तते । शब्दस्यापरोक्षधीजनकत्वं नास्तीति प्रत्यक्षविरोधः स्थिरः । आप्तोपदेशस्य भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षप्रवृत्तिहेतुत्वेन । श्रवणादिविधीनामितरेतराश्रयदोषात् शास्त्रविरोधोऽपि स्थिरः । अतएव जीवन्मुक्तिरपि नास्तीति ॥

१५२. जीवन्मुक्तिः.

**सशरीरत्वं बन्ध इति ॥** सशरीरत्वप्रतिभासो बन्ध इत्यर्थः । **मिथ्याप्रतिभासः** भ्रमः । सशरीरत्वभ्रमनिवृत्तिः जीवन्मुक्तिरिति पक्षं दूषयित्वा सशरीरत्वभ्रमे तात्त्विकत्वाभिमाननिवृत्तिः जीवन्मुक्तिरिति पक्षं बाधितानुवृत्तिरूपं निरस्यति—**अथ सशरीरत्वप्रतिभासो बाधित इति ॥ चन्द्रैकत्वभानाविषयत्वेनेति ॥** बाधकज्ञाने प्रतिषेध्यतय विषयत्वाभावेनेत्यर्थः ॥

प्रथमसूत्रे बाधितानुवृत्तिनिराकरणे दोषस्य पारमार्थिकतया बाधकज्ञानबाध्यत्वाभावात् भ्रमानुवृत्तिरुक्ता । अत्र तु बाधकज्ञानाविषयतया दोषस्याबाधितत्वात् तदनुवृत्तिरुक्तेति विशेषः ॥

जीवन्मुक्तिपक्षे श्रुतिस्मृतिविरोधमाह—**तस्य तावदेवेति ॥ सैषेति ॥** आपस्तम्बधर्मे संन्यासाश्रमनिरूपणप्रकरणे—“सत्यानृते

सुखदुःखे वेदानिमं लोकममुं च लोकं परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम्" । इति पञ्च सूत्राणि पठितानि ॥

तत्राद्यद्वयं पूर्वपक्षसूत्रम् । अवशिष्टं त्रयं सिद्धान्तसूत्रम् । अयमर्थः—ज्ञानबलावष्टम्भेन हतविधिनिषेधानां स्वैरं प्रवर्तमानानां सिद्धंमन्यानां मतं पूर्वः पक्षः । ज्ञानबलव्याजेन स्वैरचारो दुराचारः शास्त्रविरुद्धः प्रत्यक्षाविरुद्धश्चेत्युत्तरः पक्षः । पदार्थस्तु—सत्यं वक्तव्यमिति नियमं विपत्कालेऽसत्यं वक्तव्यमिति च नियमं सुखदुःखे वेदाध्ययनं ऐहिकामुष्मिकं वैदिकं काम्यं कर्म सर्वं परित्यज्यात्मानमेकमुपासीत । तेन चात्मज्ञानेन सर्वाशुभनिवृत्तिपूर्वकक्षेमलाभ इति ॥ अस्मिन् पक्षे यतीनामेव कर्तव्यविधायकान्यनन्तानि शास्त्राणि विशेषेण विरुद्धानि । प्रत्यक्षेणापि ज्ञानिमूर्धाभिषिक्ताः दुःखमनुभवन्तो दृश्यन्ते । एतेन परं पारलौकिकमपि नरकादिदुःखं स्वैरचारिणां न निवर्तत इति व्याख्यातमिति । जीवन्मुक्तिविचारः पूर्वं निरूपितः (८७ पु.) द्रष्टव्यः ॥

नियोगसाध्यत्वे मोक्षस्यानित्यताप्रसङ्गं पूर्ववादिमतानुसारेणैव वारयति—**नचानियोगसाध्यत्व इति** ॥ उपास्यत्वप्रतिषेधपरत्वेनाभिमतस्य वाक्यस्य जगद्वैलक्षण्यप्रदर्शनपरत्वेन व्याख्यां करोति—**नेदं यदिदमिति** ॥

१५३ भेदाभेदवादः.

अथ भेदसत्यतावादिमतं दूषयितुं ध्याननियोगवादिन एव भेदाभेदवादिमतानुवादः—**यदपि कैश्चिदुक्तमिति** ॥ **अथोच्येतेति** ॥ समासेनोक्तस्य व्यासेन विशदयितुमारम्भः—**छायातपादिष्विति** ॥ सहानवस्थानलक्षणः कालविरोधः । भिन्नाधारत्वलक्षणः देशविरोधः ।

नाश्यनाशकभावः वस्तुविरोधः । त्रिविधोऽप्यत्र प्रतीतिपराहत इति भावः । तदुच्यते भास्करेण सूत्रभाष्ये (१६ पु.—

एकस्यैकत्वमस्तीति प्रमाणादेव गम्यते ।
नानात्वं तस्य तत्पूर्वं कस्माद्भेदोऽपि नेष्यते ॥
यत्प्रमाणैः परिछिन्नं अविरुद्धं हि तत्तथा ।
वस्तुजातं गवाश्वादि भिन्नाभिन्नं प्रतीयते ॥
प्रतीयते चेदुभयं विरोधः कोयमुच्यते ।
विरोधे चाविरोधे च प्रमाणं कारणं मतम् ॥
एकरूपं प्रतीतत्वात् द्विरूपं तत्तथेष्यताम् ।
एकरूपं भवेदेकमिति नेश्वरभाषितम् ॥
कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथा भेदः कुण्डलाद्यात्मना भिदा ॥ इति ॥

अथ पिण्डानामपि गवाश्वादीनां भेदाभेदः—**एवमेव देशत इति** ॥ देहात्मनोरपि भेदाभेदप्रसङ्गमाशङ्क्य बाधबलेन समाधत्ते—**अथोच्येत मृदयमिति** ॥ अयं विशेषः—अचिद्ब्रह्मणोः भेदाभेद इति भास्करयादवयोरुभयोरपि मतम् । चिद्ब्रह्मणोस्तु भेदाभेदौ स्वाभाविकाविति यादवमतम् । भेद औपाधिकोऽभेदः स्वाभाविक इति भास्करमतम् ॥

**ननु च सोश्नुत इति** ॥ अत्र भोक्तृसाहित्येन शङ्का । भोज्यसाहित्येन समाधिः । अप्राधान्यं भोक्त्रन्तरापेक्षया दोषः स्वगुणापेक्षया गुण एव । **जगद्व्यापारेति** ॥ इदं सूत्रं मोक्षे भेदपक्षे दूषणपरतया सूत्रकारेण वक्ष्यत इति भावः ॥

१५४. भेदाभेदवादनिरासः.

अथ भास्करमतदूषणं ध्याननियोगवादिनः—**अत्रोच्यतेऽद्वितीयेति** ॥ **पूर्वस्मिन् कल्प इति** ॥ अत्रापि विकल्पत्रयं जाति

व्यक्त्योः किं भेदः किं वा अभेदः अथ भेदाभेद इत्यभिप्रेत्य क्रमेण वाक्यत्रयेण दूषणम्—**व्यक्तिगतो भेद इति** ॥ तृतीयकल्पदूषणं—**एकस्मिंश्चेति** ॥ कण्ठोक्तद्वितीयविकल्पदूषणं—**द्वितीये त्विति** ॥ जातिव्यक्त्यात्मकपदार्थद्वयाधारभूतः तृतीयः पदार्थः नास्तीति दोषः । तृतीयाभ्युपगमेन विरोधपरिहारेऽपि द्वयापेक्षया तृतीयस्य किं भेदः उताभेदः किं वा भेदाभेद इति विकल्प्य दूषणं वक्तुमभ्युपगममनुवदति—**तृतीयाभ्युपगमेऽपीति** ॥ भेदपक्षे दूषणम्—**स्वस्मादिति** ॥ स्वशब्दत्रयमाश्रयपरम् । **कथं भवेदिति** ॥ कपिसंयोगतदभावाविरोधनिर्वाहकयोरग्रमूलयोः वृक्षस्य चावयवावयविभावोऽस्ति, प्रकृते जातिव्यक्त्योः कल्पितस्याश्रयस्य स नास्तीति भावः । द्वितीयकल्पदूषणम्—**अविलक्षणमिति** ॥ तृतीयकल्पेऽनवस्था—**आकारद्वयेति** ॥

भेदाभेदयोर्विरोधाभ्युपगमे हि तत्परिहारचिन्ता । प्रतीतिबलेनैव तदविरोधः, निर्विकल्पके अभेदेन ग्रहणात् सविकल्पके च भेदेन ग्रहणादित्यत्र तादृशप्रतीतिरेवापह्नूयते—**न च संप्रतिपन्नेति** ॥ आविद्यकभेधपक्षापेक्षया औपाधिकभेदपक्षे विशेषदोषं दर्शयितुमुपक्रमते—**नन्वेवं ब्रह्मण इति** ॥ **छित्वा भित्वा वेति** ॥ अङ्गुल्यादेरिव च्छेदः । अच्छेदेऽपि पाणिपादादेरिव भेदः । **अयं प्रष्टव्य इति** ॥ अत्र तुरीयपञ्चमविकल्पौ गत्यन्तराभावेनोपाक्षिप्तौ । न तु पराभ्युपगमेन । **पूर्वोक्तः** प्रतिक्षणं बन्धमोक्षादिरूपः । तृतीयकल्पे शुद्धब्रह्मासिद्धिः ॥

## १५५. ध्याननियोगवादनिरासः.

अथ मीमांसकः पूर्वपक्षी ध्याननियोगवादं प्रतिक्षिपति—**तदप्ययुक्तं ध्यानेति** ॥ प्रवृत्तिनिवृत्तिरूपप्रयोजनविधुरत्वं ध्येयविशेषस्व-

रूपसमर्पणमात्रपर्यवसानं ज्ञानमात्रपर्यवसानं चेति त्रिभिः दोषैः वेदान्ता न प्रमाणमिति ॥

ननु प्रथमसूत्रे विधिशेषतयाऽपि ब्रह्मणि प्रामाण्योपगमः अत्रानभ्युपगमश्चेति विरोध इति चेत्——अत्रेदमवधेयम्, प्रथमं फलत्वेन सिद्धिरुक्ता। फलतया सिध्यतोऽपारमार्थ्ये स्वर्गाद्यर्थं यागादेरप्यननुष्ठानप्रसङ्गः। अत्र तु विषयत्वेन सिद्धिरुच्यते। विषयापारमार्थ्येऽपि प्रतीकोपासनादिवत् नाननुष्ठानप्रसङ्ग इति भावः। किञ्च "कार्यार्थत्वेऽपि वेदस्य ब्रह्मविचारः कर्तव्य एव" इति श्रीभाष्यमभ्युच्चययुक्तिः। नतु सूत्रकाराभिमता ॥

१५६. सिद्धान्तः.

**तत्र प्रतिपद्यत इति** ॥ सिद्धान्तो विज्ञायत इत्यर्थः। सूत्रकारो जानातीति वा। कर्तरि कर्मणि च रूपस्याविशिष्टत्वात्। **पुरुषार्थतयेति** समित्यस्यार्थः। विशेषणे तृतीया। **अभिधेयतयेत्यभेदे** तृतीया। निष्प्रपञ्चकरणनियोगवादे नियोगस्वरूपासिद्धिः। ध्याननियोगवादे ब्रह्मासिद्धिः। वाक्यार्थज्ञानोपायवादे प्रत्यक्षशास्त्रविरोधौ। भेदाभेदपक्षे प्रतीतिविरोधः। पूर्वपक्षिमीमांसकपक्षे निरीश्वरवादलक्षणं नास्तिक्यम्। तस्मात्सर्वेषां दोषाणामनवकाशाय विलक्षणः मार्गः प्रदर्श्यते। ब्रह्म च निरतिशयानन्दरूपमिति शास्त्रतस्सिद्धम्। यत्र शाब्दं प्रामाण्यं तत्र प्रवृत्तिनिवृत्त्यन्वय इति न व्याप्तिः। अपितु यत्र शाब्दं प्रामाण्यं तत्र सप्रयोजनत्वमिति। प्रकृते निरतिशयप्रयोजनरूपब्रह्मप्रतिपादनपरतया वेदान्तशास्त्रे व्याप्तिभङ्ग इति भावः ॥

**राजकुलवासी** राजकुलान्तरङ्गः। **कौलेयककुलं** श्वोपजीविकुलम्। विशेषाणामित्यन्तं मुक्तानामित्यस्य विशेषणं पूर्वकालावच्छेदेन।

**स्वस्य** ब्रह्मणः । **संभवे** "परमं साम्यम्" इत्यादिशास्त्रादवगतिसम्भवे । **प्रवृत्तिनिवृत्तिनिष्ठं** तत्प्रतिपादकं वाक्यम् । शास्त्रविरोधपरिहारः—**एवं भूतमिति** ॥ कुशलववृत्तान्तं मनसि कृत्वा उदाहरणान्तरं—**यथाच कश्चिदिति** ॥ गाम्भीर्यादयः सौलभ्योपयुक्ताः । शौर्यादयः परत्वोपयुक्ताः ॥

**गाम्भीर्यं** संप्रदानलाघवदीयमानगौरवानपेक्षत्वम् । **औदार्यं** दातृप्रतिग्रहीतृविभागबुद्धिविरहेण प्राप्तं कृतमिति प्रतिपत्तिमत्त्वम् । **वात्सल्यं** दोषेष्वपि गुणत्वबुद्धिः । **सौशील्यं** महतो मन्दैस्सह नीरन्ध्रसंश्लेषस्वभावत्वम् । **शौर्यं** शत्रुमध्ये गृह इव प्रवेश सामर्थ्यं भीरुत्वविरोधि । **वीर्यमश्रान्तिः** । **पराक्रमः** विक्रमणम् ॥

**यत्पुनरिति** ॥ वेदान्तः न प्रमाणं अर्थसद्भावाभावेऽपि पुरुषार्थपर्यवसानात् उपच्छन्दनवाक्यवदित्यनुमानं स्वरूपासिद्धमिति भावः । प्रवर्तकवाक्यानामिव सिद्धपरवाक्यानामप्यध्यापनाद्युपपत्तये पुरुषार्थपर्यवसानस्यावश्यवक्तव्यतया यथोक्तलक्षणं ब्रह्म बोधयति वेदान्तवाक्यगणः ॥

एतादृशनिरतिशयभोग्यभूतपारिपूर्णपरब्रह्मानुभवरूपपरमात्मप्राप्तिरेव परमपुरुषार्थलक्षणो मोक्षः । अत्रैव शास्त्रे सर्वशास्त्राधिकतरसारसमुद्धारैकप्रयोजनताधिकृते चतुर्थाध्याये अनेनैव क्रमेण मोक्षो निरणायि । नचैषोऽध्यायः अर्वाचीनफलविषयः कल्प्यः, तत्साधनादिविषयाणां पूर्वेषामपि त्रयाणामध्यायानां तदुदाहृतानामुपनिषदां स्मृतीतिहासादीनां च अर्वाचीनविषयत्वेन बहिश्शास्त्रं मोक्षनिर्णयप्रसङ्गात् । तस्मादयमेव मार्गः संप्रदायसमागतः समीचीन इति शास्त्रमारम्भणीयमिति चतुरश्रम् ॥

इति श्रीभाष्यभूषणे समन्वयाधिकरणम्, चतुस्सूत्री समाप्ता.

---

॥ श्रीः ॥

# नयसङ्गतिमालिका

---

कारणं सर्वजगतां शरणं संश्रितात्मनाम् ।
अनन्तं सत्यमानन्दं विज्ञानममलं श्रये ॥
अभिवन्द्य महोदारामस्मद्गुरुपरंपराम् ।
कुर्वे श्रीभाष्यसिद्धान्ते नयसंङ्गतिमालिकाम् ॥
अनन्तराभिधाने या जिज्ञासा स्यात्प्रयोजिका ।
तद्धेतुज्ञानविषयसंबन्धस्सङ्गतिर्मता ॥
उपोद्धातश्चापवादः प्रत्युदाहृतिरेव च ।
दृष्टान्ताक्षेपातिदेशप्रसङ्गा इति सप्तधा ॥
उपोद्धातः प्रस्तुतार्थस्योपपादकता ततः ।
चिन्तां प्रकृतसिद्ध्यर्थामुपोद्धातं विदुर्बुधाः ॥ 5
पूर्वाधिकृतिसिद्धान्तन्यायं यत्रावलम्बते ।
उत्तराधिक्रियापूर्वपक्षस्तत्रापवादिकी ॥
पूर्वाधिकृतिसिद्धान्तन्यायस्याविषयीक्रियाम् ।
आलम्ब्य पूर्वपक्षस्योत्थाने स्यात्प्रत्युदाहृतिः ॥
पूर्वाधिकृतिसिद्धान्तन्यायसाधर्म्यसंश्रयात् ।
उत्तराधिक्रियोत्थाने भवेत् दृष्टान्तसङ्गतिः ॥
पूर्वाधिकृतिसिद्धान्तन्यायस्यानुपपन्नताम् ।
शङ्कित्वा पूर्वपक्षस्योत्थाने त्वाक्षेपसङ्गतिः ॥
कृत्वा यत्राधिकां शङ्कां पूर्वमेवातिदिश्यते ।
सङ्गतिः कथिता सद्भिः काचित्तत्रातिदेशिकी ॥ 10
स्मृतस्योक्तार्थसंबन्धादुपेक्षाया अनर्हता ।
प्रसङ्ग इति यत्प्राहुः यस्मात्सैव हि सङ्गतिः ॥

तस्मादुपोद्घातमुखसङ्गतिभ्यः पृथक्कृता ।
या सङ्गतिस्स प्रसङ्ग इति निष्कृष्टलक्षणम् ॥
प्रायेण हि प्रबन्धेऽस्मिन्नपवादादिशब्दतः ।
सङ्गतिस्सूच्यत इति समुद्गृह्णन्तु सूरयः ॥
धर्मधीर्मानभेदाङ्ग प्रयुक्तिक्रमकर्तृभिः ।
सातिदेशाविशेषोहवाधतन्त्रप्रसक्तिभिः ॥
स्वरूपमादौ तद्भेदः तदुपासनपूर्वकम् ।
फलं च देवताकाण्डे देवतानां तु कथ्यते ॥ 15
समन्वयोऽविरोधश्च साधनं च प्रयोजनम् ।
काण्डत्रये प्रधानार्था एते विंशतिलक्षणे ॥
सिद्धं साध्यमिति द्वेधा विषयो विषयीत्यपि ।
तार्तीयीकं काण्डमिदं द्विकद्वितयगर्भितम् ॥
शास्त्रकाण्डद्विकाध्यायपेटिकाधिक्रियाङ्घ्रिभिः ।
सूत्रभेदाच्चाष्टविधा वक्तव्या सङ्गतिस्त्विह ॥
अन्तर्भावात्मिका शास्त्रादिषु षट्स्विह सङ्गतिः ।
आनन्तर्यात्मिका ज्ञेयाऽधिक्रियासूत्रयोः पुनः ॥
वेदार्थन्यायरूपत्वान्मीमांसाशास्त्रसङ्गतिः
वेदान्तार्थविचारत्वात्काण्डसङ्गतिरुच्यते ॥ 20
सिद्धवस्तुविचारत्वात् प्रथमद्विकसङ्गतिः ।
समन्वयप्रधानत्वात् प्रथमाध्यायसङ्गतिः ॥
अत्रायोगव्यवच्छेदपादे स्यात्पेटिकात्रयम् ।
चतुर्भिश्च त्रिभिश्चैव चतुर्भिश्च नयैः क्रमात् ॥
तत्राद्यपेटिका शास्त्रस्यानारम्भप्रशान्तिकृत् ।
न्यायैश्चतुर्भिः प्रथमे पुनरेषाऽवधार्यताम् ॥
देवताकाण्डचरमाधिक्रियायां हि सूत्रितम् ।
अन्ते हरौ दर्शनात्सः विष्णुराहेत्यतः परम् ॥
१-१-१ तं ब्रह्मेत्यादिनिर्देशात् ब्रह्मशब्दार्थगोचराम् ।
अप्रसिद्धिं निराचष्टे तस्मादाक्षेपसङ्गतिः ॥ 25

१-१-२ प्रमाणलक्षणाभ्यां च वस्तुसिद्धिरिति स्थिते ।
स्यात्प्रमेयपरीक्षाऽथ प्रमाणाक्षेपमूलिका ॥
१-१-३ इश्वरस्यानुमानेन सिद्धस्याप्राप्त्यसंभवात् ।
प्रामाण्यस्य समाक्षेपः शास्त्रयोनिनये धुतः ॥
१-१-४ प्रामाण्यफलयत्नानां क्रमे व्यापकहानितः ।
समन्वयनयस्तुर्यः प्रामाण्याक्षेपमच्छिनत् ॥
असंभवो लक्षणस्य लक्ष्यासिद्धिनिबन्धनः ।
योऽयोगस्तद्व्यवच्छेदः प्रथमे पाद उच्यते ॥
अतिव्याप्तिर्योऽन्ययोगः तद्व्यवच्छेदलक्षणः ।
अर्थस्त्रिपाद्यामिति च विवेकस्स्यात्समासतः ॥ 30
१-१-५ वेदान्तसारसद्विद्या वक्ति प्रकृतिहेतुताम् ।
इत्याक्षेपप्रतिक्षेपः स्यादीक्षतिनयेऽधुना ॥
एवं बह्वयस्सङ्गतयः प्रोक्ता मुखविभेदतः ।
तत्र मुख्या संगृहीता शिष्यविक्षेपशान्तये ॥
१-१-६ अथानन्दाधिकरणे जीवो मुख्येक्षणादिमान् ।
जगतः कारणं स्यादित्यपवादोऽत्र वार्यते ॥
१-१-७ स यश्चायमिति श्रुत्या पूर्वाधिकृतिशेषतः ।
अन्तर्णये पुण्यजीवकारणत्वमपोद्यते ॥
१-१-८ विशेषलिङ्गं प्रबलं सामान्यश्रुतितो मतम् ।
विपरीतमिहाकाशनयेऽतः प्रत्युदाहृतिः ॥ 35
१-१-९ अत्र कृत्वाऽधिकाशङ्कां पूर्वन्यायातिदेशतः ।
अपाकरोत्प्राणनये सङ्गतिस्त्वातिदेशिकी ॥
१-१-१० स्ववाक्योक्तब्रह्मलिङ्गविशेषादर्शनादिह ।
ज्योतिर्विचार्यते तस्मात् प्रत्युदाहृतिसङ्गतिः ॥
१-१-११ पूर्वोक्तात्पूर्वपक्षः स्यादुपक्रमपराक्रमात् ।
इन्द्रप्राणाधिकरणे सङ्गतिस्त्वापवादि की ॥
एवं समगमन्नाद्यपादे प्रथमलक्षणे ।
पेटिकात्रितयं चैकादशाधिकरणान्यपि ॥

इति नयसङ्गतिमालिकायां प्रथमाध्याये प्रथमः पादः.

अथ द्वितीयपादेऽस्मिन् त्रिकद्विकविभागतः ।
अल्पस्थानमहास्थानस्थितेशोपास्तिपेटिके ॥ 40

१ २-१ महावाक्यगतं ब्रह्मलिङ्गं प्रबलमीरितम् ।
तादृक्षलिङ्गतस्सर्वनये शङ्का व्यपोह्यते ॥

१-२-२ भोक्तृत्वं नास्तिचेदन्तर्यामिणः जीव एव सः ।
अत्ता स्यादिति शङ्कातः सङ्गतिः प्रत्युदाहृतिः ॥

१-२-३ अत्तुर्दुर्दर्शतायां स्यादाक्षिदृश्यस्सुदर्शनः ।
प्रत्युदाहृतिसङ्गत्याऽतोऽन्तराधिक्रियोदयः ॥

१-२-४ अक्षिस्थपुरुषस्यैव ब्रह्मत्वस्योपपादिका ।
अथान्तर्याम्यधिकृतिः तेनोपोद्घातसङ्गतिः ॥

१-२-५ अदृश्यत्वाधिकरणे द्रष्टृत्वादेरनुक्तितः ।
प्रकृतिर्वा पुमान्वेति शङ्कातिः प्रत्युदाहृतिः ॥ 45

१-२-६ प्राग्विश्वरूपोपन्यासः द्युमूर्धत्वादिना कृतः ।
तत्क्लृप्तथा चिन्त्यते वैश्वानरविद्याऽपवादतः ॥

इत्थं ह्यधिक्रियाषट्कं पेटिकाद्वयलक्षणम् ।
अध्याये प्रथमे द्वैतीयीकपादे सुसङ्गतम् ॥

इति नयसङ्गतिमालिकायां प्रथमाध्याये द्वितीयः पादः.

अथ द्वाभ्यां चतुर्भिश्च त्रिभिरेकेन च क्रमात् ।
न्यायैस्त्रितीयचरणे पेटिकानां चतुष्टयम् ॥

१-३-१ द्युपृथिव्यादिसंबन्धः प्राक्पादान्ते निरूपितः ।
जीवेऽस्तीत्यपवादेन द्युभ्वादिनयनिर्णयः ॥

१-३-२ उक्तात्प्रकरणस्यैक्यादेव सिद्धान्तयुक्तितः ।
अपवादो भूमनये जीवेनात्र निराकृतः ॥ 50

१-३-३ प्रकृतौ पुरुषे वैषा स्वे महिम्नि प्रतिष्ठितिः ।
प्रोक्ताऽस्तीत्यपवादेन स्यादक्षरनयोदयः ॥

१-३-४ उक्ताऽदृष्टद्रष्टृताऽत्र न संश्लिष्यत इत्यतः ।
भवेदीक्षतिकर्माधिकरणे प्रत्युदाहृतिः ॥

१-३-५ निर्णीतः प्राक्पुरिशयः पुरुषश्रुतिवैभवात् ।
प्रत्युदाहृतिसङ्गत्या दहराधिक्रियोत्थितिः ॥
१-३-६ ब्रह्मणोऽस्त्वल्पमानत्वं प्रमिताधिकृतौ पुनः ।
तद्विशेषश्रुतेर्जीवस्स्यादिति प्रत्युदीर्यते ॥
१-३-७ उपासनं मनुष्याधिकारं चेत्प्रमितोक्तितः ।
देवाधिकारापवादः देवतानयवारितः ॥ 55
१-३-८ यद्यप्युपास्तिसामान्ये स्यात्सामर्थ्यादिसंभवः ।
प्रत्युदाहरणत्वेन मध्वादिनयसंभवः ॥
१-३-९ शूद्रो विद्याधिकारी स्यात् सामर्थ्यार्थित्वयोगतः ।
इत्याशङ्कापवादार्थमपशूद्रनयोदयः ॥
१-३-१० प्रसक्तानुप्रसक्तञ्चेत्थमधिकारचतुष्टयम् ।
दह्रनीत्युत्थापवादमर्थान्तरनयोऽच्छिनत् ॥
एवं चतुष्पेटिकोऽयं दशाधिकरणात्मकः ।
अध्याये प्रथमे पादस्तार्तीयीकस्सुसङ्गतः ॥

इति नयसङ्गतिमालिकायां प्रथमस्य तृतीयः पादः.

आद्याध्याये तुर्यपादे नीत्यष्टकमसूत्रयत् ।
तत्र षड्भिर्नयैस्साङ्ख्यान् द्वाभ्यां यौगानशीशमत् ॥ 60
१-४-१ मुक्तवैलक्षण्यमुक्तं प्राक्पादान्ते न युज्यते ।
परस्यैव प्रतिक्षेपादाक्षेपो ह्यानुमानिके ॥
१-४-२ पारिशेष्यस्थानमाने नाजावाक्ये स्त इत्यतः ।
प्रत्युदाहरणत्वेन चमसाख्यनयोदयः ॥
१-४-३ वाक्यान्तरस्य चाभावात् तत्त्वसङ्ख्याविरोधतः ।
सङ्ख्योपसंग्रहनये शङ्कातः प्रत्युदाहृतिः ॥
१-४-४ यस्मिन्निति पुरा प्रोक्तमाश्रयत्वं न विद्यते ।
इत्याशङ्का कारणत्वनयेऽतः प्रत्युदाहृतिः ॥
१-४-५ सिद्धान्तः प्राक्प्रकरणात् ईक्षितृत्वादियोगतः ।
जीवलिङ्गात् जगद्वाचिनयस्स्यादपवादतः ॥ 65

१-४-६ अन्यथोपपत्त्याख्यन्यायस्यात्र त्वसंभवात् ।
शङ्कातो वाक्यनीतौ स्यात् प्रत्युदाहृतिसङ्गतिः ॥
१-४-७ उक्तं ह्युभयहेतुत्वं सर्वविज्ञानतः पुरा ।
प्रकृत्यधिकृतौ तस्य सम्यगाक्षिप्य निर्णयः ॥
१-४-८ सर्वत्रोक्तप्रकारेण निर्वाहः स्वयमूह्यताम् ।
इति चात्रातिदिश्यन्ते प्रागुक्तास्सर्वनीतयः ॥
इत्थमष्टाधिकरणी पेटिकाद्वयसङ्गता ।
आद्याध्याये तुर्यपादे सन्दर्भं समुपागमत् ॥

इति नयसङ्गतिमालिकायां प्रथमस्य तुरीयः पादः, अध्यायश्च.

अथाविरोधाध्याये द्वौ पादौ कारणमूलकम् ।
अनन्तरौ कार्यमूलं विरोधं च निरास्थताम् ॥ 70
आद्ये स्यात्पेटिकायुग्मं द्वाभ्यामप्यष्टभिर्नयैः ।
स्मृत्या तर्कैश्च सञ्जातः विरोधो भज्यते क्रमात् ॥
२-१-१ सर्वव्याख्यानाधिकृतावीप्सिते चोपबृंहणे ।
सांख्यस्मृत्याऽपवादेन स्मृतिन्यायः प्रवर्तते ॥
२-१-२ योगस्मृत्याऽपवादे तु पूर्वन्यायातिदेशतः ।
योगप्रत्युक्त्यधिकृतिः सङ्गतिस्त्वातिदेशिकी ॥
२-१-३ विलक्षणत्वाधिकृतौ सांख्यस्तर्कावलम्बनः ।
पुनः प्रत्यवतिष्ठेत तस्मादाक्षेपसङ्गतिः ॥
२-१-४ शिष्टापरिग्रहनये योगाद्यास्तर्कसाधनाः ।
अतिदेशान्निरस्यन्ते सङ्गतिस्त्वातिदेशिकी ॥ 75
२-१-५ प्राक् शरीरात्मभावेन कृतास्सर्वोपपत्तयः ।
वैलक्षण्यापवादोऽतः भोक्त्रापत्तिनयोदयः ॥
२-१-६ वैलक्षण्ये कार्यहेत्वोरसत्कार्याभ्युपागमात् ।
आरम्भणाधिकरणमपवादनिरासकृत् ॥
२-१-७ सर्वतोऽनन्यता स्याच्चेत् ईश्वरस्स्यादनीश्वरः ।
अपाकृतोऽपवादोऽयं तदनन्तरनीतितः ॥

२-१-८ वैलक्षण्यं सत्यकामत्वादिभिः प्रतिपादितम् ।
तन्नोपपद्यत इति ह्याक्षेपोऽत्र निवार्यते ॥
२-१-९ क्षीरोदकादिकं सांशं निरंशं ब्रह्म संमतम् ।
कृत्स्नप्रसक्त्यधिकृतौ सङ्गतिःप्रत्युदाहृतिः ॥ 80
२-१-१० प्रयोजनं विना नेशो विचित्रं स्रष्टुमर्हति ।
इति प्रयोजननये प्रोक्तमाक्षेपदूषणम् ॥
एवं द्वितीयाद्यपादे मिथस्समगमन् क्रमात् ।
पेटिकाद्वयगूढानि दशाधिकरणान्यपि ॥

इति नयसङ्गतिमालिकायां द्वितीयस्य प्रथमः पादः.

एवं बाधः परिहृतः प्रतिपक्षो निरस्यते ।
पार्श्वस्थसंशयोच्छित्त्यै द्वितीये चरणे पुनः ॥
२-२-१ विफला चित्प्रवृत्तिश्चेत् तादृश्येवाचिता वरम् ।
इति शङ्काऽपोद्यतेऽत्र रचनासम्भवात्पुनः ॥
२-२-२ ईश्वराधिष्ठितैरेव जगत्स्यात्परमाणुभिः ।
महद्दीर्घाधिकरणे शङ्कैषा प्रत्युदीर्यते ॥ 85
२-२-३ संघातवादे प्रारम्भवाददोषो न विद्यते ।
समुदायनये चापि शङ्कैषा प्रत्युदीर्यते ॥
२-२-४ वस्त्वस्ति यदि बाह्यं तत् प्रोक्तदोषः प्रसज्यताम् ।
इत्यतोऽथाभावनयः प्रत्युदाहृतिसङ्गतेः ॥
२-२-५ न हि सर्वाभाववादे कोऽपि दोषः प्रसज्यते ।
इति माध्यमिको वादः प्रत्युदाहृतिसङ्गतः ॥
२-२-६ अथ सार्वात्म्यवादेन सर्वदोषनिराकृतिम् ।
अभ्युपेत्यार्हतनयस्योदयात्प्रत्युदाहृतिः ॥
२-२-७ तन्त्रं पाशुपतं सर्वसम्भवास्पदमिष्यताम् ।
इति शङ्कासम्भवेन चात्रापि प्रत्युदाहृतिः ॥ 90
२-२-८ पाञ्चरात्रे तन्त्रसाम्यात्प्रामाण्यं चेदपोद्यते ।
उत्पत्त्यसम्भवनयः प्रामाण्यं प्रत्यतिष्ठिपत् ॥

इत्थमष्टाधिकरणी पेटिकाद्वयगर्भिता ।
शारीरके तर्कपादे सन्दर्भं समुपागमत् ॥

इति नयसङ्गतिमालिकायां द्वितीयस्य द्वितीयः पादः.

एवं निरस्तोपरोधा ब्रह्मकारणता स्थिता ।
निराबाधा कार्यताऽपि वर्तते पादयोर्द्वयोः ॥
अत्र पादद्वयमपि पेटिकाद्वयलक्षणम् ।
आद्या सप्ताधिकरणी द्वितीयाऽष्टनयात्मिका ॥

२-३-१ औपचारिकमित्युक्तं प्राग्जीवोत्पत्तिभाषितम् ।
तथेति वियदुत्पत्तिवादस्स्यादित्यपोद्यते ॥ 95

२-३-२ साक्षात्तु ब्रह्मकार्यत्वं न स्यात्तेजोजलादिषु ।
इति तेजोऽधिकरणे शङ्का पुनरपोद्यते ॥

२-३-३ प्रागुक्तयुक्तया जीवोऽपि कार्यस्स्यादिति संशयात् ।
आत्माधिकरणं प्राप्तमपवादाख्यसंगतेः ॥

२-३-४ ज्ञानरूपस्य जीवस्यानुत्पत्त्यैव व्यपोदिते ।
स्वभावेऽप्यन्यथाभावे स्यात् ज्ञाधिकरणोदयः ॥

२-३-५ ज्ञानैकगुणसारस्य निर्विकारस्य चात्मनः ।
अपोदिते च कर्तृत्वे भवेत्कर्तृनयोदयः ॥

२-३-६ स्वातन्त्र्यविनिवृत्त्यैव कर्तृत्वं विनिवर्तते ।
इत्याक्षेपं समाधातुं परायत्तनयोदयः ॥ 100

२-३-७ परायत्ते च कर्तृत्वे परांशत्वं विरुध्यते ।
इति प्राप्तेऽपवादेऽथ स्यादंशाधिकृतिः पुनः ॥
इत्थं सप्ताधिकरणी द्वितीयाध्यायवर्तिनि ।
तृतीयपादे ग्रथिता संगत्यौवानया मिथः ॥

इति नयसंगतिमालिकायां द्वितीयस्य तृतीयः पादः.

२-४-१ आत्माधिकरणार्थस्यैवातिदेशो भवेदिह ।
प्राणाधिकरणे तस्मादातिदेशिकसंगतिः ॥

२-४-२ तथेन्द्रियाणां कार्यत्वमुक्तं तस्य प्रसंगतः ।
संख्याचिन्ताऽधुना तेषां स्यात्सप्तगतिनीतितः ॥

२-४-३ प्रसंगेनैवेन्द्रियाणां प्राणानामेव चिन्त्यते ।
प्राणाणुत्वाधिकरणेऽणुत्वं वृत्तिविकासिनाम् ॥ 105

२-४-४ मुख्यप्राणस्वरूपेऽपि विवादानां बहुत्वतः ।
वायुक्रियाधिकरणे प्रसंगात्तत्त्वनिर्णयः ॥

२-४-५ श्रेष्ठप्राणस्य कार्यत्वं स्वरूपं चोपवर्णितम् ।
श्रेष्ठाणुत्वाधिकरणेऽणुत्वं चापि प्रसंगतः ॥

२-४-६ प्राणानां जन्यतेयत्ता परिमाणप्रसंगतः ।
अग्न्यादिदेवतानां चाधिष्ठानं तत्र चिन्त्यते ॥

२-४-७ प्राणेन्द्रियाविभागेन विचारो विफलस्त्विति ।
आक्षेपपरिहारार्थं स्यादिन्द्रियनयोदयः ॥

२-४-८ समष्टिसृष्टौ हेतुत्वं स्यादेव परमात्मनः ।
संज्ञामूर्तिनये व्यष्टौ जीवस्य तदपोह्यते ॥ 110

इति नयसंगतिमालिकायां द्वितीयस्य तुरीयः पादः अध्यायश्च.

वैराग्यमुभयं लिङ्गं विद्या विद्याङ्गमेव च ।
तार्तीयीकाध्यायपादप्रधानार्था इमे मताः ॥

३-१-१ कृतो मूर्तिप्रसंगः प्रागिह मूर्त्यन्तरग्रहे ।
तदन्तरनये भूतसूक्ष्मयोगो निरूप्यते ॥

३-१-२ अथैकभविकन्यायात्कर्मशेषविलोपने ।
भुक्तशिष्टस्य संबन्धः कृतात्ययनयोदितः ॥

३-१-३ प्राक्छ्रुतेष्टापूर्तदत्तकारिणां चन्द्रमोगतिः ।
आशङ्क्य सैषाऽनिष्टादिकारिणां प्रतिषिध्यते ॥

३-१-४ इष्टादिकारिणामत्र मृगाङ्कादवरोहताम् ।
तत्स्वाभाव्यापत्तिनीत्याऽब्रादिभावपरिष्क्रिया ॥ 115

३-१-५ अभ्रादिभावावस्थायां चिराचिरविचारणा ।
कृता नातिचिरन्याये जीवदुःखप्रसिद्धये ॥

३-१-६ व्रीह्यादिभावो जीवानामवरूढवता मिह ।
आश्लेषोऽऽन्याधिष्ठितेन तेन व्रीह्यादिनोच्यते ॥
इत्थं तृतीयाध्यायाद्यपादे षण्णीतयः क्रमात् ।
प्रसङ्गसङ्गत्यैवैकपेटिकान्तर्गता मिथः ॥

इति नयसङ्गतिमालिकायां तृतीयस्य प्रथमः पादः

३-२-१ जाग्रद्दोषविनिर्मुक्तः जीवः स्वप्नदशास्थितः ।
निर्दोष इति शङ्कैषा सांख्यनीत्या प्रतीर्यते ॥
३-२-२ स्वाप्नो जीवोऽथ दुष्टोऽस्तु सौषुप्तो दोषवार्जितः ।
तदभावनये चैषा शङ्कैव प्रत्युदीर्यते ॥ 120
२.३-३ कर्मानुस्मृत्यधिकृतौ सुषुप्तान्यसमुत्थितौ ।
निर्दोषो जीव एव स्याच्छङ्कैषा प्रत्युदीर्यते ॥
३-२-४ उक्तावस्थात्रयस्थस्य दोषभूयस्त्वसिद्धये ।
मुग्धन्यायस्संप्रवृत्तः तेनोपोद्घातसंगतिः ॥
३-२-५ अथात्रोभयलिङ्गाधिकरणे परमात्मनः ।
चेतनत्वेन सामान्यात्प्राप्तो दोषो व्यपोद्यते ॥
३-२-६ तथाहिकुण्डलनये प्रोक्तशुद्धिविशुद्धये ।
अचितो ब्रह्मरूपत्वं तेनोपोद्घातसंगतिः ॥
३-२-७ उपादानात्प्रपञ्चस्य निमित्तं परमिष्यते ।
विशुद्धं तत्त्वमित्येवं चोद्यं परनयोच्छिनत् ॥ 125
३-२-८ फलप्रदं यदा कर्म कारणोपासना तदा ।
व्यर्थेत्याक्षेपशान्त्यर्थं दाता फलनयोदितः ॥
इत्थमष्टाधिकरणी पेठिकाद्वयभूषिता ।
तृतीयस्य द्वितीयेऽस्मिन् पादेऽन्योन्यं सुसङ्गता ॥

इति नयसङ्गतिमालिकायां तृतीये द्वितीयः पादः

उपासनाप्रसन्नेशफलदत्वप्रसङ्गतः ।
अनुष्ठानोपयोगाय तद्भेदाभेदचिन्तना ॥

३-३-१ शाखान्तराधिकरणप्रोक्तयुक्तिसमुच्चयात् ।
तद्वैश्वानरविद्याऽऽदौ सर्ववेदान्तनीतितः ॥
३-३-२ अथान्यथात्वाधिकृतौ प्राग्वैश्वानरनीतिवत् ।
उद्गीथोपासनानामप्येकताऽपोद्यतेऽधुना ॥ 130
३-३-३ सर्वाभेदाधिकरणे रूपभेदनिदानतः ।
प्राणविद्याभेदशङ्काऽपोद्यतेऽन्तर्गतत्वतः ॥
३-३-४ सत्यादिविद्या भिन्ना स्यात्प्रक्रियारूपभेदतः ।
इति शङ्काऽऽनन्दनये स्वरूपात्प्रत्युदीर्यते ॥
३-३-५ कार्याख्यानाधिकरणे प्राणवासस्त्वचिन्तना ।
नियतेत्याह पूर्वाधिकरणन्यायसाम्यतः ॥
३-३-६ समानाधिकृतौ चापि रूपभेदाभिमानतः ।
विद्याभेदोऽपोद्यतेऽन्तर्गतं हि वशितादिकम् ॥
३-३-७ अथ संबन्धाधिकृतौ रूपाभेदाभिमानतः ।
अक्ष्यर्कविद्यैक्यशङ्काऽपोद्यते स्थानभेदतः ॥ 135
३-३-८ संभृत्यधिकृतौ स्थानभेदाभावनिबन्धना ।
व्याप्तिस्सर्वगता स्यादित्याशङ्का प्रत्युदीर्यते ॥
३-३-९ ब्रूते पुरुषविद्याधिकृतिः सन्निधिमानतः ।
पुंविद्यां परविद्याङ्गं साधर्म्यादिह याजुषीम् ॥
३-३-१० अथ वेधाद्यधिकृतौ पुंविद्योक्तप्रयत्नतः ।
शुक्रमित्यादिमन्त्राणां शङ्किताऽपोद्यतेऽङ्गता ॥
३-३-११ प्रोच्यते हान्यधिकृतौ प्राग्यथा कर्मशेषता ।
तथैव वस्तुसामर्थ्यलिङ्गादन्योन्यशेषता ॥
३-३-१२ सांपरायाधिकरणे हानोपायनचिन्तना ।
स्थाप्यते कालनिष्कर्षात्तेनोपाद्धातसंगतिः ॥ 140
३-३-१३ तथैवानियमन्याये सर्वेषामर्चिरादिका ।
गतिश्चेत्पूर्वसिद्धान्ताः भवेयुरुपपादिताः ॥
३-३-१४ अथाक्षरध्यधिकृतौ अर्चिरादिगतेरिव ।
स्युः सम्भन्धोऽक्षरधियामिति दृष्टान्तसंगतिः ॥

३-३-१५ ब्रह्मणो हेयराहित्यात् प्राणनादेरसम्भवात् ।
अन्तरत्वाधिकरणे जीवशङ्का व्यपोह्यते ॥
३-३-१६ कामाद्यधिकृतौ पूर्वन्यायेन वशितादिकम् ।
नियतं स्यादितीयं तु शङ्काऽपि प्रत्युदीर्यते ॥
३-३-१७ स्यात्तन्निर्धारणन्याये प्राङ्न्यायाधीनशङ्कया ।
उद्गीथोपासनानां च नियमोऽपि व्यपोह्यते ॥ 145
३-३ १८ अपवादसमायातं पूर्वाधिकरणं ततः ।
स्यात्प्रधानाधिकरणं कामाधिकृतिशेषतः ॥
३-३-१९ प्राक्सर्वदहविद्यैक्ये प्रक्रियाबलसंमते ।
लिङ्गभूयस्त्वाधिकृतौ वाक्यात् शङ्का व्यपोह्यते ॥
३-३-२० अपवादकवाक्यस्याभावात् प्रकरणात्पुनः ।
शङ्का पूर्वविकल्पाख्यनयेन प्रत्युदीर्यते ॥
३-३-२१ अथासक्तेरतिशयात् तत्कालाकारचिन्तनम् ।
उपासकेऽपोह्यतेऽथ शरीरेभावनीतितः ॥
३-३-२२ पूर्वाधिकृतिसिद्धान्तादासक्त्यतिशयेऽपि च ।
अङ्गावबद्धनीत्या स्यात् सर्वोद्गीथसमन्वयः ॥ 150
३-३-२३ उद्गीथोपासनन्यायाद्वैश्वानरमतावपि ।
समस्तव्यस्तताऽऽशङ्का भूम्नोन्यायादपोह्यते ॥
३-३-२४ नानाशब्दाधिकरणे वैश्वानरनयक्रमात् ।
सदक्षिहार्दादिधियामैक्यशङ्का व्यपोह्यते ॥
३-३-२५ विद्याभेदव्यवस्थायामेकस्यैवाधिकारिणः ।
समुच्चयस्यापवादः विकल्पाधिक्रियोदितः ॥
३-३-२६ उद्गीथोपास्तिनियमः विकल्पनियमो यथा ।
इतिशङ्काऽपोह्यतेऽत्र यथाश्रयनये पुनः ॥
एवं तृतीयाध्यायेऽस्मिन् तृतीयेचरणेऽपि च ।
षड्विंशत्यधिकाराणां सङ्गतिस्समुदाहृता ॥ 155

इति नयसङ्गतिमालिकायां तृतीयस्य तृतीयः पादः.

चतुर्भिस्सप्तभिः द्वाभ्यां द्वाभ्यां न्यायैश्चतुर्विधैः ।
अङ्गपादे पञ्चदशाधिक्रियाणां समन्वयः ॥

३-४-१ नोद्गीथोपास्तिवत् ब्रह्मोपास्तेः क्रत्वर्थतेष्यते ।
पुरुषार्थाधिकरणे सङ्गतिः प्रत्युदाहृतिः ॥

३-४-२ ब्रह्मसंस्थार्थवादत्वाभावेऽप्याश्रमवाक्ययोः ।
शङ्कोद्गीथार्थवादत्वे स्तुतिनीत्या प्रतीर्यते ॥

३-४-३ उद्गीथोपास्तिविधिवत् पारिप्लवविधिर्भवेत् ।
इति शङ्कापोद्यतेऽथ विद्यार्थत्वव्यवस्थया ॥

३-४-४ स्तुतिप्रसक्तौ न्यायौ द्वौ पारिव्राज्ये स्थिते सति ।
कर्मणोऽनङ्गताऽऽशङ्काऽपोद्याऽग्नीन्धननीतितः ॥ 160

३-४-५ यज्ञानपेक्षा विद्यैषा स्यादग्नीन्धननीतिवत् ।
इति शङ्काऽपोद्यतेऽथ सर्वापेक्षानये पुनः ॥

३-४-६ गृहस्थस्यापि विद्या चेत् शान्तिदान्त्याद्ययोगतः ।
शमाद्यनङ्गताऽऽशङ्का शमनीत्या व्यपोद्यते ॥

३-४-७ नापेक्षेत प्राणविद्या शममाहारगोचरम् ।
इति सर्वान्नानुमतिन्यायात् शङ्का व्यपोदिता ॥

३-४-८ एवं कर्माखिलं ज्ञाने विदुषां चेत्समाप्यते ।
अन्येषां स्वैरिताक्षेपापवादो विहितत्वतः ॥

३-४-९ चेद्विद्याऽऽश्रमधर्माङ्गा नाधिकुर्यादनाश्रमी ।
इत्याक्षेपोपोऽद्यतेऽथान्तराचापिनये पुनः ॥ 165

३-४-१० आरूढपतितानामप्यधिकारो भवेदिति ।
शङ्का तद्भूताख्यनये वचनेन व्यपोद्यते ॥

३-४-११ उद्गीथोपासने ऋत्विङ्नाधिकुर्यात्फलश्रुतेः ।
इत्याक्षेपोऽपोद्यतेऽथ स्वामिनीतौ प्रसङ्गतः ॥

३-४-१२ कर्माविरोधान्मननं सहकार्यन्तरं मतम् ।
प्राक्पञ्चमनयेनास्य सङ्गतिस्त्वापवादिकी ॥

३-४-१३ विद्याकर्मविरुद्धत्वात् बाल्यं नैवाङ्गमिष्यते ।
इत्याक्षेपापवादस्स्यादनाविष्कृतिनीतितः ॥

३-४-१४ कर्म नाङ्गं भोगहेतूपासने व्यभिचारतः ।
इत्याक्षेपप्रतिक्षेपः स्यादैहिकनयादिह ॥ 170
३-४-१५ एवं मुक्तिफलोपास्तौ प्रोक्तो न्यायोऽतिदिश्यते ।
ततश्चानियमः प्रायः प्रबलं प्रतिबन्धकम् ॥
एवं तृतीयाध्यायस्य तुर्ये पादे सुसङ्गता ।
अधिक्रियापञ्चदशी बहुसङ्कीर्णनिर्णया ॥

इति नयसङ्गतिमालिकायां तृतीयस्य तुरीयः पादः तृतीयश्चाध्यायः.

अथतुर्याध्यायपादप्रधानार्था मता इमे ।
अघाश्लेषोत्क्रान्तिमार्गपरब्रह्मोपसंपदः ॥
पेटिकाद्वयमाद्याङ्घ्रौ एका विद्याविशोधिनी ।
नीतिषट्काऽपरा नीतिपञ्चका फलबोधिनी ॥
४-१-१ शास्त्रार्थस्य सकृत्त्वे तु केयं निष्पत्तिचिन्तना ।
इत्याक्षेपं प्रतिक्षेप्तुमावृत्तिन्यायसंभवः ॥ 175
४-१-२ साक्षात्सदाऽऽत्मनः स्फूर्तौ काऽसावावृत्तिसाध्यता ।
इत्याक्षेपं प्रतिक्षेप्तु मात्मत्वोपास्त्यधिक्रिया ॥
४-१-३ स्वात्मत्वेनोपास्तिरूपा विद्यौपनिषदी यदि ।
प्रतीकोपासनेऽप्येवमाक्षेपोऽपि व्यपोद्यते ॥
४-१-४ पुरापकृष्टे तूत्कृष्टदृष्टिः न्याय्येत्युदीरिता ।
आदित्यादाविहोद्गीथदृष्टिशङ्का व्यपोद्यते ॥
४-१-५ आवर्तव्या यद्युपास्तिः स्वैरमावृत्तिरिष्यते ।
इति शङ्काऽपवादः स्यादासीनाधिकृतौ पुनः ॥
४-१-६ आवृत्ताऽप्युपसंहार्या स्वेच्छयेत्येष संशयः ।
आप्रयाणाधिकरणेऽपोद्यते श्रुतिदर्शनात् ॥ 180
४-१-७ प्राचीनपापानन्त्येन प्रायणान्ताऽप्युपासना ।
फलायानवकाशेति चाक्षेपोऽपि ततो हतः ॥
४-१-८ अथेतराधिकरणे पुण्यानन्त्येऽपि पूर्ववत् ।
नाशाश्लेषाविमौ प्रामादिकदुष्कर्मगोचरौ ॥

४-१-९ तथाऽनारब्धातिरिक्तविषयावित्यपि स्थितिः ।
नातोऽध्यक्षविरोधस्स्यादित्याक्षेपः प्रशाम्यति ॥
४-१-१० सुकृतस्स्याप्यसंश्लेषे स्वैराचारः प्रसज्यते ।
इत्याक्षेपस्यापवादः ह्यग्निहोत्रनये पुनः ॥
४-१-११ अग्निहोत्रादिसुकृतात् प्रारब्धस्य विनाशनम् ।
इत्याक्षेपस्यापवादः भोगान्तत्वव्यवस्थितेः ॥ 185
इत्थं तुरीयाध्यायस्य पादे प्राथमिके पुनः ।
एकादशानां न्यायानां क्रमात्सङ्गतिसंग्रहः ॥

इति नयसङ्गतिमालिकायां चतुर्थस्य प्रथमः पादः

अत्र सप्तचतुस्संख्यैः न्यायैस्स्यात्पेटिकाद्वयम् ।
क्रमेण सामान्यगतिविशेषगतिगोचरम् ॥
४-२-१ प्रारब्धान्तेऽप्यनियतोत्क्रान्तौ फलविलम्बनम् ।
इत्याक्षेपं प्रतिक्षेप्तुं वागादिन्यायचिन्तना ॥
४-२-२ ततो मनोधिकरणं प्रत्युदाहरणागतम् ।
तत्सर्वं फलपर्वत्वाद्योगिचिन्त्यं विचिन्त्यते ॥
४-२-३ उक्तं श्रौतं क्रमं ज्ञात्वा पूर्वपक्षस्य संभवात् ।
आपवादिकसंङ्गत्या स्याद्ध्यक्षनयोदयः ॥ 190
४-२-४ यथाश्रुतार्थमादाय पूर्वपक्षसमुद्भवात् ।
भूताधिकरणे चापि प्रोक्ताऽऽशङ्का व्यपोदिता ॥
४-२-५ अत्र ब्रह्माश्नुते विद्वानिति स्पष्टमनुश्रवात् ।
उत्क्रान्त्याक्षेपसंशान्त्यै आसृतिन्यायचिन्तना ॥
४-२-६ उत्क्रान्तिमध्ये विश्रान्तेर्वैफल्याक्षेपशान्तये ।
फलस्य कल्पनायैव परसंपत्त्यधिक्रिया ॥
४-२-७ परसंपत्तिसत्त्वै सा लय एव भविष्यति ।
इति शङ्कापवादायाविभागनयनिर्णयः ॥
४-२-८ गतिसामान्येऽपि नाडी दुर्विवेका यदा भवेत् ।
अनैयत्योदिताऽऽशङ्का तदोकोनीत्यपोदिता ॥ 195

४-२-९ रात्रियाने रश्म्यभावादर्चिन्त्या गतिचिन्तना ।
इत्याक्षेपापवादोऽपि रश्म्यनुन्यायगोचरः ॥
४-२-१० सत्सु सौरेषु तेजस्सु कालदोषनिबन्धनम् ।
प्रतिहन्तुमिहाक्षेपं निशाधिकरणं मतम् ॥
४-२-११ दक्षिणायनयाने तु चन्द्रमःप्राप्तिसंभवात् ।
निर्निरोधगतिस्थित्यै दक्षिणायननिर्णयः ॥
एवं चतुर्थाध्यायस्य द्वितीये चरणेऽपि च ।
द्विपेटिकान्तरक्षाधिकरणानि समागमन् ॥

इति नयसंगतिमालिकायां तुरीयस्य द्वितीयः पादः

४-३-१ कालदोषप्रशान्तावप्यर्चिरध्वाव्यवस्थितौ ।
विक्षेपान्मोक्षलाभस्याक्षेपोऽर्चिर्नीत्यपोदितः ॥ 200
४-३-२ शाखाविरोधशान्तावप्यवान्तरविकल्पतः ।
विक्षेपस्यापवादाय वायुन्यायसमुद्भवः ॥
४-३-३ वरुणाधिक्रियाऽप्येवमन्तस्संशयभेदिनी ।
योगाङ्गत्वेनार्चिरादिचिन्तनं निरुपद्रवम् ॥
४-३-४ आतिवाहिकनीतावप्येवं विशयधूननम् ।
आक्षेपो वाऽपवादो वा संगतिस्त्ववधार्यताम् ॥
४-३-५ आतिवाहिकनिर्णीतावप्यतिवाह्याव्यवस्थितौ ।
वैफल्याक्षेपसंशान्त्यै कार्याधिकरणोदयः ॥
तृतीयपादे पञ्चाधिकरण्युभयसंपुटा ।
मार्गातिवाहविशयापुनरङ्कुरशान्तये ॥ 205

इति नयसंगतिमालिकायां तुरीयस्य तृतीयः पादः

तुर्याऽध्याये तुर्यपादे पेटिकाद्वयभूषिते ।
त्रिकद्विकाविभागेन मुक्तैश्वर्यं निरूप्यते ॥
४-४-१ मुक्तिः स्वरूपाविर्भावश्चेत्सुषुप्तिरपीदृशी ।
मार्गादिचिन्तावैयर्थ्यं संपन्नीत्या व्यपोदितम् ॥

४-४-२ अविभागेनेतिनये स्वरूपार्थविनिर्णयात् ।
उपोद्घातप्रक्रियया संगतिः वेदितुं क्षमा ॥
४-४-३ ब्राह्माधिकरणेचापि प्रक्रिया प्रागुदीरिता ।
प्रोक्तैव संगतिरपि तन्त्रिकं ह्येकपेटिका ॥
४-४-४ एवं मुक्तस्य चैश्वर्ये सर्वभोगात्मके सति ।
पर्यायेणैष संसार इत्याक्षेपोऽथ वारितः ॥ 210
४-४-५ अविघातेच्छमैश्वर्यं संकल्पनयबोधितम् ।
अनन्तरनये प्रायेणान्तरातङ्कशोधनम् ॥
४-४-६ जगद्व्यापारविरहे संपत्सावधिका भवेत् ।
इत्याक्षेपप्रतिक्षेपः जगद्व्यापारनीतितः ॥
एवं षण्णीतयः पादे तुरीये तुर्यलक्षणे ।
समागमन् शास्त्रसारनिरूपणपरे शुभम् ॥
षट्पञ्चाशद्युतशतामिताधिकरणावलेः ।
आचार्यसूक्तिकुसुमपूर्णा संगतिमालिका ॥
इमां श्रीभाष्यनिर्णीतनयसंगतिमालिकाम् ।
समर्पितां मोदते स्म प्रतिगृह्य श्रियः पतिः ॥ 215
मालैषा संग्रहेच्छूनां मोदाय समगृह्यत ।
लक्ष्मीपुरं श्रीनिवासविपश्चिच्चक्रवर्तिना ॥ 216

इति नयसंगतिमालिकायां चतुर्थाध्यायस्य चतुर्थः पादः
अध्यायश्च समाप्तः.

इति श्रीवत्सकुलतिलकस्य लक्ष्मीपुराभिजनश्रीनिवासाचार्यस्य
कृतिषु श्रीभाष्यनयसंगतिमलिका संपूर्णा.

षट्पञ्चाशद्युतशतविषयावलिगुम्भितम् ।
श्रीभाष्यभूषणं नाम जीयात् श्रीभाष्यटिप्पणम् ॥
श्रीभाष्यभूषणमिदमात्मविद्याशुशुत्सया ।
लक्ष्मीपुरं श्रीनिवासदासेन परिकर्मितम् ॥
चतुस्सूत्र्यन्तभाष्योक्तन्यायैस्सर्वोऽनुगम्यते ।
श्रीभाष्यार्थ इति ज्ञात्वा कृतं संक्षिप्तभूषणम् ॥

विदितसकलवेद्यैः दर्शितार्थांशलेशैः
ग्रथितमिदमपूर्वं भूषणं भाष्यसूक्तेः ।
विकसितमतितायै गुम्भितं संपुटेऽस्मिन्
निखिलमतनिशान्ते क्षन्तुमर्हन्ति सन्तः ॥

इति श्रीमत्सत्संप्रदायसदाचार्यसुशिक्षितमतिना गुणगुरुश्रीभाष्यकारसुतवेंकटस्वामि-
तनयेव श्रीमद्विरक्तराघवार्यकरुणाकटाक्षविषयीकृतेन श्रीमत्पण्डितरत्न-
कस्तूरीरंगनाथकृपासमासादितसारस्वतसर्वस्वेन श्रीमन्महीशूर-
महाराजतुर्य श्रीकृष्णराजपारेपोषितेन लक्ष्मीपुराभिजन-
श्रीनिवासाचार्येण महामहोपाध्यायेन पण्डितरत्ने-
नास्थान धर्माधिकारिणा प्रणीतमिदं श्रीभा-
ष्यभूषणंनाम भगवद्रामानुजाचार्य
शारीरकभाष्यस्य विवरणं
समाप्तम् .

वासुदेवः प्रीयताम्

---

# आगमसारः

## आगमशब्दार्थः

**वासुदेवं नमस्कृत्य सर्वव्यापकमीश्वरम् ।**
**लिखाम्यागमसाराख्यं प्रबन्धं सर्वसंमतम् ॥**

प्रायेण हि शब्दानामिह जगति प्रयोगः स्वार्थविरुद्धार्थव्यावृत्तिविवक्षान्वयव्यतिरेकानुविधायीति प्रस्पष्टं शास्त्रमर्यादापरिचयवताम् । प्रपञ्चे खल्वस्मिन् सर्वस्यापि वस्तुनः शुक्लरूपमेकमेव यदि स्यात् तदा शुक्लपदमेव नोदीयात् प्रयोजनाभावात् । अतएव गवादिपदानां प्रवृत्तिनिमित्तपरीक्षायां अपोहश्शब्दार्थ इति व्यतिरेकनिष्ठाः सौगताः प्राहुः । तदनुयायिन एव प्राञ्चः प्रायः निर्विशेषतत्त्ववादाभिलाषिणः ॥

अन्वयनिष्ठाः पुनः गवादिपदानां प्रवृत्तिनिमित्तं भावरूपं गोत्वादिजातिलक्षणमिति, तेनैवेतरव्यावृत्तिः फलतीति प्राहुः । लाघवाभिलाषिणो निरूपकास्तु जातिरूपो वा आकाररूपो वा असाधारणो धर्म एव इतरव्यावृत्तिरिति समरसयन्ति ॥

ततश्चेदानीं पदानामर्थनिर्णयं चिकीर्षूणामस्माकं प्रथमं यस्य पदस्यार्थविषयिणी जिज्ञासा वर्तते तस्य पदस्य प्रतिद्वन्द्विभूतं पदं मनसि कृत्वा प्रवृत्तिनिमित्तनिर्णयः कर्तव्यो भवति ॥

प्रकृते खलु आगमपदस्यार्थः क इति जिज्ञासायां तत्प्रतिद्वन्द्विभूतं निगमपदं धियमधिरोहति बहुशास्त्रपरिचयवताम् । तस्य च निगमपदस्यार्थः क इति जिज्ञासायां ऋग्वेदभाष्यभूमिकायां यास्कनिरुक्तग्रन्थप्रयोजनवर्णनावसरे श्रीमान् माधवाचार्यः प्राहैवम् " निगम-

शब्दो वेदवाची, यास्केन तत्रतत्र निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात्। तस्मिन् निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन् काण्डे उपदिष्टत्वात् तस्य काण्डस्य नैगमत्वम्" इति॥

ततश्च पौरुषेयापौरुषेयभेदेन निगमागमव्यवहारो मुख्यः। अत एवोच्यते प्रमाणनयतत्त्वालोकालंकारे देवसूरिभिः (४-१) "आप्तवचनादाविर्भूतमर्थविशेषसंवेदनमागमः। उपचारादाप्तवचनं च—

**आगमो ह्याप्तवचनमाप्तिं दोषक्षयं विदुः।**
**क्षीणदोषोऽनृतं वाक्यं न ब्रूयाद्धेत्वसंभवात्॥ इति॥**

तथा—सांख्यसप्ततिव्याख्यायां जयमङ्गलायाम्—

**स्वकर्मणाऽभियुक्तो यो रागद्वेषविवर्जितः।**
**निर्वैरः पूजितस्सद्भिः आप्तो ज्ञेयस्स तादृशः॥ इति॥**

आप्तः क्षीणदोष इति। शब्दकल्पद्रुमे तु एवमुदाहृतम्—

**सृष्टिश्च प्रलयश्चैव देवतानां तथाऽर्चनम्।**
**साधनं चैवमन्त्राणां पुरश्चरणमेवच॥**
**षट्कर्मसाधनं चैव ध्यानयोगश्चतुर्विधः।**
**सप्तभिर्लक्षणैर्युक्तं त्वागमं तद्विदुर्बुधाः॥ इति॥**

ततश्च एवमवधारयामः—अनादेः कालात् निगमविरुद्धप्रस्थाननिष्ठैः सौगतार्हतादिभिः आगमसंप्रदायः समाश्रितः। ततश्च निगमसंप्रदायनिष्ठैरपि निगमानुकूल्येन सकलजनश्रेयःकामनयाऽऽगमसंप्रदायः प्रवर्तित इति॥

ततश्च वैदिकागमः अवैदिकागम इति विभागः परिनिष्पन्नः। तथापि केचिद्विद्याधीराः निगमसंरक्षणायागममात्रस्याप्रामाण्यं साधयन्ति॥ निगमानुकूल्यमेव स्मर्यतेऽपि च वाराहे पुराणे (आगम प्रा. ५७)—

**वेदेन पञ्चरात्रेण भक्त्या यज्ञेन च द्विज।**
**प्राप्योऽहं नान्यथा प्राप्यः वर्षलक्षशतैरपि॥ इति॥**

एतत्सर्वमवधार्य निगमागमसंप्रदाययोर्विदूरतामाशङ्क्य परकालसूरिभिरेव-मुक्तमिति पाञ्चरात्ररक्षायां (८८) श्रीवेदान्ताचार्यैः द्राविडं पद्यं संस्कृतीकृतम्—

स्तुतिजपनिजबिम्बालोकनध्यानसेवा
स्मृतिकथनसमर्चाकर्मभिः श्रौतदूरैः ।
वृषभशिखरिनाथ त्वामभीप्सन्ति केचित्
श्रुतिपथपरिनिष्ठप्रापणीयाङ्घ्रिपद्मम् ॥ इति ॥

आगमशब्दनिर्वचनमपि पौष्करसंहितागतं श्रीभाष्ये पाञ्चरात्रनये समुदाहृतम्—

कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते ।
क्रमागतैः स्वसंज्ञाभिः ब्राह्मणैरागमं तु तत् ॥

इति । अयमर्थः — यत्र चातुरात्म्योपासनं स्वसंज्ञाभिः नमश्शब्दाद्युपेतैः तत्तद्व्यूहनामभिः क्रमागतैः कर्तव्यत्वेन प्रतिपाद्यते स आगम इति । अत एवागमशास्त्रप्रवर्तकस्य सङ्कर्षणस्य आगम इति संज्ञा मूलश्रुतिसिद्धेति सहस्रनामभाष्ये (१९२) भाषितमस्ति ॥

"प्रतिक्षणपरिणामिनस्सर्वे भावाः" इति तत्त्वदर्शिनां निर्णयानुरोधेन सकलपदार्थवत् शब्दा अपि अर्थविषये प्रयोगपरम्परया विचित्रं परिणामं न भजन्तीति नशक्यं वक्तुम् । ततश्च आगमपदं शास्त्रमात्रे मन्वादिभिः प्रयुज्यते । यथा—(१२ अ.)

प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ इति ॥

हरिरप्याह वाक्यपदीये—

प्रज्ञाविवेकं लभते विभिन्नागमदर्शनैः ।
अनुपासितवृद्धानां विद्या नातिप्रसीदति ॥ इति ॥

ततश्च शब्दप्रमाणमात्रे इदानीमागमपदं प्रयुज्यते ॥

तन्त्रशब्दार्थः.

तथा तन्त्रपदमपि मन्त्रपदप्रतिद्वन्द्वितया प्रयुज्यते । स्वतन्त्रः परतन्त्र इत्यादौ तन्त्रपदमधीनमित्यर्थमवगमयति । ततोऽपि पुरुषाधीनमिति शक्यते समुल्लिखितुम् । न्यायभाष्येतु (१-१-२६) इतरेतराभिसंबन्धस्यार्थजातस्य उपदेशः शास्त्रं तन्त्रमित्युक्तम् । तन्त्रलक्षणमप्येवं तन्त्रविद्भिरुदीर्यते—(शैवदर्शने सर्वदर्श)—

**त्रिपदार्थं चतुष्पादं महातन्त्रं जगद्गुरुः ।**
**सूत्रेणैकेन संक्षिप्य प्राह विस्तरतः पुनः ॥ इति ॥**

चतुष्पादमित्यनेन विद्याक्रियायोगचर्याख्यैः चतुर्भिः पादैः सहितः प्रबन्धः महातन्त्रमिति सिद्ध्यति । विष्णुसंहितायां तु सप्तमपटले—

**सर्वेऽर्थाः येन तन्यन्ते त्रायन्ते च भयाज्जनाः ।**
**इति तन्त्रस्य तन्त्रत्वं तन्त्रज्ञाः परिचक्षते ॥**

इति श्रूयते । अनेन मननान्मन्त्रः तननात् तन्त्र इति सिध्यति । तपोविशेषेण मनसा साक्षात्कृतो मन्त्रः । तदर्थस्य विस्तरेण निरूपणात् तन्त्रः । अयमपि विभागः पौरुषेयापौरुषेयरूप इत्येव फलति । अत एव वाराहतन्त्रे तन्त्रलक्षणमेवमुक्तमिति शब्दकल्पद्रुमः---

**सर्गश्च प्रतिसर्गश्च मन्त्रनिर्णय एव च ।**
**देवतानां च संस्थानं तीर्थानां वर्णनं तथा ॥**
**तथैवाश्रमधर्मस्य विप्रसंस्थानमेव च ।**
**संस्थानं चैव भूतानां यन्त्राणां चैव निर्णयः ॥**
**उत्पत्तिर्विबुधानां च तरूणां कल्पसंज्ञितम् ।**
**संस्थानं ज्योतिषां चैव पुराणाख्यानमेव च ॥**
**कोशस्य कथनं चैव व्रतानां परिभावनम् ।**
**शौचाशौचस्य चाख्यानं नरकाणां च वर्णनम् ॥**
**हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।**
**राजधर्मो दानधर्मः युगधर्मस्तथैव च ॥**

व्यवहारः कथ्यते च तथाचाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ इति ॥

एतेन सर्वसंग्रहः तन्त्रप्रबन्ध इति विस्तारार्थकतनुधातुनिष्पन्नस्तन्त्र-शब्द इति युक्तमुत्पश्यामः । यामललक्षणमप्येवमेव समुदाहृतं तत्रैव—

सृष्टिश्च ज्योतिषाख्यानं नित्यकृत्यप्रदीपनम् ।
क्रमसूत्रं वर्णभेदः जातिभेदस्तथैव च ।
युगधर्मश्च संख्यातः यामलं चाष्टलक्षणम् ॥ इति ॥

एवञ्च प्राणभृतां सर्वव्यवहारानुकूलः सर्वशास्त्रसंग्रहस्तन्त्रप्रबन्ध इत्यागमपरामर्शिनां विदितमेवैतत् ॥

अत्राप्यागमेषु बहवो मन्त्राः श्रूयन्ते । तेषां कल्पमन्त्रा इति नाम । तेऽपि सप्तकोटिमहामन्त्रान्तर्गता वैदिका एवेति सिद्धान्तः । कल्पपदमपि मन्त्रब्राह्मणात्मकवेदविलक्षणप्रयोगशास्त्रपरतया मीमांसकैः व्यवह्रियते—

वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः ।
न तु कल्पैर्विना केचित् मन्त्रब्राह्मणमात्रकात् ॥

इति । (तन्त्रवा. १६५) अत एव पराशरसंहितायां (१२)

स एव श्रुतिमन्त्रस्स्याद्वेदस्वरविवर्जितः ।
तान्त्रिकं मन्त्रमित्युक्तं तदेव श्रुतिचोदितम् ॥ इति ॥

तन्त्रवार्तिके (४३६)—

तानेव वैदिकान् वर्णान्भारतादिनिवेशितान् ।
स्वाध्यायनियमं हित्वा लोकबुध्या प्रयुञ्जते ॥ इति ॥

आगमपदाभिधेयानामेतेषां प्रबन्धानां चतुर्दशविद्यास्थानेषु धर्मशास्त्रेऽन्तर्भावं प्रकाशयन्ति पूर्वाचार्याः ॥

## विभागः.

ते चागमाः तन्त्रवार्तिके (११४) एवमनूदिताः—“सांख्य-

योगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थधर्माधर्मनिबन्धनानि चिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधकादाचित्कसिद्धिनिदर्शनबलेनाहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि, यानि च बाह्यान्तराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि, तेषामेवैतत् श्रुतिविरोधहेतुदर्शनाभ्यामनपेक्षणीयत्वं प्रतिपाद्यते" इति। अत्र बाह्यानि बाह्यान्तराणीति द्वेधा विभागोऽवगम्यते। अत्र पाञ्चरात्रपदमपि प्रयुक्तवता भट्टाचार्येण श्लोकवार्तिकारम्भे—

**न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः।**
**दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते॥**

इति लिखितस्य स्वयमप्युदाहरणं भवितुमर्हति॥

भट्टाचार्याभिप्रायस्त्वेषः—वैदिकैरभ्युपगतानां स्मृतीनां मध्ये परिदृश्यमानानां केषांचित् स्मृतिवाक्यानां विरोधाधिकरणोदाहरणत्वाभ्युपगमे भिक्षुपादप्रसरणन्यायेन सर्वेषामप्रामाण्यं प्रसजेत्। तस्मात् श्रुतिविरुद्धत्वेन प्रसिद्धानां सांख्यादिस्मृतीनामेवाप्रामाण्यं "विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्" (१-३-३) इति सूत्राभिप्रेतमिति वक्तव्यमिति। तदुच्यते (८५) तन्त्रवार्तिके—

**प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः।**
**नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे॥ इति।**

आचार्यशबरस्वामिना तु श्रुतिविरुद्धास्स्मृतय एता उपात्ताः अर्थतः—यदौदम्बर्यास्सर्ववेष्टनं "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुत्या विरुद्धम्। अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यनेन विरुद्धम्। क्रीतराजको भोज्यान्न इति "तस्मा-

दग्नीषोमे संस्थिते यजमानस्य गृहेऽशितव्यम्" इत्यनेन विरुद्धम्। अतः स्मृतिः व्यामोहः, हेतुदर्शनादिति। तथा षष्ठे अधिकारलक्षणे—

**पत्नी पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।**
**यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥**

इति मनुस्मृति(८-४१६)वचनमपस्मृतिरिति शाबरं भाष्यम्। कुमारिलस्त्वेतन्नानुमन्यते। बहुषु स्थलेषु भाष्यकारमतं खण्डयन्नेवमप्याह

**ततश्च भाष्यकारेण यदिहोक्तमचिन्तितम्।**
**वाक्यभङ्ग्यन्तरं तत्र कर्तव्योऽतीव नादरः॥** इति॥ (७३१)

सांख्यतत्वकौमुद्यां वाचस्पतिमिश्रेण (५म श्लो) "शाक्यभिक्षुनिर्ग्रन्धकसंसारमोचकादीनामागमाभासाः परिहृता भवन्ति" इति आगमाभासाः परिगणिताः। वाचस्पतिमिश्रगुरुणा जयन्तभट्टाचार्येण तु न्यायमञ्जर्यां अधिकारिभेदेन सर्वेषामप्यागमानां प्रामाण्यं व्यवस्थापितम्। प्रायस्स एव मार्गः वीरमित्रोदयादिप्रबन्धैरनुसृत इति विज्ञायते। तत्रागमाभासानां प्रामाण्याभावेऽपीतरेषां वेदानुकूलानां मार्गः भक्तिमार्ग इत्यत्र नाधिकमस्ति वक्तव्यम्। तत्प्रभेदाश्च पुराणसारे प्रपञ्चिता इति पराशरमाधवीये (६८ पु.) प्रदर्शिताः—

**शैवं च वैष्णवं शाक्तं सौरं वैनायकं तथा।**
**स्कान्दं च भक्तिमार्गस्य दर्शनानि षडेव हि॥** इति।

तत्र शैवागमस्वरूपं संक्षिप्य निरूप्य वैष्णवागमस्वरूपं विशदयामः॥

## शैवागमः.

भास्करभाष्ये शाङ्करभाष्यमनुसृत्यैव (१२७) "पशुपतिनेश्वरेण प्रणीतं पञ्चाध्यायी शास्त्रम्। पञ्च तत्र पदार्थाः व्याख्यायन्ते कारणं कार्यं योगो विधिः दुःखान्तः" इति॥ तत्रैषा पाशुपतप्रक्रिया (आग. ४१)—

> **जीवाः पशव उच्यन्ते तेषामधिपतिश्शिवः ।**
> **स तेषामुपकाराय पञ्चाध्यायीमचीक्लृपत् ॥**
> **तत्र पञ्च पदार्थास्तु व्याख्याताः कारणादयः ।**
> **कारणं कार्यं विधिर्योगो दुःखान्त इति ॥**

तथा तत्रैव—

> **शैवं पाशुपतं सौम्यं लागुडं च चतुर्विधम् ।**
> **तन्त्रभेदस्समुद्दिष्टः संकरं न समाचरेत् ॥ इति ।**

अत्र पाशुपतादिप्रक्रिया महती कथा । तस्या नात्रास्माकमवकाशः । उदयनाचार्येणापि न्यायकुसुमाञ्जल्यारम्भे—लोकवेदविरुद्धैरपि कर्मभिर्निर्लेपः स्वतन्त्रः ईश्वर इति महापाशुपताः" इति लिखितमस्ति । अनेन सर्वं व्याख्यातं भवति । शैवाद्यागमानां विभागा अवान्तरविभागाश्च कामिकाद्यागमेषु वैकुण्ठदीक्षितीयादिषु निबन्धेषु च विस्तृता वेदितव्याः ॥

तत्र शैवागम वैष्णवागमयोरिदं वैलक्षण्यम्—वैष्णवागमनिष्ठाः वेदान्तमूलः वेदान्तानुगुणः वैष्णवागम इति स्थापयन्ति । शैवागमनिष्ठास्तु वेदान्तवत् शैवागमः स्वतन्त्रप्रमाणभूतः वेदान्तवदीश्वरप्रोक्तत्वात्, वेदान्तसिद्धान्तो भिन्नः शैवसिद्धान्तश्च भिन्नः । वेदान्तसिद्धान्ते ब्रह्मण एवोपादानत्वं निमित्तत्वं च । शैवसिद्धान्ते तु ब्रह्मपदवाच्यस्य परमशिवस्य निमित्तत्वमात्रमिति। भोजदेवप्रणीततत्त्वप्रकाशव्याख्यायामघोरशिवाचार्यं एवं कथयति—"शैवदर्शनं तु वेदान्तवासनावाद्भिः विद्वद्भिः व्याकुलीकृतम्" इति ॥

अपि च सर्ववैदिकसंप्रदायविरुद्धं वेदान्तानां पौरुषेयत्वं शैवसिसिद्धान्ते स्वीक्रियते । नैवं वैष्णवागमनिष्ठाः मन्यन्ते । अत एव श्रीकण्ठभाष्यव्याख्यायां शिवार्कमणिदीपिकायामप्पयदीक्षिताः शैवाग-

मानामप्यभिन्ननिमित्तोपादानवाद एव तात्पर्यमिति सन्धिं कुर्वन्ति। बादरायणसूत्रं शाङ्करादिभाष्यं च शैवागमानां निमित्तमात्रवाद एव तात्पर्यमित्यनूद्य खण्डयति शैवसिद्धान्तम्। एवं श्रीकण्ठाचार्येणापि स्वीयभाष्ये सन्धिं कर्तुं शिवविष्ण्वोरैक्यं प्रदर्शितम्—"विष्णुशिवयोः उपादाननिमित्तयोः अवस्थाभेदमन्तरेण स्वरूपभेदो नास्ति" इति (१-३-१२) अधिकं दर्शनोदये शैवदर्शने परामृश्यावगन्तव्यम्॥

पाञ्चरात्रागमः

सनत्कुमारसंहिता नाम काचित्संहिता समुपलभ्यते। आगम-प्रामाण्येऽपि "सनत्कुमारनारदादिभ्यः अवोचत्" इति दृश्यते। सैषा संहिता ब्रह्मरात्र-शिवरात्र-इन्द्ररात्र-ऋषिरात्र-बृहस्पतिरात्रलक्षणपञ्चविध-विभागविभक्ता पाञ्चरात्रनाम्ना प्रथितेति युक्तं वक्तुमित्युत्पश्यामः। इयं च संहिता महीशूरप्राच्यकोशागारे ५०३२ संख्याङ्कितं तालपत्रपुस्तकम्॥ इममर्थं रातशब्दकोशे समुदाहृतं वचनमपि द्रढयति—

**वासिष्ठं नारदीयं च कापिलं गौतमीयकम्।**
**परं सनत्कुमारीयं पञ्चरात्रं च पञ्चकम्॥**

इति। सनत्कुमारसंहितागतेन्द्ररात्रवचनामागमप्रामाण्येऽपि पूरणपूजाविषयकं निर्माल्यप्रकरणे धृतमस्ति। ब्रह्मरात्रवचनानि बहूनि सच्चारित्ररक्षा-दिषूपात्तानि पश्यामः। इममेववार्थं प्रकारान्तरेण ईश्वरसंहितायामेकविंशेऽध्याये विजानीमः—

**आद्यमेकायनं वेदं रहस्याम्नायसंज्ञितम्।**
**दिव्यमन्त्रक्रियोपेतं मोक्षैकफललक्षणम्॥**
**पञ्चापि पृथगेकैकदिवारात्रं जगत्प्रभुः।**
**अध्यापयामास यतः ततस्तन्मुनिपुङ्गवाः॥**
**शास्त्रं सर्वजनैर्लोके पञ्चरात्रमितीर्यते॥**

इति । सुमन्तुजैमिनिभृगूपगायनमौञ्जायनननामभ्यः पञ्चभ्यः ऋषिभ्यः अस्यार्थस्योपदिष्टत्वात् इयं संज्ञा समागतेति ॥ पाद्मतन्त्रे तु—

**पञ्चेतराणि शास्त्राणि रात्रीयन्ते महान्त्यपि ।**
**तत्सन्निधौ समाख्याऽसौ तेन लोके प्रवर्तते ॥**

इति श्रूयते । एवं निर्वचनस्य मूलमिदं स्यात्, यत्—बादरायणसूत्रे द्वितीयाध्यायद्वितीयपादे कापिल हैरण्यगर्भ सौगतार्हत पाशुपताख्याः पञ्चागमाः निराकृताः । पाञ्चरात्रस्याप्रामाण्यपि निराकृतमिति विशिष्टाद्वैतसंप्रदाय इति ॥

नारदपञ्चरात्रे तु—

**रात्रं च ज्ञानवचनं ज्ञानं पञ्चविधं स्मृतम् ।**
**तेनेदं पञ्चरात्रं च प्रवदन्ति मनीषिणः ॥** इति ॥

तस्येदं विवरणं महाभारते मोक्षधर्मे—

**एवमेकं सांख्ययोगं वेदारण्यकमेव च ।**
**परस्पराङ्गान्येतानि पञ्चरात्रं तु कथ्यते ॥**

इति । अस्य श्लोकस्य श्रीभाष्यम्—"सांख्यं च योगश्च सांख्ययोगं वेदाश्चारण्यकानि च वेदारण्यकं परस्पराङ्गान्येतानि एकतत्त्वप्रतिपादनपरतया एकीभूतानि एकं पञ्चरात्रमिति कथ्यते । एतदुक्तं भवति—सांख्योक्तानि पञ्चविंशतितत्त्वानि योगोक्तं च यमनियमाद्यात्मकं योगं वेदोदितकर्मस्वरूपाणि अङ्गीकृत्य तत्त्वानां ब्रह्मात्मकत्वं योगस्य च ब्रह्मोपासनप्रकारत्वं कर्मणां तदाराधनरूपतामभिदधति ब्रह्मस्वरूपं प्रतिपादयन्त्यारण्यकानि । एतदेव परेण ब्रह्मणा नारायणेन स्वयमेव पाञ्चरात्रतन्त्रे विशदीकृतमिति" इति ॥

अत्र चत्वारि शास्त्राणि संभूयैकमिति पञ्चविधज्ञानसमाहारात् पञ्चरात्रमिति संज्ञा व्यासेन प्रकाशितेति श्रीभाष्याभिप्रायः । अयमेवार्थः—

**इदं महोपनिषदं चतुर्वेदसमन्वितम् ।**
**सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् ॥**

इति (१२-१६१३) वचनस्याप्यवधेयः। विष्णुतत्त्वसंहिता–(सह.४९९)

**एकैव पञ्चधा भूता प्रधाना विग्रहात्मिका ।**
**सर्वशक्तिसमेतोऽपि पुरुषो नियतीरिमाः ॥**
**न जहाति स्वभावोत्थकारुण्येन समाश्रितः ।**
**परमेष्ठी पुमान् विश्वो निवृत्तिस्सर्व एव च ॥**
**पञ्चैतारुशक्तयः प्रोक्ताः परस्य परमात्मनः ॥**

इति । तथा (१४९) विष्वक्सेनसंहितायाम्—

**पञ्चशक्तिमयो देवो बहिर्लोकेश्वरेश्वरः ।**
**आस्ते स्वानन्दभावेन परमव्योम्नि संस्थितः ॥ इति ॥**

एवं भगवतो वासुदेवस्यार्चनं मण्डल कुम्भ पुष्पमण्डल स्थण्डिल प्रतिमासु विधीयते जयादिषु संहितास्विति । तथा तापपुण्ड्रनाममन्त्र-यागरूपपञ्चसंस्कारा अप्यस्मिन् शास्त्रे प्रतिपाद्यन्ते इति । एवं समा-राध्यस्य पञ्चविधमूर्तीनां स्थानानां संस्काराणां वा समाराधकस्य प्रति-पादकत्वात् शास्त्रमपि पञ्चशास्त्रमिति व्यवहर्तव्यमासीत् । शास्त्ररात्र-शब्दयोः ज्ञानार्थत्वेन पर्यायत्वे पञ्चरात्रमिति व्यवहारः युक्त इत्यप्यु-न्नेतुमस्ति संभावनेति ॥

शतपथब्राह्मणे तु (१३-६-१) पुरुषो ह नारायणोऽकामयता-तिष्ठेयं सर्वाणि भूतान्यहमेवेदं सर्वं स्यामिति स एतं पुरुषमेधं पञ्चरात्रं क्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वाऽत्यतिष्ठत्सवाणि भूतानीदं सर्वमभव-दति तिष्ठति सर्वाणि भूतानि सर्वं भवति य एवं विद्वान्पुरुषमेधेन यजते यो वैतदेवं वेद । तस्य त्रयोविंशतिर्दीक्षाः द्वादशोपसदः पञ्चसुत्याः । स एष चत्वारिंशसदीक्षोपसत्कः चत्वारिंशदक्षरा विराड्विराजमभिसंपद्यते ।

ततो विराडजायत विराजो अधिपुरुष इत्येषा वै सा विराडेतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति" इति ॥

अत्र पञ्चरात्रशब्दश्श्रयते नारायणशब्दश्चेति पाञ्चरात्रशास्त्रं नारायणप्रणीतं "पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्" इति महाभारतनारायणीयवचनानुसंधानेन सूच्यते इति केचित् उत्प्रेक्षन्ते। तदेतदस्माकमविरुद्धमपि अत्र पुरुषमेधपदविशेषणीभूतं पञ्चरात्रपदं पञ्चसुत्याकत्वेन प्रयुक्तमस्ति। नत्वत्र योगरूढं तत्पदम्। उत्तरत्रानुवाके दशरात्रपदमपि श्रूयते। तस्मात् "पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते धियम्" इत्यस्येदमेकमुदाहरणम् ॥

### पञ्चरात्रवैखानसविभागः.

पाञ्चरात्रवैखानसविभागः—(पा. १६) वेदव्यासादिनिबद्धश्रीवैष्णवधर्मशास्त्रादिषु—

कथं त्वमर्चनीयोऽसि मूर्तयः कीदृशास्तु ते।
वैखानसाः कथं ब्रूयुः कथं वा पाञ्चरात्रिकाः ॥

श्रीभगवानुवाच—

शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥
अष्टाक्षरविधानेनाप्यथवा द्वादशाक्षरैः।
स्थापितं मां ततस्तस्मिन् अर्चयित्वा विचक्षणः ॥
पुरुषं तु ततस्सत्यं अच्युतं च युधिष्ठिर।
अनिरुद्धं च मां प्राहुः वैखानसविदो जनाः ॥
अन्ये त्वेवं विजानन्ति मां राजन् पाञ्चरात्रिणः।
वासुदेवं च राजेन्द्र संकर्षणमथापि वा ॥
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तीः प्रचक्षते।
चिद्व्यनर्थान्तरा एवं मामेवं चार्चयेद्बुधः ॥

इति । मरीचिविमानार्चनकल्पे (५०८) "पञ्चानां मूर्तीनामादिमूर्तिर्विष्णुः । तद्भेदाश्चतस्रो मूर्तयः पुरुषसत्याच्युतानिरुद्धाः । ताः धर्मज्ञानैश्वर्यवैराग्यैः पादादर्धात्त्रिपादात्केवलाद्भिद्यन्ते प्रातिलोम्येन" इत्यप्यस्ति । तथा—

हिरण्यगर्भः पित्राख्यः यत्र ब्रह्मा व्यजायत ।
ब्रह्मणश्चापि संभूतश्शिव इत्यवधार्यताम् ॥
शिवात् स्कन्दः संबभूव ह्येतत् सृष्टिचतुष्टयम् ॥

(अनुशा. ४४) इत्यपि विज्ञायते । पद्मपुराणे (वैकुण्ठदीक्षितीये २ पु)—

श्रौतं वैखानसं प्रोक्तं वासिष्ठं स्मार्तमुच्यते ।
पञ्चरात्राभिधं शास्त्रं दिव्यागममितीरितम् ॥

इति । हारीतस्मृतौ—(उत्त, ५१)

श्रौतेनैव हरिं देवमर्चयन्ति मनीषिणः ।
श्रौतस्मार्तागमैः विष्णोः पूजनं त्रिविधं स्मृतम् ॥ इति च ॥

पाञ्चरात्ररक्षायां तु—(१७) "वैष्णवशास्त्रभेदत्वेन समपठितयोः वेदाविरुद्धयोः भगवद्यामुनमुनिवासुदेवस्वामिप्रभृतिभिः स्थापितप्रामाण्ययोः श्रीपाञ्चरात्रवैखानसशास्त्रयोः अप्रामाण्यप्रसंगः दूरपरिहरणीयः ॥ वैखानससूत्रानुसारिषु काश्यपमरीचिभार्गवात्रेयेषु तदनुबन्धिषु चाधिकारग्रन्थेषु संग्रहविस्तररूपेषु भगवदर्चनप्रतिष्ठादिकं संपूर्णमुपदिष्टमस्ति ॥ यत्तु वैखानसे—

आग्नेयं पाञ्चरात्रं तु दीक्षायुक्तं च तान्त्रिकम् ।
अवैदिकत्वात्तत्तन्त्रं तस्माद्वैखानसेन तु ॥
सौम्येन वैदिकेनैव देवदेवं समर्चयेत् ॥ इति ।

यच्चोक्तं पाञ्चरात्रे—

अश्रीकरमसौम्यं च वैखानसमसात्त्विकम् ।
तद्विधानं परित्यज्य पञ्चरात्रेण पूजयेत् ॥

इत्यादीनि वचनानि । तानि परस्परस्थानाक्रमणलोलुपैः वटुभिः पूजकाधमैः निवेशितानीत्यवगन्तव्यम् ॥

एतेनेदमप्यपास्तम्, यत् पारमेश्वरे दिव्यायतननिर्णयाध्यायोक्तम् । तत्र हि—साक्षाद्भगवत्प्रणीतं ब्रह्मादिभिः प्रवर्तितं शास्त्रं दिव्यम्, ब्रह्मादिभिः ऋषिभिश्च स्वयं प्रणीतं शास्त्रं मुनिभाषितमिति द्विधा विभज्य पौरुषं मनुजकृतमित्यपि कंचित्प्रभेदमुक्त्वा मुनिभाषितस्य सात्त्विकराजसतामसभेदेन विभागमुक्त्वा तेषां लक्षणानि चोक्त्वा सात्त्वतपौष्करजयादीनि शास्त्राणि दिव्यानि ईश्वरभारद्वाजसौमन्तवपारमेश्वरवैहायसपितृशिखण्डिसंहिताजयोत्तरादीनि, सात्त्विकानि, सनत्कुमारपद्मोद्भवशातातपतेजोद्रविणमायावैभवादीनि राजसानि, श्रीप्रश्नतत्त्वसागरादीनि तामसानीति निर्देशोऽपि कृतः । तदनन्तरमुच्यते—

**तामसेन तु मार्गेण पूजाद्यं यत्र वर्तते ।**
**तत्रापि राजसेनैव पूजाद्यं सिद्धिदं भवेत् ॥**
**राजसेन तु पूजाद्यं वर्तते यत्र नित्यशः ।**
**तत्रापि सात्त्विकेनैव पूजाद्यं शुभदं सदा ॥**
**सात्त्विकेन तु पूजाद्यं वर्तते यत्र नित्यशः ।**
**तत्र राजसमार्गेण न कुर्यात्पूजनादिकम् ॥**

इति" ॥ अयमपि संदर्भः स्थलाक्रमणरूपलोभमूलप्रक्षेपशङ्काकलङ्कित इत्यवधेय इति पाञ्चरात्ररक्षासिद्धान्तः । दिव्यमुनिभाषितपौरुषादि विभागः तत्तल्लक्षणविशेषश्च सात्त्वतसंहितायामपि दृश्यते । एतेनेतरशास्त्रवत् पाञ्चरात्रशास्त्रमपि कालदेशदशारुच्यादिभेदेन विविधपरिणाम वद्भवतीत्यपि शास्त्रत एवावगतं भवति ॥

इदमत्रावधेयम्—अथेदानीमतिविस्तृतस्यास्य पाञ्चरात्रशास्त्रस्य कर्ता कालश्च विमर्शकैः कैश्चित् विचारितो दृश्यते । तत्रचास्माभिः

सम्प्रदायविद्भिरिदमुच्यते—"पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्" इति वेदव्यासेन कृत्स्नस्यापि नारायण एव वक्तेति स्पष्टमुक्तम्। सोऽपि वक्ता अनादिनिधनाविच्छिन्नसम्प्रदायसिद्धस्य रहस्याम्नायाख्यस्यैकायनाभिधानस्य वेदान्तजातस्य च सारार्थं संगृह्य व्यूहसङ्कर्षणरूपेणेदं शास्त्रमुपदिदेश। ब्रह्मादीनां देवानां नारदादीनां देवर्षीणां च संहिताकर्तृत्वेन अधिकारस्य भगवतैव समर्पितत्वात् नारायण एव वक्तेत्यस्य नानुपपत्तिः। अयमर्थः पाञ्चरात्ररक्षायां (३०) आचार्यैः सुविशदं प्रकाशितः—"पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणस्स्वयम्" इति स्ववक्तृके शास्त्रे भगवतैव तेषामृषीणां तत्तत्पुण्यविशेषानुसारेण नित्यवेदे सूक्तकाण्डमन्त्रकृत्ववत् संहिताकर्तृत्वस्याधिकारतया समर्पितत्वात् कार्त्स्न्येन भगवच्छास्त्रस्य प्रामाण्यम्। ततश्च भगवद्व्यतिरिक्तब्रह्मादिपुरुषकृतांशेषु न कारणदोषस्सम्भवति। यथा च व्यासोक्ते महाभारते वैशम्पायनसंहिताभेदः, एवमत्रापीति" इत्युक्तमस्ति। ततश्च वक्तृबहुत्वेऽपि अंशावेशानुप्रवेशाद्यवताररूपेण नारायणेनैव प्रणीतमिति सम्प्रदायसंस्कृतविपश्चितामाशयः। सुगतागमकथाप्रसङ्गे (३२) प्रागेव सूचितोऽयं पन्थाः। जयायामयमर्थ उपबृंहितः—

साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्।
मग्नानुद्धरते लोकान् कारुण्यात् शास्त्रपाणिना॥ इति।

### पाञ्चरात्रविभागः

पाञ्चरात्रशास्त्रविभागः कालोत्तरे—

अनेकभेदभिन्नं च पञ्चरात्राख्यमागमम्।
पूर्वमागमसिद्धान्तं मन्त्राख्यं तदनन्तरम्॥
तन्त्रं तन्त्रान्तरं चेति चतुर्धा परिकीर्तितम्।
एतद्धै पाञ्चरात्राख्यं शास्त्रं सर्वोत्तमोत्तमम्॥
नारायणीयं मौद्गल्यमाग्निकाश्यपसंज्ञितम्॥

इत्यादि ॥ (पा. २२)

> चतुर्धा भेदभिन्नं च स्वयं व्यक्तादिभेदतः ।
> स्वयं व्यक्तं हि सिद्धान्तमागमाख्यं पुरोदितम् ॥
> मन्त्रसिद्धान्तसंज्ञं तु यद्दिव्यं परिकीर्तितम् ।
> तन्त्रसिद्धं हि यच्छास्त्रं तत्सैद्धं समुदाहृतम् ॥
> तन्त्रान्तरं तु यत्प्रोक्तं आर्षं तत्समुदाहृतम् ॥

इति । अनेन स्वयंव्यक्तदैवसैद्धार्षादिस्थलविभागोऽपि आगमपूजाभेद-निबन्धन इत्यवधार्यते । तत्रैव पूजानिर्णयाध्याये—"वैदिकं तान्त्रिकं श्रौतं मिश्रं चेति चतुर्विधम्" इति मूलश्रुतिदिव्यमन्त्रप्रवृत्तश्रुति-तत्सम्भेदनिमित्तनामधेयानीमानि । श्रीकरसंहितायां तु प्रागुक्तस्यैव सिद्धान्तचतुष्टयस्य वेदसिद्धान्तः दिव्यसिद्धान्तः तन्त्रसिद्धान्तः पुराण-सिद्धान्त इति प्रागुक्तादूरविप्रकृष्टैः नामभेदैः विभाग उक्तः।(पा. २१) पाञ्चरात्रशब्दवत् सिद्धान्तशब्दोऽपि चतुर्णां साधारणः । हयग्रीव-संहितायाम् (पा.७)—

> आगमाख्यं तु सिद्धान्तं सन्मोक्षैकफलप्रदम् ।
> मन्त्रसंज्ञं हि सिद्धान्तं सिद्धिमोक्षफलं नृणाम् ॥
> तन्त्रसंज्ञं हि सिद्धान्तं चतुर्वर्गफलप्रदम् ।
> तन्त्रान्तरं हि सिद्धान्तं वाञ्छितार्थफलप्रदम् ॥

इति चतुर्णामपि परब्रह्मभूतवासुदेवप्रापकत्वमविशिष्टम् । आगमप्रामाण्ये (२३)—

> भाक्तं भागवतं चैव सात्त्वतं च त्रिधा मतम् ।
> इत्येवं तन्त्रभेदोक्तिः पञ्चरात्रेऽपि दृश्यते ॥

इत्युक्तम् ॥

> ततश्च सत्त्वान् भगवान् भज्यते यैः परः पुमान् ।
> ते सात्वता भागवताः इत्युच्यन्ते द्विजातयः ॥

इति निर्णयः । पाद्मे—

**सिद्धान्तेषु चतुर्ष्वेकं पूर्वैर्नृभिरनुष्ठितम् ।**
**त्यक्त्वा समाश्रयेदन्यं नरो भवति किल्बिषी ॥**
**तस्माज्जन्मप्रभृत्येकराद्धान्तनियतो भवेत् ।**
**सिद्धान्तानां चतुर्णां तु साङ्कर्यं व्यसनावहम् ॥**

इति च श्रूयते । पाञ्चरात्ररक्षायां (३२) जयाख्यसात्वतपौष्कराणां रत्नत्रयमिति प्रसिद्धिरित्यप्युक्तम् । सात्वतस्य सर्वसंहितासारभूतत्वं च सच्चरित्ररक्षाया (४३) मुक्तम् ॥

पाद्मेचर्यापादे १९ अध्याये—

**पाञ्चरात्रश्रुतितरोः सर्वसेव्यस्य संप्रति ।**
**दृश्यन्ते संहिताशाखाः चतुर्विधफलाश्शतम् ॥**

इति । तासामासां संहितानां नामनिर्देशपूर्वकं गणना अत्रैव संहितायां अग्निपुराणे कपिञ्जलसंहितायां विष्णुसंहितायां हयशीर्षसंहितायां च वर्तते । श्लोकानां संख्याभेदेन उत्तममध्यमाधमभेदेन च संहितालक्षण-मप्युक्तम् । हेमाद्रिविरचितचतुर्वर्गचिन्तामणौ कालनिर्णयखण्डे—(६६०) "महापञ्चरात्रं, क्रतुपञ्चरात्रं, और्वपञ्चरात्रम्" इत्येतैर्नामभिः पाञ्चरात्रप्रबन्धास्समुल्लिखिता दृश्यन्ते । ६५९ पुटे द्वापरे पञ्चरात्रप्राश-स्त्यमुपदर्शितम् ॥

प्रतिपाद्यविचारः

पाञ्चरात्रागमप्रतिपाद्यविषये श्रीभाष्यम्—"वासुदेवाख्यं परं ब्रह्मैवाश्रितवत्सलं स्वाश्रितसमाश्रयणीयत्वाय स्वेच्छया चतुर्धाऽवतिष्ठत इति भागवतप्रक्रिया । यथा पौष्करसंहितायाम्—

**कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते ।**
**क्रमागतैस्स्वसंज्ञाभिः ब्राह्मणैरागमं तु तत् ॥**

इति । तच्च चातुरात्म्योपासनं वासुदेवाख्यपरब्रह्मोपासनमिति सात्त्वतसंहितायामुक्तम्—

**ब्राह्मणानां हि सद्ब्रह्मवासुदेवाख्ययाजिनाम् ।**
**विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत् ॥**

इति । तद्धि वासुदेवाख्यं परं ब्रह्म संपूर्णषाड्गुण्यवपुः सूक्ष्मव्यूहविभवभेदभिन्नं यथाधिकारं भक्तैः ज्ञानपूर्वेण कर्मणाऽभ्यर्चितं सम्यक्प्राप्यते । विभवार्चनाद्व्यूहं प्राप्य व्यूहार्चनात्परं ब्रह्म वासुदेवाख्यं सूक्ष्मं प्राप्यत इति वदन्ति । विभवो हि रामकृष्णादिप्रादुर्भावगणः । व्यूहो वासुदेवसंकर्षणप्रद्युम्नानिरुद्धरूपः चतुर्व्यूहः । सूक्ष्मं तु केवलषाड्गुण्यविग्रहं वासुदेवाख्यं परं ब्रह्म । यथा पौष्करे—

**यस्मात्सम्यक्परं ब्रह्म वासुदेवाख्यमव्ययम् ।**
**अस्मादवाप्यते शास्त्रात् ज्ञानपूर्वेण कर्मणा ॥**

इत्यादि" ॥ इति । व्यूहशब्दार्थस्तु विग्रहसंस्थानविशेषः ॥

**वर्णैश्चतुर्भिश्चत्वारः पूजनीया यथाक्रमम् ।**
**वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः ॥**

इत्यागमप्रामाण्यम् । श्रीसहस्रनामभाष्ये चतुर्मूर्तिपदे—"बलभद्रवासुदेव प्रद्युम्नानिरुद्धाभिज्ञाः चतस्रो मूर्तयः यदुकुलेऽप्यस्तीति चतुर्मूर्तिः" इति भाषितम् ॥

अत्रैव विषये शाङ्करानुवादः (२-२-४२) "तत्र भागवता मन्यन्ते भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वम् । स चतुर्धाऽऽत्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मोच्यते । संकर्षणो नाम जीवः । प्रद्युम्नो नाम मनः अनिरुद्धो नाम अहंकारः । तेषां वासुदेवः परा प्रकृतिः । इतरे संकर्षणादयः कार्यम् ।

तमित्थंभूतं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैः वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति" ॥ अत्रागमप्रामाण्यमिदमवधेयम्—

नानेनवचनेनेह जीवजन्माभिधीयते ।
अपि तु व्यूहरूपेण व्यक्तिर्देवस्य कीर्त्यते ॥
तत्र संव्यवहारार्थं जीवशब्दः प्रयुज्यते ।
वर्णानामानुलोम्येन पूज्यभेदप्रसिद्धये ॥ इति ॥

नारायणीयभगवद्गीते

अत्र नारायणीयभगवद्गीतयोस्सन्दर्भः—

श्रुतिस्मृतीतिहासेषु प्रपत्तिर्नाम विश्रुता ।
तेषां तु तपसांन्यासमतिरिक्तं ततश्श्रुतम् ॥
ब्रह्मणे त्वामहस इत्यात्मानं विनियोजयेत् ।
अहं मुमुक्षुश्शरणं प्रपद्य इति च श्रुतम् ॥
प्रपन्न इन्द्रं शरणं सर्वस्य शरणं सुहृत् ।
इत्यादयः श्रुतिशतं विश्रुतं शरणागतौ ॥
तामेव साक्षान्मोक्षस्य भक्तेरङ्गतयाऽपि वा ।
वदन्तिहेतुं श्रुतयः सेतिहासपुराणकाः ॥
पाञ्चरात्रं शास्त्रमपि साक्षान्मोक्षस्य हेतुताम् ।
प्रपत्तेर्बोधनायैव प्रवृत्तामिति निर्णयः ॥
पाञ्चरात्रस्य सारांशं संगृह्य व्यासमस्करी ।
शान्तौ नारायणीयेन कृपयैव न्यरूपयत् ॥
तस्यापि संग्रहं प्राह गीता भगवतो हरेः ।
तत्रत्यं श्लोकयुगलं सावधानं निशम्यताम् ॥
एवमेष महान् धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥
समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के च गीता भगवता स्वयम् ॥

इति लोकानुग्रहाय समासव्यासयोगतः ।
भगवत्प्रमुखैः पाञ्चरात्रशास्त्रं प्रवर्तितम् ॥

सैषा भगवद्गीता नारायणीयसिद्धान्त इत्यत्र शाङ्करगीताभाष्य-वचनान्युदाह्रियन्ते । प्रारम्भ एव—

नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥ इति ॥
स आदिकर्ता नारायणो विष्णुः । (१-१)
अत एव भगवान्नारायणः । (२-२१)
हृदयेशयं सर्वकर्मफलाध्यक्षं
सर्वप्रत्ययसाक्षिणं नारायणम् । (५-२८)
मां परमेश्वरं नारायणम् । (७-१५)
सर्वात्मानं मां नारायणम् । (७-१९)
अनन्या अपृथग्भूताः परं देवं नारायणम् । (९-२२)
महायोगेश्वरो हरि र्नारायणः । (११-९)
मां चेश्वरं नारायणम् । (१४-२६)
ममैव परमात्मनो नारायणस्य । (१५-७)
भगवत ईश्वरस्य नारायणाख्यस्य । (१५-१६)
ईश्वरस्सर्वज्ञो नाराणाख्यः । (१५-१७)

एवं दिङ्मात्रमुपदर्शितम् । गीतायां भगवद्वाक्येषु श्रूयमाणस्यास्मच्छब्दस्य भगवान् वासुदेवः नारायणः विष्णुः इत्यादीनि पदानि विहाय न क्वचिदपि व्याख्यानं दृश्यते । एतेन भगवत्पादाः परमभागवताः वैष्णवाग्रेसरा इत्यत्र ना तोऽप्यधिकं वक्तव्यमस्ति ॥

तथैव तेषां भगवत्पादानां परमाचार्योऽपि गौडपादाचार्यवर्यः नारायणैकनिष्ठः परमभागवत इत्यत्र आनन्दगिरीयं वचनमुदाहरामः माण्डूक्यकारिकायामलातशान्तिप्रकरणारम्भे—

ज्ञानेनाकाशकल्पेन धर्मान्यो गगनोपमान् ।
ज्ञेयाभिन्नेन संबुद्धः तं वन्दे द्विपदां वरम् ॥

इति पद्यभाष्यव्याख्याने आनन्दगिरिः "आचार्यो हि पुरा बदरिकाश्रमे नरनारायणाधिष्ठिते नारायणं भगवन्तमभिप्रेत्य तपो महदतप्यत। ततो भगवानतिप्रसन्नः तस्मै विद्यां प्रादादिति प्रसिद्धं परमगुरुत्वं परमेश्वरे इति भावः" इति व्याख्याति ॥

सैषा भगद्गीताभक्तिशास्त्रम्। भक्तिरेव मोक्षस्य सुगमो मार्ग इत्यत्र शाङ्करभाष्यवाक्यानि श्रूयन्ताम्—

१. अर्जुनस्यात्यन्तमेव हितैषी भगवान् कर्मयोगं भेददृष्टिमन्तमेवोपदिशति ॥ १२-१३ ॥

२. अध्यात्मचेतसा अहं कर्ता ईश्वरस्य भृत्यवत् करोमि ॥ ३-३० ॥

३. ईश्वरायैव करोमि न मम फलाय ॥ ५-१२ ॥

४. अत्रात्मेश्वरभेदमाश्रित्य विश्वरूपे ईश्वरे चेतस्समाधानलक्षणः योग उक्तः, ईश्वरार्थं कर्मानुष्ठानादि च ॥ १२-१३ ॥

५. स्वकर्मणा भगवतः अभ्यर्चनभक्तियोगस्य फलं ज्ञाननिष्ठायोग्यता ॥ १८- ५४ ॥

६. अनन्या भक्तिः सर्वैरपि करणैः वासुदेवादन्यत् नोपलभ्यते यया ॥ ११-५४ ॥

७. एवं भगवतः सत्यप्रतिज्ञत्वं बुध्वा भगवद्भक्तेरवश्यंभावि मोक्षफलमवधार्य भगवच्छरणैकपरायणो भवेत् ॥ १८-६५ ॥

८. कर्मयोगनिष्ठायां परमं रहस्यमीश्वरशरणता ॥ १८-६५ ॥

९. ये पुनः श्रद्दधानाः भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः ॥ ९-१३ ॥

१०. विध्वस्तसर्वोपाधिविशेषस्य अक्षरस्योपासकापेक्षया सर्व-

योगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपेतस्य उपासका युक्ततमा इति चोक्तम् ॥ १२-२ ॥

११. न केवलं मद्भक्तानां अनावृत्तिलक्षणमनन्तफलं, सुखाराधनश्चाहम् ॥ ९-२६ ॥

१२. अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थः निःश्रेयसार्थः अनुष्ठेयत्वेन समुच्चित्योच्यते ॥ ११-५५ ॥—

**मत्कर्मकृत् मत्परमः मद्भक्तः सङ्गवर्जितः ।**
**निर्वैरः सर्वभूतेषु यस्समामेति पाण्डव ॥ इति ॥**

इदमत्रावधेयम्—भक्तिसिद्धान्तः केवलागमैकमूलः । विशिष्टाद्वैतादिसिद्धान्तानां श्रीरामानुजाचार्यादिप्रवर्तितानां भक्त्यवलम्बनात् तन्त्रसाङ्कर्यमस्तीति केचिदधुनातनाः अपकर्षमिव समारोपयन्ति । विशुद्धाद्वैतसिद्धान्तप्रवर्तकाचार्यस्य भगवत्पादस्य वचांस्यनुचिन्त्य विशुद्धहृदयास्तेऽपि भवन्त्वितीयान् विस्तरः ॥ अन्यदेतत् ॥

भागवतसिद्धान्तः

श्रीमतो वेदान्ताचार्यस्य हृदयपरामर्शेन तु पञ्चरात्रपदस्येत्थमभिप्रायोऽवधार्यते । यथा पाञ्चरात्ररक्षायाम् (१२६)—

**विदितनिगमसीम्ना वेङ्कटेशेन तत्त्व-**
**द्रुहुसमयसमक्षं वद्धजैत्रध्वजेन ।**
**प्रतिपदमवधानं पुष्यतां सात्त्विकानां**
**परिषदि विहितेयं पञ्चकालव्यवस्था ॥**

इति । अनेन पद्येन पञ्चकालकर्तव्यभगवदाराधनप्रतिपादनपरत्वादस्य शास्त्रस्य पञ्चरात्रसंज्ञा समुचितेत्याचार्याभिप्रायः । पञ्चकालविभागस्त्वित्थमवगम्यते । (पा. ३२) जयाख्यसंहितायां नारदः—

**एको हि श्रूयते देव कालो लोके न चापरः ।**
**पञ्च कालास्त्वयोद्दिष्टाः किमेतन्मेऽत्र संशयः ॥**

श्रीभगवानुवाच—

**एकस्यैव हि कालस्य वासरीयस्य नारद ।**
**आप्रभातं निशान्तं वै पञ्चधा परिकल्पना ॥**
**पृथक्कर्मवशात्कार्या न काला बहवस्स्मृताः ।**

अभिगमनोपादानेज्यास्वाध्याययोगभेदेन पञ्चविधविभागविभक्तः अहोरात्रात्मकः काल इत्यर्थः ॥

प्रातस्सङ्गवमध्याह्नापराह्नसायाह्नभेदेन शास्त्रान्तरे विभक्तानामेवास्मिन् शास्त्रे इमानि संज्ञान्तराणि । तथा सङ्गवस्सोमो विष्णुप्रियः धर्मो विराग इत्यपि नामान्तराण्युपलभ्यन्ते ॥

तेषु च कालेषु कर्तव्यानि कर्माणि त्र्यय्यन्तैकायनश्रुतिविहितानि संहितासु सर्वासूपबृंहितानीति नात्र प्रतन्यते । एवं वर्तमानस्य सर्वः कालोऽप्यवन्ध्यो भवति । सर्वे व्यापाराः कैङ्कर्यरूपा भवन्ति । सर्वोऽप्यानुषंगिको भोगः क्रीडाशुकक्षीरास्वादन्यायेन स्वामिभोगशेषभूतो भवतीति भगवत्कैङ्कर्यैकरतेः परमैकान्तिनः अनादिमायानिशावसाने अनन्तमोक्षवासरप्रारम्भे च प्रत्यूषवदवस्थितोऽयमायुश्शेषकाल इति । तत्र योगपदार्थस्तु शाण्डिल्यस्मृत्युक्तः (पा ४१) अवधेयः—

**ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः ।**
**तत्संबन्धानुसंधानमिति योगः प्रकीर्तितः ॥**

दक्षः —

**सर्वोपाधिविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।**
**एतत् ध्यानं च योगश्च शेषोऽन्यो ग्रन्थविस्तरः ॥**

इति । स्वाध्यायपदार्थस्तु आचार्यैरेवं निर्णीतः (पा १०५) शमाद्युपयुक्तशब्दसंशीलनं कुर्यादिति स्वाध्यायसारः । उक्तं च महाभारते—

यच्छ्रुतं न विरागाय न धर्माय न शान्तये ।
सुबद्धमपि शब्देन काकवाशितमेव तत् ॥

इति । अधिकं पाञ्चरात्ररक्षायामवगन्तव्यम् ॥

श्रीपाञ्चरात्रसिद्धान्त एव भागवतसिद्धान्त इत्युच्यते । यत इदमुच्यते—(पा ३५)

द्वादशाक्षरतत्त्वज्ञः चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञः स तु भागवतः स्मृतः ॥ इति ॥

अच्छिद्रत्वं नाम अन्यार्थकर्मानन्तरितत्वम् ॥

ततश्च सत्त्वान् भगवान् भज्यते यैः परः पुमान् ।
ते सात्त्वता भागवता इत्युच्यन्ते द्विजातयः ॥

इत्यागमप्रामाण्ये (६७) निर्णीतम् । श्रीसालग्रामप्रसंगे ब्रह्माण्डे (सच्च ११०)

हृदि रूपं मुखे नाम नैवेद्यमुदरं हरेः ।
पादोदकं च निर्माल्यं यस्य मूर्ध्नि स वैष्णवः ॥ इति ॥

विष्णुपुराणे (५-१७)

यज्वभिर्यज्ञपुरुषः वासुदेवश्च सात्त्वतैः ।
वेदान्तवेदिभिर्विष्णुः प्रोच्यते तं नतोऽस्म्यहम् ॥

इति । एतेन वासुदेवोपासकास्सात्त्वता भागवता इति निर्णयः । अनेन श्लोकेन कश्चिक्रमोऽपि समुल्लिख्यते सूक्ष्मदर्शिभिः वैदिकसंप्रदायः आगमसंप्रदायः औपनिषदसंप्रदायश्चेति ॥

इदमप्यत्रावधेयम् । (पा १०४) आह चैवं बोधायनः—

जपमध्ये गुरुर्वाऽपि वैष्णवो यस्समागतः ।
संभाषणादि पूजान्तं तस्य कृत्वाऽनुमान्य च ॥
अनुश्राव्य ततः कुर्यात् जपशेषं समाहितः ।
सर्वस्य प्रभवो यस्मात् विष्णुपादाश्रया नराः ॥
तन्मूलतः क्रियास्सर्वाः सफलास्तु भवन्ति हि ।

इति । जयसंहितायामपि—

**यस्माद्देवो जगन्नाथः कृत्वा मर्त्यमयीं तनुम् ।**
**मग्नानुद्धरते लोकान् कारुण्यात् शास्त्रपाणिना ॥ इति ॥**

तत्रापि—

**देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् ।**
**नमस्कारं न कुर्याच्चेत् उपवासेन शुद्ध्यति ॥**

इत्यादिकमपि प्रतिबुद्धेतरविषयमिति व्यवस्था कृता । भागवतधर्मानुष्ठानसौकर्यमिदम्—(पा ५०) जयसंहिता—

**शयनासनदानादावासक्तश्चापि भोजने ।**
**हृद्गतं न त्यजेद्ध्यानं आनन्दफलदं हि तत् ॥**
**व्यापृतेनापि मनसा विष्णुस्सेव्योऽन्तराऽन्तरा ।**
**मधीवद्धो भ्राम्यमाणः घासग्रासं करोति गौः ॥**

इति। तथा—एतादृशभागवतमर्यादाप्रविष्टानां परिपूर्णब्रह्मवित्त्वाभावेऽपि ह्युपनीतावस्थत्वमात्रेण द्विजत्ववत् संस्कारविशेषादियोगमात्रेण भागवतत्वमात्रं सिद्धमित्यप्युक्तम् । अत्रेदमपि भागवतरहस्यमवधेयम्, दानप्रतिग्रहादिषु मन्त्रविशेषं यमेनोक्तं शौनकः स्मरति—

**दानं ददद्भिर्यैरुक्तं अच्युतः प्रियतामिति ।**
**प्रतिग्रहीतृभिश्चैवं न ते मद्विषयोपगाः ॥**

इति । तथा—

**त्वय्याराधनकामोऽयं व्रतं चरितुमिच्छति ।**
**संकल्पसिद्ध्यै भगवन् पूरयास्य मनोरथान् ॥**

इत्ययमपि भागवतानामतिरहस्यभूतो मन्त्रः सदाचार्यसकाशादेवाधिगन्तव्यः ॥ इति ।

मूलश्रुतिः.

अस्य च पाञ्चरात्रशास्त्रस्य त्रय्यन्ताः एकायनश्रुतिश्च मूलमिति सर्वाभ्यस्संहिताभ्यः महाभारतादिपुराणेभ्यः आगमप्रामाण्यादिप्रबन्धेभ्य

श्चावगम्यते । संहितावचनानि परिस्फुटानीति न लिख्यन्ते । महा-भारते तु (१२-७८७२)—

**एवमेकायनं धर्ममाहुर्वेदविदो जनाः ।**
**यथा ज्ञानमुपासन्तः सर्वे यान्ति परां गतिम् ॥**
**ये तु वाकनिषन्निष्ठाः तत्तत्संस्कारसंस्कृताः ।**
**ते वै भागवताश्शुद्धाः वासुदेवैकयाजिनः ॥**

त्रय्यां "अनुवाकः, उपनिषत्" इति व्यवहारः । अत्र तु "वाकः, निषत्" इति । ततश्चायमेव वेदः अनादिसिद्धः । अत एवेत्थमुच्यते (भा. ३-११२५३, ५-१६६३)—

**एकवेदस्य चाज्ञानाद्वेदास्ते बहवोऽभवन् ॥**

इति । आनुशासनिके यज्ञपुरुषमाहात्म्येऽपि—

**एको वेदो ब्राह्मणानां बभूव**
**चतुष्पादः त्रैगुणो ब्रह्मशीर्षम् ।**
**पादं पादं ब्राह्मणा वेदमाहुः**
**त्रेताकाले तं च तं विद्धि शीर्षम् ॥** इति ।
**यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।**
**गृणन्ति सत्यधर्माणः सत्यं सत्येषु नामसु ॥**

इति राजधर्मे (४७-२६) श्रूयते ॥

अथ निबन्धकृतां वचनानि—सेयमेकायनश्रुतिः रहस्याम्नाय इति बह्वीषु संहितासु तदनुगुणप्रबन्धेषु च व्यवह्रियते उदाह्रियते च । क्वचित् रहस्याम्नायब्राह्मणमित्यप्यवतार्योदाह्रियते । ततः एकायनशाखायां मन्त्रभागः ब्राह्मणभागः इत्यपि विभागोऽवधार्यते ॥

छान्दोग्योपनिषदि भूमविद्यायां एकायनमिति पदं श्रूयते । तस्य नीतिशास्त्रमिति शाङ्करं व्याख्यानम् । प्रसिद्धिविरुद्धं तदिति श्रुतप्रकाशिकायां लिखितमस्ति ॥

विष्णुसहस्रनामभाष्ये कूरेशविरचिते अस्याः श्रुतेः वाक्यानि बहून्युपात्तानि समुपलभ्यन्ते। तत्र सर्वत्र मूले इत्येव व्यवहारो दृश्यते। ईश्वरसंहितायामपि (२)—

**महतो वेदवृक्षस्य मूलभूतो महानयम्।**
**स्कन्धभूता ऋगाद्यास्तु शाखाभूतास्तथा परे॥**
**मूलश्रुतिं यथावच्च ऋषयोऽध्यापितास्तु ते।**
**ततस्ते ऋषयस्त्वष्टौ लोकानां हितताम्यया॥ इति च।**

अत्र महतो वेदवृक्षस्येति पद्ये इदं पदं मूलश्रुतिपरमित्यवगम्यते। न्यायपरिशुद्धौ तु (२९.४)—इदं वचनं भारतस्थमित्युदाहृत्य इदंपदं पाञ्चरात्रशास्त्रपरमित्यभिसंधाय मूलभूत इति पदस्य वेदमूलभूतांशस्य उपबृंहणमिति व्याख्यानं दृश्यते॥

इमं च वेदभेदं भोजराजबलदेवाचार्यादयश्च विविञ्चते (पा. ४)-

**यो वेदवृक्षं वहुमूलशाखं**
**नानाफलर्थिद्विजसंघसेव्यम्।**
**पूर्वश्रवानुश्रवभेदभिन्नं**
**आरोपयन्तं पुरुषं प्रपद्ये॥ इति॥**

आगमप्रामाण्ये — "स खलु भगवानमोघसहजसंवेदनसाक्षाद्भवदखिलवेदराशिः विप्रकीर्णविविधविध्यर्थवादमन्त्रात्मकानेशाखाध्ययनधारणादिष्वधीरधियो भक्तानवलोक्य तदनुकम्पया लघुनोपायेन तदर्थं संक्षिप्योपदिदेश। यथाऽऽहुः—

**वेदान्तेषु यथा सारं संगृह्य भगवान् हरिः।**
**भक्तानुकंपया विद्वान् संचिक्षेप यथासुखम्॥**

इति। तत्रैवान्यत्र—"आदिकाले भगवान् प्रलीननिखिलकरणकलेबरादिभोगोपकरणचेतनेतरायमाणजीवजातावलोकनजनितमहानुग्रहः सकलमपि जगदुपजनय्य तदभिलषितसमस्तसांसारिकसंपत्प्राप्त्युपायप्रकाशन-

बहुलांत्रयीमेकतस्समुपदिश्य विविधदुरितपरंपराकीर्णभवार्णव निमग्नान-वलोकयन् परमकरुणतया तप्तमानसः परमनिश्श्रेयससाधनस्वाराधनाव-बोधसाधनीभूताः पञ्चरात्रसंहिताः सनत्कुमारनारदादिभ्योऽभ्यवोचत्" इति ॥

अर्चाविचारः.

**शौनकोऽहं प्रवक्ष्यामि नित्यं विष्णवर्चनं परम् ।**
**प्र वः पान्थमन्धसो धियेत्यर्धर्चस्य विधानतः ॥**

इति शौनकसूत्रम् ॥ (पा. ४६) ॥ एवं बोधायनवैखानसप्रभृतयः प्रायः कल्पसूत्रकाराः श्रौतपथपरिनिष्ठिताः सर्वेऽपि विष्णवर्चनप्रतिष्ठादिकं सूत्र-यन्ति । असूत्रयतामप्यापस्तम्बादीनाम् "अनुक्तमन्यतो ग्राह्यम्" इति न्यायेन सम्मतोऽयमर्थः, यत इदमुच्यते पाञ्चरात्ररक्षायाम् "तदुक्तिरहित-सूत्रनिष्ठानामन्यापेक्षायां पाञ्चरात्रशास्त्रं साधारणम्" इति ॥ (१४)

**प्र वः पान्तमन्धसो धियायते**
**महे शूराय विष्णवे चार्चत ।**
**या सानुनि पर्वतानामदाभ्या**
**महस्तस्थतुरर्वतेव साधुना ॥ इति** (ऋक्सं. १-१५५-१)

इति ॥ अयं मन्त्रः अच्छावाकशस्त्रतया द्वादशाहे विनियुक्तः । येषु मन्त्रेषु विधिपरत्वं न दृश्यते तेष्वपि विनियुक्तत्वेन मन्त्रत्वेन तत्समुदाय त्वेन वा विधिपरत्वं नापक्रान्तम् । अपितु अनुवादलिङ्गप्राप्तार्थत्वा-दिभिः । अपरथा "वसन्ताय कपिञ्जलानालभेत, यंयं क्रतुमधीते तेन-तेनास्येष्टं भवति" इत्यादौ मन्त्रत्वेऽपि विनियुक्तत्वेऽपि विधिपरत्वस्य नय-वित्सम्मतत्वात्। सर्वस्यापि वेदस्य जपाध्ययने विनियुक्तत्वात् क्रतूनामेव निर्मूलत्वप्रसङ्गाच्च । तस्माद्विधिपरत्वे विष्णवर्चनं श्रुतिसिद्धं भवति ॥

विशिष्टमन्त्रार्थः याज्ञिकसम्प्रदायसिद्धः वेदभाष्ये प्रदर्शितो यथा—हे अध्वर्य्वादयः वः युष्माकं सम्बन्धि पान्तं पालनस्वभावं

अन्धसः अन्नं सोमरूपं प्रार्चत प्रकर्षेण सम्पादयत । कस्मै? धियायते स्तुतीरिच्छते शूराय विक्रान्तायेन्द्राय विष्णवे व्यापकाय एतन्नामकाय देवाय । कस्तयोरतिशयः? उच्यते—या याविन्द्राविष्णू पर्वतानां प्रीणनवतां पूरणवतां वा लोकानां सानुनि समुच्छ्रिते प्रदेशे तस्थतुः तिष्ठतः अदाभ्या अदम्भनीयौ महः महान्तौ साधुना अभिमतदेश-प्रापणसमर्थेन अर्वता वेगवता अश्वेन यथा उच्छ्रितं प्रदेशमारोहति तद्वदुच्छ्रितं पदमारूढौ । तस्मात्ताभ्यामर्चत ॥

एतेन विष्णोरर्चनं सम्पन्नमपि "अर्धर्चस्य विधानतः" इति स्मरणेन शौनकसम्मतोऽर्थस्त्वेष —हे मनुष्याः व सम्बन्धिना पान्तं पालनसमर्थेन अन्धसः अन्नेन अदनीयेन भोग्यवस्तुना धियायते स्तोतव्याय महे महते शूराय सर्वशक्तिसम्पन्नाय विष्णवे प्रार्चत प्रकर्षेण पूजयत विष्णुपूजां कुरुत इति विधिः । अस्योपबृंहणभूतं इतिहासोत्तमे महाभारते शान्तौ ३५८ अध्याये वचनम्—

**ऋग्वेदपाठे पठितं व्रतमेतत्सुदुश्चरम् ।**
**सुपर्णाच्चाप्यधिगतः धर्म एष सनातनः ॥ इति ॥**

मरीचिनाऽपिविमानार्चनकल्पे (११२) इयं श्रुतिः भगवदर्चनप्रमाणतया समुपात्ता । एतदभिप्रेत्यैव विष्ण्वर्चनमपि प्रत्यक्षश्रुतिसिद्धमित्यनुगृहीतं पाञ्चरात्ररक्षायाम् ॥ (१२१)

एष एव हि भगवान् शौनकः विष्णुधर्मे अर्चावतारविचारं सम्यगाहेति स्तोत्रभाष्ये (५४) धृतानि वचनानीमानि —

**यादृशे तु मनः स्थैर्यं रूपे बध्नाति चक्रिणः ।**
**नृसिंहवामनादीनां तादृशं कारयेद्बुधः ॥**
**सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् ।**
**कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः ॥**

तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत् ।
तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् ॥
विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम् ।

इति । (१०३) अत्रहि प्रतिष्ठादिवशात् मुख्यावतारत्वं विवक्षितम् । उक्तं हि भगवच्छास्त्रे—

सर्वातिशायि षाड्गुण्यं संस्थितं मन्त्रबिम्बयोः ।
तेनार्च्यो भगवान् साक्षात् नोपचारधिया क्वचित् ॥

इति ॥ एवमेव शौनकोऽपि—

देवो वैकुण्ठनाथस्तु अनन्तासनसंस्थितः ।
सेव्यः श्रीभूमिनीलाभिः प्रादुर्भावैस्तथाऽखिलैः ॥
बिम्बाकृत्यात्मना बिम्बे समागत्यावतिष्ठते ।
अर्चाऽपि लौकिकी या सा भगवद्भावितात्मनाम् ॥
मन्त्रमन्त्रेश्वरन्यासात्साऽपि षाड्गुण्यविग्रहा ।

इति । बिम्बस्याकृतिरिवाकृतिर्यस्य सः ! तादृशेनात्मना दिव्यमङ्गलविग्रहेण समागत्य क्षीरनीरन्यायेनाविभागं प्राप्य संनिधत्ते । षाड्गुण्यविग्रहा षाड्गुण्यप्रकाशकशुद्धसत्त्वद्रव्यमयीत्यर्थः ॥

सोऽयमर्चासंप्रदायः सर्वोपनिषत्संमतः अनादिसंप्रदायसिद्धः क्षिप्रसिद्धिप्रदः इति श्रीशंकराचार्येणापि सूचितः । यथा—छान्दोग्ये (१-१-१) "ओमित्येतदक्षरमुद्गीथमुपासीत । ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठं, तस्मिन् हि प्रयुज्यमाने स प्रसीदति प्रियनामग्रहण इव लोकः । तथार्चादिवत् परमात्मनः प्रतीकं संपद्यते । एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासनं श्रेष्ठमिति सर्व वेदान्तेष्ववगतम्" इति ॥ भाषितमस्ति ॥

पाञ्चरात्ररक्षायामपि (११४) "एवं च परव्यूहप्रभृतिचित्तालम्बनेषु प्रपत्त्येकनिष्ठाः नाथमुनिप्रभृतयः सुलभतमत्वेन परिपूर्णत्वा

विशेषाच्च समाहितचित्तानामप्यनुसंधेयमर्चावतारमेव चेतसश्शुभाश्रयमालम्बन्ते । तत्र यद्यपि साक्षात्कारहेतुभूतो मन्त्रविशेषः उच्छिन्नसंप्रदाय इति वृद्धा विदामासुः । तथापि स्वावगतैः मन्त्रविशेषैः अमन्त्रकं वा यथासंप्रदायं तदनुसंधानमवर्जनीयमेव" इत्याभिधीयते । ततश्चोपासकानां प्रपन्नानां च परिग्राह्योऽयमर्चासंप्रदायः अनादिसिद्ध इति ॥

अस्य च संप्रदायस्यानादिसिद्धत्वादेव प्राभाकरमीमांसकानामेतन्निराकरणं संश्लिष्यते । ते हि मीमांसकाः देवतां चेतनलक्षणां कांचि, न्नाभ्युपगच्छन्ति । तदयं संग्रहः—

**विग्रहो हविरादानं युगपत्कर्मसन्निधिः ।**
**तृप्तिः फलप्रदानं च देवतानां न विद्यते ॥**

इति विग्रहादिपञ्चकरहितदेवतावादः । अचेतनदेवतावाद इति यावत् । तस्मिन् हि वादे वेदोक्तयागादिक्रतूनां देवताराधनरूपतां निराकुर्वन्ति । तस्य च निराकरणस्य प्रतियोगितया मूलं "यज देवपूजायाम्" इत्यनाद्यार्यसंप्रदायसमागतं धातुपाठलक्षणं स्मरणमेव । तस्माद्विग्रहादिविशिष्टदेवतापूजाऽनादिसंप्रदायसिद्धा । एतद्विचारः प्रकरणपञ्चिकायां गौडमीमांसकशालिकनाथप्रणीतायां विस्तरेणावगतन्तव्यः । निरूपितं चैतत् (४२६) प्रागेव ॥

अर्चनंचेदं सर्वाधिकारिकम् । तथाहि—

**सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।**
**विष्णोरालयविन्यासप्रारम्भादेव नश्यति ॥**

इति विष्णुधर्मः (८३-२०) सहस्र. भा. (६०४) । दक्षोऽपि—

**ध्यायेन्नारायणं देवं स्नानादिषु च कर्मसु ।**
**प्रायश्चित्तिर्हि सर्वस्य दुष्कृतस्येति वै श्रुतिः ॥**

इति ॥ अन्यत्रापि महतामपि पातकानां प्रायश्चित्ततया विधीयते (पा. ८२).

आपीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् ।
पातकान्याशुनश्यन्ति किंपुनस्तूपपातकम् ॥ इति ॥

तथा—पौष्करसंहितायामपि—

सन्दर्शनादकस्माच्च पुंसां संमूढचेतसाम् ।
कुवासना कुबुद्धिश्च कुतर्कनिचयश्च यः ॥
कुहेतुश्च कुभावश्च नास्तिकत्वं लयं व्रजेत् ॥

इति ॥ पुण्डरीकसंवादे—

ये नृशंसा दुरात्मानः पापाचाररतास्तथा ।
तेऽपि यान्ति परं धाम नारायणसमाश्रयाः ॥ इति ॥
समस्तलोकनाथस्य देवदेवस्य शार्ङ्गिणः ।
साक्षात् भगवतो विष्णोः पूजनं जन्मनः फलम् ॥

इत्यष्टाक्षरब्रह्मविद्या नारदीया (पाञ्च—१२३).

अर्चनं सुकरम्.

यथा युवानं राजानं यथा च मदहस्तिनम् ।
यथा च पुत्रं दयितं तथैवोपचरैद्धरिम् ॥

इत्यादिवचनैः सुदुश्चरतमत्वाववगमेऽपि बहुसुकरम्—

यो न बित्तैः न विभवै र्न वासोभिर्न भूपणैः ।
तोष्यते हृदयेनैव कस्तमीशं न पूजयेत् ॥

इति विष्णुधर्मः वचनात् ॥(९०-९६)—

दीपान्तमर्चनं प्रोक्तं नैवेद्यान्तं तु पूजनम् ।
वल्यन्तं शान्तिकं प्रोक्तं पूजा हि त्रिविधोच्यते ॥

इति कामिकागमे ॥ (२-३७७).

भक्तैरणवप्युपहृतं प्रेम्णा भूर्यैव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥

पृथिवीं रत्नसंपूर्णां यः कृष्णाय प्रयच्छति ।
तस्याप्यन्यमनस्कस्य सुलभो न जनार्दनः ॥
अन्यत्पूर्णादपांकुम्भादन्यत्पादावनेजनात् ।
अन्यत्कुशलसंप्रश्नान्नचेच्छति जनार्दनः ॥

इति स्तोत्ररत्नभाष्योदाहृतं महाभारतवचनम् ॥ तथा द्रोणपर्वणि (२०० अ.)—

अञ्जलिः परमा मुद्रा क्षिप्रं देव प्रसादिनी ॥ इति ॥

भगवद्गीताऽपि—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ इति ॥
भावशुद्धिर्मनुष्याणां प्रमाणं सर्ववस्तुषु ।
अन्यथाऽऽलिङ्ग्यते कान्ता स्नेहेन दुहिताऽन्यथा ॥

इति विष्णुतत्त्वे इति सहस्रनामभाष्यम्। तस्मात् ॥

रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना ।
हिंसादिरहितः कायः केशवाराधनं त्रयम् ॥

इत्याश्वमेधिके ॥

धर्मं भजस्व सततं त्यज भूतहिंसां
सेवस्व साधुपुरुषान् जहि कामशत्रून् ।
अन्यस्य दोषगुणचिन्तनमाशु मुञ्च-
सत्यं वदार्चय हरिं भज जन्मलाभम् ॥

इति स्मृतिरत्नाकरे काञ्चनमालिनिवाक्यमित्युदाहृतम् ॥

अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदया पुष्पं क्षमा पुष्पं विशेषतः ॥
शान्तिः पुष्पं तपः पुष्पं ध्यानं पुष्पं तथैवच ।
सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं सदा ॥

इति पद्मपुराणवचनं तात्पर्यचन्द्रिकायामुदाहृतम् ॥

लक्ष्मीपुरं श्रीनिवाससद्विपाश्चिदपाश्रिमात्। सकलागमसारेण संपूर्णः दर्शनोदयः.

---

ग्रन्थोऽयं दशभिः शुभैः प्रकरणैः संपूरितोऽत्यद्भुतः
तत्तद्दर्शनतत्त्वसंग्रहकृतां विद्यावतां स्यात्कृते ।
प्राज्ञानामपि च प्रचारणविधौ विक्षेपविश्रान्तये
तल्लोकोत्तरलौकिकोपकृतितः सम्प्रीयतामच्युतः ॥

के वा कुतो वा वस्त्वत्र नवमुत्प्रेक्षितुं क्षमाः ।
इदं विचित्रविन्यासं प्राचां वाचां चयैः कृतम् ॥

नाहमेतादृशग्रन्थसन्दर्भोपायपुष्कलः ।
यत्नपूर्त्या तु सुकृतमसमं मम पुष्कलम् ॥

प्रपञ्चाभ्युदयस्साक्षात् सर्वशास्त्रार्थनिर्णयः ।
इति दृष्ट्या प्रबन्धोऽयं विशिष्टक्रमलक्षणः ॥

यत्करोमि यदश्नामि यज्जुहोमि ददामि यत् ।
यत्तपस्यामि हे कृष्ण तत्करोमि त्वदर्पणम् ॥

इति श्रीमत्समस्तभूमण्डलमण्डनायमान निखिलदेशावतंस कर्णाटकसंपदधिष्ठानभूत श्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमान दिव्यरत्नसिंहासनाधीश्वरे यदुकुलतिलके श्रीमन्महाराणीवाणीविलासमान्निधानगर्भशुक्तिमुक्ताफलायमाने श्रीमद्राजाधिराज महाराज चामराजतपाराशिफलभूते श्रीमन्महाराजाधिराज महाराज तुरीयकृष्णराजे राज्यं परिपालयति शालिवाहनशके षट्पञ्चाशदुत्तरायामष्टादशशत्यां तस्यैव महाराजस्य पञ्चाशत्संवत्सरवर्षवर्धन्तीमहोत्सवसमये तदीयास्थानधर्माधिकारिणा सकलविद्याविशारदेन महामहोपाध्याय पण्डितरत्नाद्यनेकबिरुदावली समलंकृतेन श्रीवत्सवंशमुक्तामणिना सदाचार्यसत्कटाक्षपात्रीभूतेन मानमेयरहस्य श्लोकवार्तिक शाबरभाष्यभूषणाद्यनन्त प्रबन्धनिर्माणधुरन्धरेण लक्ष्मीपुराभिजनेन श्रीनिवासाचार्येण प्रणीतः प्रकाशितः
दर्शनोदयः जगति विजयताम्
श्रीवासुदेवः प्रीयताम्.

# शुद्धिपत्रम्

| पु. | पं. | शुद्धम् |
|---|---|---|
| 4 | 11 | सर्वाभिनिवेश |
| 24 | 12 | तुच्छलक्षणा |
| 30 | 21 | वर्धयन्नेव |
| 42 | 13 | नैरात्म्यम् |
| 47 | 14 | सुखदुःख |
| 55 | 18 | सहकारि |
| 58 | 20 | प्रतिपादना |
| 59 | 19 | ईश्वरोदित |
| 67 | 18 | कोपो |
| 77 | 18 | व्यवस्थितिः |
| 82 | 33 | नोपलब्धि |
| 103 | 13 | तस्यसंप्र |
| 105 | 5 | शरावोद |
| 105 | 14 | वादाना |
| 108 | 15 | विप्रकृष्यते |
| 111 | 19 | जीवपरिणामवादिनो हैरण्यगर्भावा |
| 115 | 11 | लक्षणाध्यास |
| 117 | 20 | प्रथमं |
| 119 | 12 | लब्धुमह |
| 119 | 22 | विविक्तयो· |
| 122 | 21 | एतत्सक |
| 124 | 6 | उपादिश्यते |
| 126 | 13 | सचास्य स |
| 129 | 18 | बाधने |
| 129 | 19 | मानिर्वाच्या |
| 130 | 14 | तोवैध |
| 132 | 19 | परमार्थ |
| 135 | 17 | लापयुक्तिः |
| 138 | 5 | त्वंशेन |
| 144 | 4 | एवंगप |
| 147 | 20 | तामास्तिक |
| 149 | 17 | गतोमार्गः |
| 149 | 21 | परिदृश्य |
| 151 | 14 | निर्धारयि |
| 151 | 3 | शाबरं |
| 162 | 16 | कंचिदर्थं |
| 167 | 15 | ह्यतात्मा |
| 175 | 23 | रावसरे |
| 178 | 8 | नञर्थेन |
| 197 | 19 | देजुहोति |
| 203 | 21 | जिह्वाघ्राण |
| 209 | 14 | निराक्षेपः |
| 213 | 19 | नास्तत्त |
| 218 | 17 | नुभाविकी |
| 223 | 10 | पूर्वात्व |
| 225 | 22 | गार्हत्व |
| 228 | 11 | चारिणी |

| पु. | पं. | शुद्धम् |
| --- | --- | --- |
| 228 | 17 | ब्रह्मेश्व |
| 232 | 13 | गुणाधिकर |
| 232 | 22 | पुरुषैक्येपि |
| 238 | 16 | पूर्वकमे |
| 242 | 11 | नोद्देशेन |
| 256 | 16 | अर्थस्वभा |
| 267 | 21 | श्चौपनिष |
| 276 | 23 | पदार्थेण |
| 291 | 19 | निष्क्रीणीष्वे |
| 294 | 18 | विवक्षाया |
| 295 | 6 | मनुसृत्या |
| 295 | 19 | प्रोक्षणीय |
| 296 | 6 | विशेषेण |
| 296 | 22 | विधिर्नित्यः |
| 306 | 20 | एतेदर्शन |
| 311 | 2 | कर्माविचा |
| 311 | 12 | देवताधिक |
| 312 | 7 | अङ्गत्वेऽपि |
| 315 | 18 | सविशेषत्वं |
| 318 | 22 | वाक्यद्वयं |
| 344 | 3 | सविकल्पकं |
| 344 | 10 | भेदाभेदस |
| 352 | 15 | दुरुद्दर |
| 365 | 1 | येनयुक्ति |

| पु | पं. | शुद्धम् |
| --- | --- | --- |
| 365 | 22 | व्यावृत्य |
| 391 | 14 | साम्यपदा |
| 421 | 19 | प्रवृत्तिः |
| 430 | 16 | दनारम्भ |
| 430 | 23 | प्रभाकर |
| 431 | 11 | नस्यारम्भ |
| 431 | 23 | मुपपाद्य |
| 432 | 10 | कर्मविचा |
| 435 | 12 | अथकारण |
| 437 | 18 | गीतश्रवण |
| 439 | 4 | तिरर्थश्च |
| 448 | 9 | मर्थोपादा |
| 453 | 9 | रोति । यःक |
| 467 | 6 | विकल्प्य |
| 468 | 14 | करणनियो |
| 497 | 16 | वचनमा |
| 499 | 20 | त्यतिष्ठेयं |
| 502 | 1 | धर्मज्ञानै |
| 509 | 7 | त्यन्तमेव |
| 515 | 3 | तायामपि |
| 515 | 18 | कानेकशा |
| 519 | 16 | वगन्तव्यः |
| 520 | 17 | चरेद्धरिम् |